र्चिरेवाग्नेर्नक्तं ददृशे न धूमः" [ तै० ब्रा० २।१।२।९-१० ] इति। अस्मा-
ल्लोकादुत्क्रम्याग्निरादित्यं गतो रात्रावादित्योऽस्तम्" इत्येतदुपपादयितु-
मिदम्। उभयमपि दृष्टविरुद्धमुच्यते। तस्मान्नैषावधारणा सिध्यतीति।

अपरो दृष्टविरोधः—"न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा" इति [ तै० सं० १।४।११ ]।

अक्रियार्थत्वादनर्थकम्। अथायमर्थो नैवैतज्ज्ञायते, किं वा ब्राह्मणा वयमुताब्राह्मणा वेति प्रत्यक्षविरुद्धमप्रमाणम्।

अपरः शास्त्रदृष्टेन विरोधः। "को हि तद्वेद यद्यमुष्मिंल्लोकेऽस्ति वा न वेति" [ तै० सं ६।१।१।१ ]। यदि प्रश्नोऽयम्, अक्रियार्थत्वादनर्थकः। अथाप्यनवक्लृप्तिः, शास्त्रदृष्टेन विरोधः। अतः प्रत्यक्षविरुद्धप्रमाणम् ॥ २ ॥

ननु तर्कव्याहारादिना क्रियार्थत्वं कल्प्यतामित्याशङ्क्य तत्सूक्ष्मत शास्त्रविरोधं व्याचष्टे—
नियमविरोधमेवेति। वाङ्मनसयोः प्राधान्यादितरैरिन्द्रियैरपि तच्चरितमनुवर्तितव्यम् इति वाक्यार्थः स्यात्। ततश्च निषेधशास्त्रविरोध इत्याह—तच्चेति। ननु क्वाचित्कबाधसम्भवेऽपि नात्यन्तबाधः विकल्पोपपत्तेः। न च विधेर्विशेषविषयत्वान्निषेधस्य च सामान्यविषयत्वादतुल्यबलत्वेन विकल्पासम्भव इति वाच्यम्। यथाकथञ्चिद्विधिशास्त्रार्थं वक्तव्येन विकल्पशब्देनाभिहितत्वात् इत्यत आह—न चेति। विधिशास्त्रस्य कल्प्यत्वात् क्लृप्तं निषेधशास्त्रं विधिविषयमप्याक्रम्य तत्कल्पनामेव निरुणद्धीति विध्यनवकाश एवेत्यभिप्रेत्याह—वैषम्यादिति। तदेवाह—एक इति।

अन्यो निषेध्यः प्रत्यक्षः कल्पः। सूत्रकारेण हि सिद्धान्तस्तेन मन इत्यादावभिहितस्य शास्त्रविरोधस्य "अप्रामा चानुपपत्तिः" इत्यादिना कर्तव्यतापरत्वेन गुणवादत्वेन च परिहारमुक्त्वा गुणवादनिमित्तं च "रूपात् प्रायात्" इति दर्शयित्वा पुनस्तस्योदाहरणान्तरेऽव्याप्तिमाशङ्क्य "दूरभूयस्त्वात्" इत्यनेन परिहरिष्यते। तदनुसारेण दृष्टविरोधात् इत्यवयवं व्याख्यातुमुदाहरति—
दृष्टविरोध इति। उदाहरणमतत्त्वदार्थमाह—अस्मादिति। यस्मात् ह्यग्निरादित्यं गच्छति तस्मादेव "धूम एवाग्नेर्दिवा ददृशे नार्चिः", यस्माच्च रात्रावादित्योऽग्निं तस्मादेव 'अर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इत्येवम् एतदुपपादयितु यदेतद्वाक्यं तदिहोदाहरणमित्यर्थः। तदुपपादकं द्योरपि (?) स श्वर्योदयतात्पर्यसन्निधानम्।' उपपादनीयान्तरं सूचयितुं तावदितुरकम् (?)।

एतदनन्तरं योजयति—तदिति। ददृश इति लड्यें लिट्प्रयोगात् धूम एव अर्चिरेवेति यदपि दृष्टविरुद्धं रात्रिन्दिवं धूमार्चिषो दर्शनादित्यर्थः। ततश्च यदनेन वाक्येन

**गर्गत्रिरात्रब्राह्मणं प्रकृत्येत्युक्तम्।** अहीनविशेषविधायि ब्राह्मणं प्रकृता इत्यर्थः। अप्रामाण्यसूत्रं योजयति—**यदीति।** यदि नाम गर्गत्रिरात्रब्राह्मणाध्ययनकाले विद्यमानाया एव मुखशोभाया: सङ्कीर्तनं तथाप्यक्रियार्थत्वादानर्थक्यमित्यर्थः, इदानीं भूतानुवादत्वमेवात्र नास्तीति दर्शयितुं परपक्षमनुवदति—**अथेति।** अध्ययनस्यार्थावबोधपर्यन्तस्य फलं मुखशोभनेनानूद्यते इत्यर्थः। तदध्ययनानन्तरभाविन्या मुख्याया मुखशोभाया अनुपलम्भादसदनुवाद इति फलाभावादिति सूत्रावयवयोजनया दूषयति—**तत्र** इति। कालान्तरफलत्वेन योग्यानुपलब्धिविरोधपरिहारं शङ्कते—**कालान्तरेति।** "शोभतेऽस्य मुखम्" इति फलस्यानन्तर्यश्रवणात्—**नैवमिति।** तथैतदवयवेन दूषयति—**न हीति।** तदनेन यथाभूतं मुखशोभादिफलत्वेन कीर्तितं तथाभूतस्याभावादानर्थक्यमिति सूत्रं योजितम्। शोभतेऽस्येति फलविधित्वादेव फलस्य कालान्तरभावित्वावगमाद् वर्त्तमानापदेश एवायं न भवतीति शङ्कते—**विधिः स्यादिति।**

अधिकरणान्तरविरोधेन दूषयति—**नैषेति।** तत्र हेतुः—संस्कारेति। तत्र हि "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" "तीर्थे स्नाति तीर्थमेव हि सजातानां भवति" "वर्म वा एतद् यज्ञस्य क्रियते यत् प्रयाजानुयाजा इज्यन्ते वर्म यजमानस्य भ्रातृव्याभिभूत्यै" इत्यादीनि द्रव्यसंस्कारकर्मविषयाणि वाक्यान्युदाहृत्य किमेते फलविषया उतार्थवादा इति संशय्य पर्णत्वादेरप्राप्तत्वेनावश्यविधेयस्य फलाकाङ्क्षायां साक्षात्पुरुषार्थरूपश्रुतफलान्वयसम्भवे पारम्पर्यपुरुषार्थरूपक्रतूपकाराख्यफलकल्पनायोगात् फलविधित्वमेवेति पूर्वपक्षयित्वा यथाकथञ्चित् पुरुषार्थरूपफलवत्त्वेन विध्यनुपपत्तिशान्तेः परिणामकल्पनानुपपत्तेः। यथाश्रुतवर्तमानफलकीर्तनस्य चानुपलब्धिविरोधान्न फलविधित्वमिति सिद्धान्तयिष्यते। तथैहापि विद्यायाः कर्मानुष्ठानयोग्यपुरुषकरणात् संस्कारत्वेन निराकाङ्क्षत्वान्न शोभत इत्यादेः फलविधित्वं फलार्थवादत्वमेवेति भावः। पौनरुक्त्यात् तदत्र न विचारयितव्यमत आह—**इह त्विति।** इति विन्यात इति विपरिणामस्यानुषङ्गः। **भूतानुवादः** विद्यमानसिद्धानुवादः। **अर्थवादः** असदनुवादः। उदाहरणान्तरमाह—**आस्येति।** वेदाध्ययनज्ञानवतो राजवत् पुत्रवत्त्वसङ्कीर्तनस्याक्रियार्थत्वेनासदर्थत्वेन चाप्रामाण्योपपत्तेरित्यर्थः। विषयान्तरे तु स्वार्थपरत्वे दोषान्तरमप्याह—**अन्येति।** तत्राप्याद्यं सूत्रं तत्प्रदर्शनपूर्वं योजयति—**यदीति।** सर्वकामावाप्तिसर्वलोकाभिजयहेतुत्वरणादीनां क्रिया तच्छेषत्वाभावात् तद्विषयं वाक्यमनर्थकमित्यर्थः। यद्यपि फलविधित्वमेषां पूर्वसूत्रेणैव निरस्तप्रायं तथाप्यनुपेता दोषान्तरं वक्तुमुपक्रमयति—**अथेति।** अवान्तरानर्थक्यसूत्रं योजयन्नुपक्रमयति—**अन्येषामिति।** तत्र कर्तव्यताविध्यनुग्रहाय पूर्वोक्तत्वादिवाक्यानामेवाप्रामाण्यमिति भावः। आनर्थक्यमेव

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| June, 1932. | १८५४ शकीये ज्यैष्ठे १५श-वर्षस्य २य-संख्या | Vol. XV. No. 2. |
|---|---|---|

## शकुन्तलोपाख्यानम्

[ महाभारतीयम् ]

### अष्टषष्टितमोऽध्यायः

जनमेजय उवाच

त्वत्तः श्रुतमिदं ब्रह्मन् देवदानवरक्षसाम् ।
अंशावतरणं सम्यग् गन्धर्वाप्सरसां तथा ॥१॥
इमन्तु भूय इच्छामि कुरूणां वंशमादितः ।
कथ्यमानं त्वया विप्र विप्रर्षिगणसन्निधौ ॥२॥

वैशम्पायन उवाच

पौरवाणां वंशकरो दुःषन्तो नाम वीर्यवान् ।
पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ॥३॥
चतुर्भागं भुवः कृत्स्नं यो भुङ्क्ते मनुजेश्वरः ।
समुद्रावरणांश्चापि देशान् स समितिञ्जयः ॥४॥
आम्लेच्छावधिकान् सर्वान् स भुङ्क्ते रिपुमर्द्दनः ।
रत्नाकरसमुद्रान्तांश्चातुर्वर्ण्यजनावृतान् ॥५॥
न वर्णसङ्करकरो नाकृष्याकरकृज्जनः ।
न पापकृत् कश्चिदासीत्तस्मिन् राजनि शासति ॥६॥

---

न कृष्याकरकृत् । कृषिकृत् न, भुवोऽकृष्टपच्यत्वात्, आकरः सुवर्णादिधातूत्पत्तिस्थानं तत्रापि यत्नं न करोति, पृथिव्या रत्नैर्धातुभिश्च पूर्णत्वात् ॥६॥

सुदूरमनुजग्मुस्तं पौरजानपदास्तदा ॥
न्यवर्तन्त ततः पश्चादनुज्ञाता नृपेण ह ॥१०॥
सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः ।
महीमापूरयामास घोषेण त्रिदिवं तथा ॥११॥
स गच्छन् ददृशे* धीमान् नन्दनप्रतिमं वनम् ।
बिल्वार्कखदिराकीर्णं कपित्थधवसङ्कुलम् ॥१२॥
विषमं पर्वतप्रस्थैरश्मभिश्च समावृतम् ।
निर्जलं निर्मनुष्यञ्च बहुयोजनमायतम् ॥१३॥
मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः ।
तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः ।
लोडयामास दुःषन्तः सूदयन् विविधान् मृगान् ॥१४॥
बाणगोचरसम्प्राप्तांस्तत्र व्याघ्रगणान् बहून् ।
पातयामास दुःषन्तो निर्बिभेद च सायकैः ॥१५॥
दूरस्थान् सायकैः कांश्चिदभिनत् स नराधिपः ।
अभ्यासमागतांश्चान्यान् खड्गेन निरकृन्तत ॥१६॥
कांश्चिदेणान् समाजघ्ने * शक्त्या शक्तिमतां वरः ।
गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः ॥१७॥
तोमरैरसिभिश्चापि गदामुसलकम्पनैः ।
चचार स विनिघ्नन् वै वन्यांस्तत्र मृगद्विजान् ॥१८॥
राज्ञा चाद्भुतवीर्येण योधैश्च समरप्रियैः ।
लोड्यमानं महारण्यं तत्यजुश्च मृगाधिपाः ॥१९॥
तत्र विद्रुतयूथानि हतयूथपतीनि च ।
मृगयूथान्यथौत्सुक्याच्छब्दं चक्रुस्ततस्ततः ॥२०॥
शुष्काश्चापि नदीर्गत्वा जलनैराश्यकर्शिताः ।
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः ॥२१॥

---

* समाजघान † ददर्श

क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि।
केचित्तत्र नरव्याघ्रैरभक्ष्यन्त बुभुक्षितैः ॥२२॥
केचिदग्निमथोत्पाद्य समिध्य * च वनेचराः।
भक्षयन्ति स्म मांसानि प्रकुट्य विधिवत्तदा ॥२३॥
तत्र केचिद् गजा मत्ता बलिनः शस्त्रविक्षताः।
सङ्कोच्याग्रकरान् भीताः प्रद्रवन्ति स्म वेगिताः ॥२४॥
शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं बहु।
वन्या गजवरास्तत्र ममृदुर्मनुजान् बहून् ॥२५॥
तद्वनं बलमेघेन शरधारेण संवृतम्।
व्यरोचत मृगाकीर्णं राज्ञा हतमृगाधिपम् ॥२६॥

---

## सप्ततितमोऽध्यायः

### वैशम्पायन उवाच

ततो मृगसहस्राणि हत्वा विपुलवाहनः।
राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह ॥१॥
एक एवोत्तमबलः क्षुत्पिपासाश्रमान्वितः।
स वनस्यान्तमासाद्य † महच्छून्यं समासदत् ॥२॥
तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम्।
मनःप्रह्लादजननं दृष्टिकान्तमतीव च ॥३॥
शीतमारुतसंयुक्तं जगामान्यन्महद्वनम्।
पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ॥४॥
विपुलं मधुरारावैर्नादितं विहगैस्तथा।
प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतम्।
षट्पदाघूर्णिततलं लक्ष्म्या परमया युतम् ॥५॥

---

* 'संसाध्य' इति नीलकण्ठीयः पाठः। पाकादिना संस्कृत्य इति तद्व्याख्यानम्।

† 'महद्दीरिणमासदत्' इति पाठान्तरम्।

नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी ।
षट्पदैर्नाप्यपाकीर्णस्तस्मिन् वै काननेऽभवत् ॥६॥
विहगैर्नादितं पुष्पैरलङ्कृतमतीव च ।
सर्वर्त्तुकुसुमैर्वृक्षैः सुखच्छायैः समावृतम् ।
मनोरमं महेष्वासो विवेश वनमुत्तमम् ॥७॥
मारुतान्दोलितास्तत्र द्रुमाः कुसुमशालिनः ।
पुष्पवृष्टिं विचित्रां तु व्यसृजंस्ते पुनः पुनः ॥८॥
दिवस्पृशोऽथ सङ्घुष्टाः पक्षिभिर्मधुरस्वनैः ।
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः ॥९॥
तेषां तत्र प्रवालेषु पुष्पभारावनामिषु ।
रुवन्ति रावं विहगाः षट्पदैः सहिता मृदु ॥१०॥
तत्र प्रदेशांश्च बहून् कुसुमोत्करमण्डितान् ।
लतागृहपरिक्षिप्तान् मनसः प्रीतिवर्धनान् ।
सम्पश्यन् स महातेजा बभूव मुदितस्तदा ॥११॥
परस्पराश्लिष्टशाखैः पादपैः कुसुमाचितैः ।
अशोभत वनं तत्तु महेन्द्रध्वजसन्निभैः ॥१२॥
सिद्धचारणसङ्घैश्च गन्धर्वाप्सरसां गणैः ।
सेवितं वनमत्यर्थं मत्तवारणकिन्नरम् ॥१३॥
सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः ।
परिक्रामन् वने वृक्षानुपैतीव रिरंसया ॥१४॥
एवंगुणसमायुक्तं ददर्श स वनं नृपः ।
नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसन्निभम् ॥१५॥
प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम् ।
आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥१६॥
नानावृक्षसमाकीर्णं सम्प्रज्वलितपावकम् ।
यतिभिर्वालखिल्यैश्च वृतं मुनिगणान्वितम् ॥१७॥

अभ्यागारैश्च बहुभिः पुष्पसंस्तरसंस्तृम् ।
महाकच्छैर्वृहद्भिश्च विभ्राजितमतीव च ॥१८॥
मालिनीमभितो राजन् नदीं पुण्यां सुखोदकाम् ।
नैकपक्षिगणाकीर्णां तपोधनमनोरमाम् ।
तत्र व्यालमृगान् सौम्यान् पश्यन् प्रीतिमवाप सः ॥१९॥
तच्चाप्रतिरथः श्रीमानाश्रमं प्रत्यपद्यत ।
देवलोकप्रतीकाशं सर्वतः सुमनोहरम् ॥२०॥
नदीञ्चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः ।
सर्वप्राणभृतां तत्र जननीमिव * धिष्ठिताम् ॥२१॥
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम् ।
सकिन्नरगणावासां वानरर्क्षनिषेविताम् ॥२२॥
पुण्यस्वाध्यायसङ्घुष्टां पुलिनैरुपशोभिताम् ।
मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् ॥२३॥
तस्यास्तीरे भगवतः काश्यपस्य महात्मनः ।
आश्रमप्रवरं रम्यं महर्षिगणसेवितम् ॥ २४॥
नदीमाश्रमसम्बद्धं दृष्ट्वाश्रमपदं तथा ।
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥२५॥
अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया ।
नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥२६॥
मत्तबर्हिणसङ्घुष्टं प्रविवेश महद्वनम् ।
तत् स चैत्ररथप्रख्यं समुपेत्य नरर्षभः ॥२७॥
अतीव गुणसम्पन्नमनिर्देश्यञ्च वर्चसा ।
महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम् ॥२८॥
ध्वजिनीमश्वसम्बाधां पदातिगजसङ्कुलाम् ।
अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥२९॥

---

* अधिष्ठिताम् । 'विष्ठिताम्' इति पाठान्तरम् ।

सा तं दृष्ट्वैव राजानं दुःषन्तमसितेक्षणा ।
स्वागतं त इति क्षिप्रमुवाच प्रतिपूज्य च ॥४॥
आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि ।
पप्रच्छानामयं राजन् कुशलं च नराधिपम् ॥५॥
यथावदर्चयित्वाथ पृष्ट्वा चानामयं तदा ।
उवाच स्मयमानेव किं कार्यं क्रियतामिति ॥६॥
तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम् ।
दृष्ट्वा सर्वानवद्याङ्गीं यथावत् प्रतिपूजितः ॥७॥
आगतोऽहं महाभागमृषिं कण्वमुपासितुम् ।
क्व गतो भगवान् भद्रे तन्ममाचक्ष्व शोभने ॥८॥

शकुन्तलोवाच

गतः पिता मे भगवान् फलान्याहर्तुमाश्रमात् ।
मुहूर्त्तं संप्रतीक्षस्व द्रक्ष्यस्येनमुपागतम् ॥९॥

वैशम्पायन उवाच

अपश्यमानस्तमृषिं तथा चोक्तस्तया च सः ।
तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम् ॥१०॥
विभ्राजमानां वपुषा तपसा च दमेन च ।
रूपयौवनसम्पन्नामित्युवाच महीपतिः ॥११॥
का त्वं कस्यासि सुश्रोणि किमर्थञ्चागता वनम् ।
एवंरूपगुणोपेता कुतस्त्वमसि शोभने ॥१२॥
दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः ।
इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने ॥१३॥
एवमुक्ता तु सा कन्या तेन राज्ञा तदाश्रमे ।
उवाच हसती* वाक्यमिदं सुमधुराक्षरम् ॥१४॥

---

* हसन्ती ।

कण्वस्याहं भगवतो दुःषन्त दुहिता मता ।
तपस्विनो धृतिमतो धर्मज्ञस्य महात्मनः ॥१५॥

दुःषन्त उवाच

ऊर्द्ध्वरेता महाभागे भगवाल्लोँकपूजितः ।
चलेद्धि वृत्ताद्धर्मोऽपि न चलेत् संशितव्रतः ॥१६॥
कथं त्वं तस्य दुहिता सम्भूता वरवर्णिनी ।
संशयो मे महानत्र तन्मे छेत्तुमिहार्हसि ॥१७॥

शकुन्तलोवाच

यथायमागमो मह्यं यथा चेदमभूत् पुरा ।
शृणु राजन् यथातत्त्वं यथास्मि दुहिता मुनेः ॥१८॥
ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत् ।
तस्मै प्रोवाच भगवान् यथा तच्छृणु पार्थिव ॥१९॥

कण्व उवाच

तप्यमानः किल पुरा विश्वामित्रो महत् तपः ।
सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥२०॥
तपसा दीप्तवीर्योऽयं स्थानान्मां च्यावयेदिति ।
भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत् ॥२१॥
गुणैर्दिव्यैरप्सरसां मेनके त्वं विशिष्यसे ।
श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु ॥२२॥
असावादित्यसङ्काशो विश्वामित्रो महातपाः ।
तप्यमानस्तपो घोरं मम * कम्पयते मनः ॥२३॥
मेनके तव भारोऽयं विश्वामित्रः सुमध्यमे ।
संशितात्मा सुदुर्द्धर्ष उग्रे तपसि वर्त्तते ॥२४॥
स मां न च्यावयेत् स्थानात् तं वै गत्वा प्रलोभय ।
चर तस्य तपोविघ्नं कुरु मेऽविघ्नमुत्तमम् ॥२५॥

---

।यति ।

अभिवाद्य ततः सा तं प्राक्रीडदृषिसन्निधौ ।
अपोवाह च वासोऽस्या मारुतः शशिसन्निभम् ॥३॥
सागच्छत् त्वरिता भूमिं वासस्तदभिलिप्सती* ।
स्मयमानेव सव्रीडं मारुतं वरवर्णिनी ॥४॥
पश्यतस्तत्र तस्यर्षेरप्यग्निसमतेजसः ।
विश्वामित्रस्ततस्तान्तु विषमस्थामनिन्दिताम् ॥५॥
गृद्धां वाससि सम्भ्रान्तां मेनकां मुनिसत्तमः ।
अनिर्देश्यवयोरूपामपश्यद् विवृतां तदा ॥६॥
तस्या रूपगुणान् दृष्ट्वा स तु विप्रर्षभस्तदा ।
चकार भावं संसर्गे तया कामवशं गतः ॥७॥
न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता ।
तौ तत्र सुचिरं कालं वने व्यहरतामुभौ ॥८॥
रममाणौ यथाकामं यथैकदिवसं तथा ।
जनयामास स मुनिर्मेनकायां शकुन्तलाम् ॥९॥
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ।
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ॥१०॥
कृतकार्य्या ततस्तूर्णमगच्छच्छक्रसंसदम् ।
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ॥११॥
दृष्ट्वा शयानं शकुनाः समन्तात् पर्य्यवारयन् ।
नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ॥१२॥
†पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ।
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ॥१३॥
निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् ।
‡आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ॥१४॥

---

* अभिविस्मना † पर्यरक्षन् । ‡ आनाय्य ।

शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते ।
क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने ॥१५॥
निर्जने तु वने यस्माच्छकुन्तैः परिवारिता ।
शकुन्तलेति नामास्याः कृतञ्चापि ततो मया ॥१६॥
एवं दुहितरं विद्धि मम विप्र शकुन्तलाम् ।
शकुन्तला च पितरं मन्यते मामनिन्दिता ॥१७॥

शकुन्तलोवाच

एतदाचष्ट पृष्टः सन् मम जन्म महर्षये ।
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ॥१८॥
कण्वं हि पितरं मन्ये पितरं स्वमजानती ।
इति ते कथितं राजन् यथावृत्तं श्रुतं मया ॥१९॥

---

## त्रिसप्ततितमोऽध्यायः

राजोवाच

सुव्यक्तं राजपुत्त्रि त्वं यथा कल्याणि भाषसे ।
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते ॥१॥
सुवर्णमालां वासांसि कुण्डले परिहाटके ।
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥२॥
आहरामि-तवाद्याहं निष्कादीन्यजिनानि च ।
सर्वं राज्यं तवाद्यास्तु भार्या मे भव शोभने ॥३॥
गान्धर्वेण च मां भीरु विवाहेनैहि* सुन्दरि ।
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥४॥

---

* विवाहेनैहि ।

शकुन्तलोवाच

फलाहारो गतो राजन् पिता मे इत आश्रमात् ।
मुहूर्त्तं सम्प्रतीक्षस्व स मां तुभ्यं प्रदास्यति* ॥५॥

दुःषन्त उवाच

इच्छामि त्वां वरारोहे भजमानामनिन्दिते ।
त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम ॥६॥
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ॥
आत्मनैवात्मनो दानं कर्त्तुमर्हसि धर्म्मतः ॥७॥
अष्टावेव समासेन विवाहा धर्मतः स्मृताः ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥८॥
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ।
तेषां धर्म्मान् यथापूर्वं मनुः स्वायम्भुवोऽब्रवीत् ॥९॥
प्रशस्तांश्चतुरः पूर्वान् ब्राह्मणस्योपधारय ।
षडानुपूर्व्या क्षत्रस्य विद्धि धर्म्यानननिन्दिते ॥१०॥

---

* पिता हि मे प्रभुर्नित्यं दैवतं परमं मम ।
यस्य मां दास्यति पिता स मे भर्त्ता भविष्यति ॥
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥
अमन्यमाना राजेन्द्र पितरं मे तपस्विनम् ।
अधर्मेण हि धर्मिष्ठ कथं वरमुपास्महे ॥

दुःषन्तः

मा मैवं वद सुश्रोणि तपोराशिं दयात्मकम् ।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः ॥
अग्निर्दहति तेजोभिः सूर्यो दहति रश्मिभिः ।
राजा दहति दण्डेन ब्राह्मणो मन्युना दहेत् ॥
क्रोधितो मन्युना हन्ति वज्रपाणिरिवासुरान् ।
जानामि भद्रे तदपि तस्य मन्युर्न विद्यते ॥

इत्यधिकं पुस्तकान्तरे ।

राज्ञान्तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः ।
पञ्चानान्तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ॥११॥
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ।
अनेन विधिना कार्यो धर्मस्यैषा गतिः स्मृता ॥१२॥
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा* विशङ्किथाः ।
पृथग् वा यदि वा मिश्रौ कर्त्तव्यौ नात्र संशयः ॥१३॥
सा त्वं मम सकामस्य सकामा वरवर्णिनि ।
गान्धर्वेण विवाहेन भार्या भवितुमर्हसि ॥१४॥

शकुन्तलोवाच

यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥१५॥
सत्यं मे प्रतिजानीहि† यथा वक्ष्याम्यहं रहः ।
मयि जायेत यः पुत्रः स भवेत् त्वदनन्तरः ॥१६॥
युवराजो महाराज सत्यमेतद् ब्रवीमि ते ।
यद्येतदेवं दुःषन्त अस्तु मे सङ्गमस्त्वया ॥१७॥

वैशम्पायन उवाच

एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् ।
अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ॥१८ ‡
यथा त्वमर्हा सुश्रोणि सत्यमेतद् ब्रवीमि ते ।
एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ॥१९॥

---

* विशङ्किष्ठाः ।    † प्रतिजानीष्व ।

‡ अन्यथा त्वां न नेष्यामि स्वनिवेशमसत्कृताम् ।
सर्वमङ्गलसत्कारैरहं सत्यं ब्रवीमि ते ॥

वैशम्पायनः

एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ।
परिष्वज्य च बाहुभ्यां स्मितपूर्वमुदैक्षत ॥

जग्राह विधिवत् पाणावुवास च तया सह ।
विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ॥२०॥
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् ।
तया त्वामानयिष्यामि * निवासं स्वं शुचिस्मिते ॥२१

वैशम्पायन उवाच

इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय ।
मनसा चिन्तयन् प्रायात् काश्यपं प्रति पार्थिवः ॥२२
भगवांस्तपसा युक्तः श्रुत्वा किं नु करिष्यति ।
एवं स चिन्तयन्नेव प्रविवेश स्वकं पुरम् ॥२३॥
मुहूर्त्तयाते तस्मिंस्तु कण्वोऽप्याश्रममागमत् ।
शकुन्तला च पितरं ह्रिया नोपजगाम तम् ॥२४॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः ।
उवाच भगवान् प्रीतः पश्यन् दिव्येन चक्षुषा ॥२५॥
त्वयाद्य भद्रे रहसि मामनादृत्य यः कृतः ।
पुंसा सह समायोगो न स धर्मोपघातकः ॥२६॥
क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः ॥२७॥
धर्मात्मा च महात्मा च दुःषन्तः पुरुषोत्तमः ।
अभ्यगच्छः पतिं यं त्वं भजमानं शकुन्तले ॥२८॥
महात्मा जनिता लोके पुत्रस्तव महाबलः ।
य इमां सागरापाङ्गां कृत्स्नां भोक्ष्यति मेदिनीम् ॥

---

प्रदक्षिणीकृतां देवीं पुनस्तां परिषस्वजे ।
शकुन्तला साश्रुमुखी पपात नृपपादयोः ।
तां देवीं पुनरुत्थाप्य सा शचीति पुनः पुनः ।
शपेयं सुकृतेनैव प्रापयिष्ये नृपात्मजे ॥
इत्यधिकं पुस्तकान्तरे ।

* आनाययिष्यामि ।

परं चाभिप्रयातस्य चक्रं तस्य महात्मनः।
भविष्यत्यप्रतिहतं सततं चक्रवर्त्तिनः ॥३०॥
ततः प्रक्षाल्य पादौ सा विश्रान्तं मुनिमब्रवीत्।
विनिधाय ततो भारं सन्निधाय फलानि च ॥३१॥
शकुन्तलोवाच
मया पतिर्वृतो राजा दुःषन्तः पुरुषोत्तमः।
तस्मै ससचिवाय त्वं प्रसादं कर्त्तुमर्हसि ॥३२॥
कण्व उवाच
प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि।
गृहाण च वरं मत्तस्त्वं शुभे यदभीप्सितम् ॥३३॥
वैशम्पायन उवाच
ततो धर्मिष्ठतां वव्रे राज्यस्याखलनं तथा।
शकुन्तला पौरवाणां दुःषन्तहितकाम्यया ॥३४॥ *

## चतुःसप्ततितमोऽध्यायः

वैशम्पायन उवाच
प्रतिज्ञाय च दुःषन्ते प्रतियाते शकुन्तला।
गर्भं सुषाव वामोरूः कुमारममितौजसम् ॥१॥

---

* एवमस्त्विति तां प्राह कण्वो धर्मभृतां वरः।
पस्पर्श चापि पाणिभ्यां सुतां श्रीमिव रूपिणीम् ॥
कण्वः
अद्य प्रभृति देवि त्वं दुःषन्तस्य महात्मनः।
पतिव्रतानां यद्वृत्तिस्तां वृत्तिमनुपालय ॥
वैशम्पायनः
इत्येवमुक्त्वा धर्मात्मा तां विशुद्धार्थमस्पृशत्।
स्पृष्टमात्रे शरीरे तु परं हर्षमवाप सा ॥
इत्यधिकं पुस्तकान्तरे

त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिम् ।
रूपौदार्यगुणोपेतं दौःषन्तिं जनमेजय ॥२॥
जातकर्मादिसंस्कारं कण्वः पुण्यकृतां वरः ।
विधिवत् कारयामास वर्धमानस्य धीमतः ॥३॥
दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो महान् ।
चक्राङ्कितकरः श्रीमान् महामूर्धा महाबलः ।
कुमारो देवगर्भाभः स तत्राशु व्यवर्धत ॥४॥
षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ।
सिंहव्याघ्रान् वराहांश्च महिषांश्च गजांस्तथा ।
बबन्ध वृक्षे बलवानाश्रमस्य समीपतः ॥६॥
आरोहन् दमयंश्चैव क्रीडंश्च परिधावति ।
ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ॥७॥
अस्त्वयं सर्वदमनः सर्वं हि दमयत्यसौ ।
स सर्वदमनो नाम कुमारः समपद्यत ॥८॥
विक्रमेणौजसा चैव बलेन च समन्वितः ।
तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम् ॥९॥
समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम् ।
तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह ॥१०॥
शकुन्तलामिमां शीघ्रं सहपुत्रामितो गृहात् ।
भर्त्तुः प्रापयतागारं सर्वलक्षणपूजितम् ॥११॥
नारीणां चिरवासो हि बान्धवेषु न रोचते ।
कीर्त्तिचारित्रधर्मघ्नस्तस्मान्नयत मा चिरम् ॥१२॥
तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्त महौजसः ।
शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम् ॥१३॥
गृहीत्वामरगर्भाभं पुत्रं कमललोचनम् ।
आजगाम ततः शुभ्र दुःषन्तं विदिताद्वनात् ॥१४॥

अभिसृत्य च राजानं विदिता च प्रवेशिता ।
सह तेनैव पुत्त्रेण बालार्कसमतेजसा ॥१५॥
* निवेदयित्वा ते सर्वं आश्रमं पुनरागताः ।
पूजयित्वा यथान्यायमब्रवीच्च शकुन्तला ॥१६॥
अयं पुत्त्रस्त्वया राजन् यौवराज्येऽभिषिच्यताम् ।
त्वया ह्ययं सुतो राजन् समुत्पन्नः सुरोपमः ॥१७॥
यथासमयमेतस्मिन्-वर्त्तस्व पुरुषोत्तम ।
यथा मत्सङ्गमे पूर्वं यः कृतः समयस्तथा ॥१८॥
तं † स्मरस्व महाभाग कण्वाश्रमपदं प्रति ॥
सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि ।
अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि ॥१९॥
धर्मकामार्थसम्बन्धं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत् कुरु ॥२०॥
सैवमुक्ता वरारोहा व्रीडितेव तपस्विनी ।
निःसंज्ञेव च दुःखेन तस्थौ स्थूणेव निश्चला ॥२१॥
संरम्भामर्षताम्राक्षी ‡ स्फुरमाणोष्ठसम्पुटा ।
कटाक्षैर्निर्दहन्तीव तिर्य्यग्राजानमैक्षत ॥२२॥
आकारं गूहमाना च मन्युना च समीरिता ।
तपसा सम्भृतं तेजो धारयामास वै तदा ॥२३॥
सा मुहूर्त्तमिव ध्यात्वा दुःखामर्षसमन्विता ।
भर्त्तारमभिसम्प्रेक्ष्य क्रुद्धा राजानमब्रवीत् ॥२४॥
जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
न जानामीति निःशङ्कं यथान्यः प्राकृतस्तथा ॥२५॥
अत्र ते हृदयं वेद सत्यस्यैवानृतस्य च ।
कल्याणं वद साक्ष्येण मात्मानवमन्यथाः ॥२६॥

---

* निवेद्य † स्मर ‡ स्फुरदोष्ठ

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥२७॥

एकोऽहमस्मीति च मन्यसे त्वं
न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य
तस्यान्तिके त्वं वृजिनं करोषि ॥२८॥

मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति ।
विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः ॥२९॥

आदित्यचन्द्रावनिलानलौ च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥३०॥

यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् ।
हृदि स्थितः कर्मसाक्षी चेत्रज्ञो यस्य तुष्यति ॥३१॥
न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः ।
तं यमः पापकर्माणं विघातयति दुष्कृतम् ॥३२॥
योऽवमन्यात्मनात्मानमन्यथा प्रतिपद्यते ।
न तस्य देवाः श्रेयांसो यस्यात्मापि न कारणम् ॥३३॥
स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम् ।
अर्घार्हां नार्चयसि मां स्वयं भार्यामुपस्थिताम् ॥३४॥
किमर्थं मां प्राकृतवदुपप्रेक्षसि * संसदि ।
न खल्वहमिदं शून्ये रौमि किं न शृणोषि मे ॥३५॥
यदि मे याचमानाया वचनं न करिष्यसि ।
दुःषन्त शतधा मूर्धा ततस्तेऽद्य स्फुटिष्यति ॥३६॥

---

* प्रेक्षसे

भार्यां पतिः संप्रविश्य स यस्माज्जायते पुनः ।
जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः ॥३७॥
यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत् तारयति संतत्या पूर्वप्रेतान् पितामहान् ॥३८॥
पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥४०॥
सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥४१॥
अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रिवर्गस्य भार्य्या मित्रं तरिष्यतः ॥४२॥
भार्य्यावन्तः क्रियावन्तः सभार्य्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः ॥४३॥
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥४४॥
कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य * वै ।
यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥४५॥
संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् ।
भार्य्यैवान्वेति भर्त्तारं सततं या पतिव्रता ॥४६॥
प्रथमं संस्थिता भार्य्या पतिं प्रेत्य प्रतीक्षते ।
पूर्वं मृतञ्च भर्त्तारं पश्चात् साध्व्यनुगच्छति ॥४७॥
एतस्मात् कारणाद्राजन् पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्यामिह लोके परत्र च ॥४८॥
आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः ।
तस्माद् भार्य्यां नरः पश्येन्मातृवत् पुत्रमातरम् ॥४९॥

---

* अध्वनीनस्य

भार्य्यायां जनितं पुत्त्रमादर्शे स्वमिवाननम् ।
ह्लादते जनिता प्रेच्य स्वर्गं प्राप्येव पुण्यकृत् ॥५०॥
दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः ।
ह्लादन्ते स्वेषु दारेषु घर्मार्त्ताः सलिलेष्विव ॥५१॥
सुसंरब्धोऽपि रामाणां न कुर्य्यादप्रियं नरः ।
रतिं प्रीतिञ्च धर्मञ्च तास्वायत्तमवेच्य हि ॥५२॥
आत्मनो जन्मनः चेत्रं पुण्यं रामाः सनातनम् ।
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ॥५३॥
परिपत्य यदा सूनुर्धरणीरेणुगुण्ठितः ।
पितुराश्लिष्यते * ऽङ्गानि किमस्त्यभ्यधिकं ततः ॥५४॥
स त्वं स्वयमनुप्राप्तं साभिलाषमिमं सुतम् ।
प्रेच्चमाणं कटाक्षेण किमर्थमवमन्यसे ॥५५॥
अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः ।
न भरेथाः कथं नु त्वं धर्मज्ञः सन् स्वमात्मजम् ॥५६॥
न वाससां न रामाणां नापां स्पर्शस्तथाविधः ।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥५७॥
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ।
गुरुर्गरीयसां श्रेष्ठः पुत्त्रः स्पर्शवतां वरः ॥५८॥
स्पृशतु त्वां समाश्लिष्य पुत्त्रोऽयं प्रियदर्शनः ।
पुत्त्रस्पर्शात् सुखतरः स्पर्शो लोके न विद्यते ॥५९॥
त्रिषु वर्षेषु पूर्णेषु प्रजाताहमरिन्दम ।
इमं कुमारं राजेन्द्र तव शोकविनाशनम् ॥६०॥
आहर्त्ता वाजिमेधस्य शतसङ्ख्यस्य पौरव ।
इति वागन्तरिक्षे मां सूतकेऽभ्यवदत् पुरा ॥६१॥

---

* आश्लिष्यति ।

ननु नामाङ्कमारोप्य स्नेहाद् ग्रामान्तरं गताः ।
मूर्ध्नि पुत्त्रानुपाघ्राय प्रतिनन्दन्ति मानवाः ॥६२॥
वेदेष्वपि वदन्तीमं मन्त्रग्रामं द्विजातयः ।
जातकर्मणि पुत्त्राणां तवापि विदितं तथा ।६३॥
अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे ।
आत्मा वै पुत्त्रनामासि स जीव शरदः शतम् ॥६४॥
जीवितं त्वदधीनं मे सन्तानमपि चाक्षयम् ।
तस्मात् त्वं जीव मे वत्स सुसुखी शरदां शतम् ॥६५॥
त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात् पुरुषोऽपरः ।
सरसीवामलेऽत्मानं * द्वितीयं पश्य वै सुतम् ॥६६॥
यथा ह्याहवनीयोऽग्निर्गार्हपत्यात् प्रणीयते ।
तथा त्वत्तः प्रसूतोऽयं त्वमेकः सन् द्विधाकृतः ॥६७॥
मृगावकृष्टेन पुरा मृगयां परिधावता ।
अहमासादिता राजन् कुमारी पितुराश्रमे ॥६८॥
उर्व्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।
विश्वाची च घृताची च षडेवाप्सरसां वराः ॥६९॥
तासां मां मेनका नाम ब्रह्मयोनिर्वराप्सरा ।
दिवः सम्प्राप्य जगतीं विश्वामित्रादजीजनत् ॥७०॥
सा मां हिमवतः प्रस्थे सुषुवे मेनकाप्सराः ।
अवकीर्य च मां याता परात्मजमिवासती ॥७१॥
किं नु कर्माशुभं पूर्वं कृतवत्यन्यजन्मनि ।
यदहं बान्धवैस्त्यक्ता बाल्ये सम्प्रति च त्वया ॥७२॥
कामं त्वया परित्यक्ता गमिष्याम्यहमाश्रमम् ।
इमं तु बालं सन्त्यक्तुं नार्हस्यात्मजमात्मनः ॥७३॥

---

सरसीवामल आत्मा॰ ।

दुःषन्त उवाच

न पुत्रमभिजानामि त्वयि जातं शकुन्तले ।
असत्यवचना नार्य्यः कस्ते श्रद्धास्यते वचः ॥७४
मेनका निरनुक्रोशा बन्धकी जननी तव ।
यया हिमवतः पृष्ठे निर्माल्यमिव चोज्झिता ॥७५
स चापि निरनुक्रोशः चत्रयोनिः पिता तव ।
विश्वामित्रो ब्राह्मणत्वे लुब्धः कामवशं गतः ॥७६॥
मेनकाप्सरसां श्रेष्ठा महर्षीणां पिता च ते ।
तयोरपत्यं कस्मात्त्वं पुंश्चलीव प्रभाषसे ॥७७॥ *
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ।
विशेषतो मत्सकाशे दुष्टतापसि गम्यताम् ॥७८॥
क्व महर्षिः सदैवोग्रः साप्सरा क्व च मेनका ।
क्व च त्वमेवं कृपणा तापसीवेशधारिणी ॥७९॥
अतिकायश्च ते पुत्रो बालोऽपि बलवानयम् ।
कथमल्पेन कालेन शालस्कन्ध इवोद्गतः ॥८०॥
सुनिकृष्टा च ते योनिः पुंश्चलीव प्रभाषसे ।
यदृच्छया कामरागाज्जाता मेनकया ह्यसि ॥८१॥
सर्वमेतत् परोक्षं मे यत्त्वं वदसि तापसि ।
नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया ॥८२॥

---

* जातिश्चापि निकृष्टा ते कुम्भीनेव विजल्पसे ।
जनयित्वा त्वमुत्सृष्टा कोकिलेव परैर्भृता ॥
अरिष्टैरिव दुर्बुद्धिः कण्वो वर्धयिता पिता ।
अश्रद्धेयमिदं वाक्यं यत्त्वं जल्पसि तापसि ॥
ब्रुवन्ती राजसान्निध्ये गम्यतां यत्र चेच्छसि ।
सुवर्णमणिमुक्तानि वस्त्राण्याभरणानि च ।
यदिहेच्छसि भोगार्थं तापसि प्रतिगृह्यताम् ॥

इत्यधिकं पुस्तकान्तरे ।

## चतुःसप्ततितमोऽध्यायः

### शकुन्तलोवाच

राजन् सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ॥१॥
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् ।
ममैवोद्रिच्यते जन्म दुःषन्त तव जन्मतः ॥२॥
क्षितावटसि राजंस्त्वमन्तरिक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥३॥
महेन्द्रस्य कुबेरस्य यमस्य वरुणस्य च ।
भवनान्यनुसंयामि प्रभावं पश्य मे नृप ॥४॥
सत्यश्चापि प्रवादोऽयं यं प्रवक्ष्यामि तेऽनघ ।
निदर्शनार्थं न द्वेषात्तच्छ्रुत्वा तं क्षन्तुमर्हसि ॥५॥
विरूपो यावदादर्शे नात्मनः * पश्यते मुखम् ।
मन्यते तावदात्मानमन्येभ्यो रूपवत्तरम् ॥६॥
यदा स्वमुखमादर्शे विकृतं सोऽभिवीक्षते ।
तदान्तरं † विजानीते आत्मानञ्चेतरं जनम् ॥७॥
अतीव रूपसम्पन्नो न कश्चिदवमन्यते ।
अतीव जल्पन् दुर्वाचो भवतीह विहेठकः ॥८॥
मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥९॥
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥१०॥

---

* पश्यति  † विजानाति

अन्यान् परिवदन् साधुर्यथाहि परितप्यते ।
तथा परिवदन्नन्यांस्तुष्टो भवति दुर्जनः ॥११॥
अभिवाद्य यथा वृद्धान् सन्तो गच्छन्ति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥१२॥
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः ।
यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥१३॥
अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते ।
यत्र दुर्जन इत्याह दुर्जनः सज्जनं परम् ॥१४॥
सत्यधर्मच्युतात् पुंसः क्रुद्धादाशीविषादिव ।
अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः ॥१५॥
स्वयमुत्पाद्य वै पुत्रं सदृशं यो न मन्यते ।
तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते ॥१६॥
कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन् ।
उत्तमं सर्वधर्माणां तस्मात् पुत्रं न सन्त्यजेत् ॥१७॥
स्वपत्नीप्रभवान् पञ्च लब्धान् क्रीतान् विवर्धितान् ।
कृतानन्यासु चोत्पन्नान् पुत्रान् वै मनुरब्रवीत् ॥१८॥
धर्मकीर्त्यावहा नृणां मनसः प्रीतिवर्धनाः ।
त्रायन्ते नरकाज्जाताः पुत्रा धर्मप्लवाः पितॄन् ॥१९॥
स त्वं नृपतिशार्दूल पुत्रं न त्यक्तुमर्हसि ।
आत्मानं सत्यधर्मौ च पालयन् पृथिवीपते ।
नरेन्द्रसिंह कपटं न वोढुं त्वमिहार्हसि ॥२०॥
वरं कूपशताद्वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात् पुत्रः सत्यं पुत्रशताद्वरम् ॥२१॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥२२॥

सर्ववेदाधिगमनं सर्वतीर्थावगाहनम् ।
सत्यञ्च वचनं राजन् समं वा स्यान्न वा समम् ॥२३॥
नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् ।
न हि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥२४॥
राजन् सत्यं परं ब्रह्म सत्यञ्च समयः परः ।
मा त्याक्षीः समयं राजन् सत्यं सङ्गतमस्तु ते ॥२५॥
अनृते चेत् प्रसङ्गस्ते श्रद्दधासि न चेत् स्वयम् ।
आत्मना हन्त गच्छामि त्वादृशे नास्ति सङ्गतम् ॥२६॥
त्वामृतेऽपि हि दुःषन्त शैलराजावतंसकाम् ।
चतुरन्तामिमामुर्वीं पुत्रो मे पालयिष्यति ॥२७॥

वैशम्पायन उवाच

एतावदुक्त्वा राजानं प्रातिष्ठत शकुन्तला ।
अथान्तरिक्षाद्दुःषन्तं वागुवाचाशरीरिणी ।
ऋत्विक्पुरोहिताचार्य्यैर्मन्त्रिभिश्च वृतं तदा ॥२८॥
भस्त्रा माता पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुःषन्त मावमंस्थाः शकुन्तलाम् ॥२९॥
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥३०॥
जाया * जनयते पुत्रमात्मनोऽङ्गं द्विधाकृतम् ।
तस्माद् भरस्व दुःषन्त पुत्रं शाकुन्तलं नृप ॥३१॥
अभूतिरेषा यत्त्यक्त्वा जीवेज्जीवन्तमात्मजम् ।
शाकुन्तलं महात्मानं दौःषन्तिं भर पौरव ॥३२॥
भर्त्तव्योऽयं त्वया यस्मादस्माकं वचनादपि ।
तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः ॥३३॥

---

* जनयति !

तच्छ्रुत्वा पौरवो राजा व्याहृतं त्रिदिवौकसाम् ।
पुरोहितममात्यांश्च सम्प्रहृष्टोऽब्रवीदिदम् ॥३४॥
शृण्वन्त्वेतद् भवन्तोऽस्य देवदूतस्य भाषितम् ।
अहञ्चाप्येवमेवैनं जानामि स्वयमात्मजम् ॥३५॥
यद्यहं वचनादेव गृह्णीयामिममात्मजम् ।
भवेद्धि शङ्को लोकस्य नैव शुद्धो भवेदयम् ॥३६॥

वैशम्पायन उवाच

तं विशोध्य तदा राजा देवदूतेन भारत ।
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥३७॥
ततस्तस्य तदा राजा पितृकर्माणि सर्वशः ।
कारयामास मुदितः प्रीतिमानात्मजस्य ह ॥३८॥
मूर्ध्नि चैनमुपाघ्राय सस्नेहं परिषस्वजे ।
सभाज्यमानो विप्रैश्च स्तूयमानश्च बन्दिभिः ।
स मुदं परमां लेभे पुत्रसंस्पर्शजां नृपः ॥३९॥
ताञ्चैव भार्यां धर्मज्ञः पूजयामास धर्मतः ।
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः ॥४०॥
कृतो लोकपरोक्षोऽयं सम्बन्धोऽयं त्वया सह ।
तस्मादेतन्मया देवि त्वच्छुद्ध्यर्थं विचारितम् ॥४१॥
मन्यते चैव लोकस्ते स्त्रीभावान्मयि सङ्गतम् ।
पुत्रश्चायं वृतो राज्ये मया तस्माद् विचारितम् ॥४२॥
यच्च कोपितयात्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये ।
प्रणयिन्या विशालाक्षि तत् क्षान्तं ते मया शुभे ॥४३॥
तामेवमुक्त्वा राजर्षिर्दुःषन्तो महिषीं प्रियाम् ।
वासोभिरन्नपानैश्च पूजयामास भारत ॥४४॥
दुःषन्तश्च ततो राजा पुत्रं शाकुन्तलं तदा ।
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ॥४५॥

तस्य तत् प्रथितं चक्रं प्रावर्त्तत महात्मनः ।
भास्वरं दिव्यमजितं लोकसन्नादनं महत् ॥४६॥
स विजित्य महीपालांश्चकार वशवर्तिनः ।
चचार च सतां धर्मं प्राप चानुत्तमं यशः ॥४७॥
स राजा चक्रवर्त्त्यासीत् सार्वभौमः प्रतापवान् ।
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ॥४८॥
याजयामास तं कण्वो विधिवद्भूरिदक्षिणम् ।
श्रीमान् गोविततं नाम वाजिमेधमवाप सः ॥
यस्मिन् सहस्रं पद्मानां कण्वाय भरतो ददौ ॥४९॥
भरताद्भारती कीर्त्तिर्येनेदं भारतं कुलम् ।
अपरे ये च पूर्वे च भारता इति विश्रुताः ॥५०॥
भरतस्यान्ववाये हि देवकल्पा महौजसः ।
बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः ॥५१॥
येषामपरिमेयाणि नामधेयानि सर्वशः ।
तेषान्तु ते यथामुख्यं कीर्तयिष्यामि भारत ।
महाभागान् देवसन्धान् सत्यार्जवपरायणान् ॥५२॥

इत्यादिपर्वणि शकुन्तलोपाख्यानम् ।

---

# शकुन्तलोपाख्यानम्

[ पद्मपुराणीयम् ]

## स्वर्गखण्डे प्रथमोऽध्यायः

सूत उवाच

शेषभाषितमाकर्ण्य तथा भूगोलवर्णनम् ।
पिता मे पुनरापृच्छत् प्रणतो बादरायणम् ॥१॥

रोमहर्षण उवाच

स निशम्य तु भूगोलं मुनिर्वात्स्यायनः पुनः ।
किमपृच्छच्छेषनागं तद्भवान् वक्तुमर्हति ॥२॥

व्यास उवाच

भुवो मानं निशम्याथ कृताञ्जलिपुटो मुनिः ।
भूधरं देवमापृच्छन्नत्वाऽवात्स्यायनः पुनः ॥३॥

वात्स्यायन उवाच

श्रुतं मे भगवन् भूमेः संस्थानं वर्णितं त्वया ।
दिवो मण्डलमानं च श्रोतुमिच्छामि भूधर ॥४॥
नक्षत्राणि ग्रहांश्चैव संस्थानं चन्द्रसूर्य्ययोः ।
ज्योतिषां च तथान्येषां श्रोतुमिच्छामि विस्तरम् ॥५॥
ये लोकाः स्वर्गसंस्थाश्च नभःसंस्थाश्च ये प्रभो ।
संस्थानं परिमाणञ्च ब्रूहि तेषां महीधर ॥६॥
ये यस्मिन् कृतवासा हि देवगन्धर्व्वकिन्नराः ।
तत् सर्व्वं विस्तरेणैव शेष ब्रूहि कृपान्वितः ॥७॥

व्यास उवाच

इति तत्प्रश्नमाकर्ण्य सर्पाणामधिपो हसन् ।
मुनिं प्राह महातेजा विष्णुशक्तिं परां स्मरन् ॥८॥

शेष उवाच

विष्णोरेतद्विराड्रूपं ब्रह्माण्डमिति कथ्यते ।
तस्य विज्ञानमात्रेण मुक्तो भवति मानवः ॥८॥
अत्रेतिहासं वक्ष्यामि शृणु वात्स्यायन द्विज ।
संवादं विष्णुदूतेन राजर्षेर्भरतस्य च ॥१०॥
विश्वामित्रसुतायां यो जातायां मेनकोदरात् ।
दुःषन्ताज्जनुरापेदे महाभागवतो नृपः ॥११॥
स चकार क्रतून् सर्व्वानश्वमेधादिकान् नृपः ।
नाकृतस्तेन यज्ञोऽस्ति न धर्म्मस्तदसेवितः ।
नाप्राप्यस्तस्य लोकेषु कोऽपि स्वर्गादिकेष्वपि ॥१२॥
भगवानपि गोविन्दस्तपसा परितोषितः ।
यन्नाम्ना भारतो वंशस्त्रिषु लोकेषु विश्रुतः ॥१३॥

वात्स्यायन उवाच

स्मारितोऽयं महाप्रश्नस्तव वाक्येन भूधर ।
चिरं यो मनसा ध्यातः संशयं जनयेन्मम ॥१४॥
विश्वामित्रसुता देव मेनकायामभूत् कथम् ।
दुःषन्तेन कथं लब्धा सा कन्या वरवर्णिनी ॥१५॥
भरतोऽभूत् सुतो यस्याः सर्व्वधर्म्मविशारदः ।
येनायं भारतो वंशः ख्यापितः पृथिवीतले ॥
तत् सर्व्वं विस्तरेणैव भगवन् ब्रूहि साम्प्रतम् ॥१६॥

शेष उवाच

दुःषन्तो नाम राजर्षिश्चन्द्रवंशविभूषणः ।
पौरवः सुमहातेजा वेदवेदाङ्गपारगः ॥१७॥
धनुर्विद्यासु निपुणः सर्व्वराजगुणान्वितः ।
कन्दर्प इव सौन्दर्ये धैर्ये च तुहिनाचलः ॥१८॥
समुद्र इव गम्भीरः कुबेर इव ऋद्धिमान् ।
प्रतापे वासवसमस्तेजस्वी भानुमानिव ॥१९॥

सत्सु स्निग्धो यथा चन्द्रो धर्मतन्त्रे यथा मनुः ।
स प्रजाः पालयमास नृपः पुत्रानिवौरसान् ॥२०॥
कदाचिन्मृगयां राजा स जगाम बलैर्वृतः ।
रम्यं स्यन्दनमारुह्य नानामणिगणाचितम् ॥२१॥
अथारण्ये ददर्शासौ मृगमत्यन्तमूर्जितम् ।
तमन्वधावद्राजर्षिर्मृगमात्तशरासनः ॥२२॥
मृगोऽपि बलवांस्तस्मिन् तुप्लवेन महीयसा ।
धावत्येव ततो राजा बद्धामर्षोऽनुधावति ॥२३॥
ततः कण्वाश्रमाभ्यासे मृगं प्रति महाबलः ।
सन्दधे शरमत्युग्रं शब्दभेदिनमाशु वै ॥२४॥
तं तथा संहितशरं कण्वशिष्याः सुदूरतः ।
अब्रुवन्नाश्रममृगो न हन्तव्यो महीपते ॥२५॥
तदाश्रममृगीत्येवं कर्णाङ्गमागते स्वरे ।
संजहार महाबाणं पौरवः पौरुषान्वितः ॥२६॥
प्रत्याख्यातसमुद्योगस्तृषार्त्तः स महीपतिः ।
तोयमन्वेषयन् कन्या ददर्शाप्सरसां समाः ॥२७॥
स्वानुरूपघटैः कक्षविन्यस्तैः सरसः पयः ।
आहृत्य सिञ्चतीर्बाला वन्यानाश्रमपादपान् ॥२८॥
तासां मध्येऽतिरम्याङ्गी कन्या नाम्ना शकुन्तला ।
राजानं प्रेक्ष्य सुस्निग्धमुवाच वचनं द्विज ॥२९॥
त्वमद्यातिथिरायातः सत्कृतो यास्यसि ध्रुवम् ।
इदमासनमेतत्ते पाद्यमर्घ्यञ्च गृह्यताम् ॥३०॥
तद्वागमृतसन्तुष्टो गृहीत्वातिथिसत्क्रियाम् ।
मदनाशुगसम्पातकिञ्चित्स्पृष्टमनोरथः ॥३१॥
उवाच राजा दुःषन्तः कासि कस्यासि भामिनि ।
पश्यामि त्वां वरारोहे देवीमिव दिवश्च्युताम् ॥३२॥

राजन्योऽहं पुरुकुले दुःषन्तो नाम भूपतिः ।
तच्छ्रुत्वा सा सखीं प्राह* कथयस्व ममोद्भवम् ॥२३॥

सख्युवाच

राजन्योपाधितनयो विश्वामित्रो महामनाः ।
वशिष्ठेन जितो युद्धे ब्रह्मण्येन बलीयसा ॥२४॥
गर्हयन् क्षत्रियबलं ब्रह्मण्यं बहुमानयन् ।
ब्रह्मण्यार्थी तपस्तेपे बहुवर्षसहस्रकम् ॥२५॥
तद्दृष्ट्वा भयमापन्नः शक्रः संमन्त्र्य दैवतैः ।
मेनकां प्रेषयामास तपोविघ्नाय पार्थिव ॥२६॥
सागत्य पुरतस्तस्य स्वर्गाभरणभूषिता ।
प्रलोभयामास मुनिं विश्वामित्रं स्वविभ्रमैः ॥२७॥
जितेन्द्रियोऽपि कामेन तदपाङ्गधनुश्च्युतैः ।
कटाक्षबाणै राजेन्द्र विव्यधे गाधिनन्दनः ॥२८॥
धैर्यच्युतोऽथ बाहुभ्यामाश्लिषन्मेनकां मुहुः ।
रेमे च मदनाविष्टः क्षणात् संज्ञामवाप सः ॥२९॥
व्रीडितस्तां विसृज्याथ वनेऽस्मिन् प्रययौ द्रुतम् ।
मेनकापि च तं गर्भं विमुच्य गहने वने ।
शक्रलोकं समापेदे न प्रैक्षत पुनर्नृप ॥४०॥
शकुन्तैरथ गर्भोऽसौ ररक्षे पृथिवीपते ।
अतः शकुन्तला नाम नृपेयं वरवर्णिनी ॥४१॥
कण्वस्तु सुमहातेजाः कन्यां वीक्ष्य वने स्थिताम् ।
अनुकम्प्य स्वसुतात्वे कल्पयामास सुन्दरीम् ॥४२॥
मुनिना संभृता कन्या तं तातं मन्यते सदा ।
सुतां कण्वस्य विद्धीमां मुनिवर्यस्य भूपते ॥४३॥

---

* कथय ।

दुःषन्त उवाच

सुव्यक्तं राजपुत्रीयं यथा कल्याणि भाषसे ।
अन्यथा पौरवाणां हि मनो नैवानुरज्यति ॥४४॥
भार्य्या भवतु सुश्रोणी ममेयं मृगलोचना ।
सुवर्णमालां वासांसि कुण्डले परिहाटके ॥४५॥
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ।
आहरामि महाभागे निष्कादीन्यतुलानि च ॥४६॥
सर्व्वं राज्यं प्रदास्यामि भार्य्या भवतु ते सखी ।
गान्धर्व्वेण च मां भीरु विवाहेन व्रणोतु च ॥
विवाहानां हि रम्भोरु गान्धर्व्वः श्रेष्ठ उच्यते ॥४७

शकुन्तलोवाच

फलाहारो गतो राजन् पिता म इत आश्रमात् ।
मुहूर्त्तं तु प्रतीचस्व स मां तुभ्यं प्रदास्यति ॥४८

राजोवाच

इच्छामि त्वां वरारोहे भजमानामनिन्दिते ।
त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम ॥४९
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवात्मनो दानं कर्त्तुमर्हसि सुव्रते ॥५०
अष्टावेव महाभागे विवाहा वेदसम्मताः ।
ब्राह्मो दैवस्तथार्षश्च प्राजापत्यस्तथासुरः ॥५१
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ।
मनुः स्वायम्भुवो धर्म्मान् पूर्व्वपूर्व्वान् पुराब्रवीत् ॥५२
प्रशस्तांश्चतुरः पूर्व्वान् ब्राह्मणस्योपधारय ।
षडानुपूर्व्या क्षत्राणां विद्धि धर्म्यानिनिन्दिते ॥५३

राज्ञान्तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः।
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्मौ स्मृताविह ॥५४
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन।
गान्धर्व्वराक्षसौ क्षत्रे धर्म्मौ तौ मा विशङ्किथाः।
मिश्रौ वापि पृथग् वापि कर्त्तव्यौ द्वौ महीभुजाम् ॥५५
सा त्वं मम सकामस्य सकामा वरवर्णिनी।
गान्धर्व्वेणैव धर्म्मेण भार्या भवितुमर्हसि ॥५६

शकुन्तलोवाच

यदि धर्म्मपथस्त्वेष यदि चात्मा प्रभुर्मम।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो।
*प्रतिजानीहि सत्यं मे यथा वक्ष्यामि तेऽनघ ॥५७॥
मम जायेत यः पुत्रः स भवेत्त्वदनन्तरः।
युवराजो महाराज सत्यमेतद् ब्रवीमि ते ॥५८
अभिज्ञानञ्च राजेन्द्र देहि स्वमङ्गुरीयकम्।
यद्येतदेवं राजेन्द्र अस्तु मे सङ्गमस्त्वया ॥५९

शेष उवाच

एवमस्त्विति तां राजा प्रत्युवाचाविचारयन्।
अयि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ॥६०
तथा त्वमर्हा सुश्रोणि सत्यमेतद् ब्रवीमि ते।
एवमुक्त्वा स राजर्षिस्तामनिन्दितविग्रहाम् ॥६१
जग्राह विधिवत् पाणावुवास च तया सह।
विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ॥६२
प्रेषयिष्ये च नेतुं त्वां वाहिनीं मन्त्रिभिः सह।
विभूत्या परयोपेतां नाययिष्यामि सुव्रते ॥६३

---

* प्रतिजानीष्व।

इति तस्याः प्रतिज्ञाय स नृपो मुनिसत्तम ।
मनसा चिन्तयन् प्रायाद् दत्त्वा चाप्यङ्गुरीयकम् ॥६४
काश्यपस्तपसा युक्तः श्रुत्वा किं नु करिष्यति ।
एवं विचिन्तयन्नेव प्राविशन्नगरं नृपः ॥६५

---

## द्वितीयोऽध्यायः

शेष उवाच

एतस्मिन्नन्तरे विप्र कण्वोऽप्याश्रममाश्रयत् ।
शकुन्तला तु पितरं ह्रिया नोपजगाम तम् ॥१
विज्ञायाथ च तां कण्वो दिव्यज्ञानेन मारिष ।
उवाच भगवान् प्रीतो* व्रीडमानां शकुन्तलाम् ॥२
त्वयाद्य भद्रे रहसि मामनाभाष्य यः कृतः ।
पुंसा सह समायोगो न स धर्म्मोपघातकः ॥३
क्षत्रियस्य हि गान्धर्व्वो विवाहः श्रेष्ठ उच्यते ।
सकामायां सकामस्य निर्मन्त्रो रहसि स्मृतः ॥४
महात्मासौ महाराजः पुरुवंशप्रदीपनः ।
यं पतिं प्रतिपन्ना त्वं भजमानं शकुन्तले ॥५
ममापि चिन्ता ह्यासीत्त्वत्प्रदानाय सुन्दरि ।
ययाहं नियतं दग्धो दावेनेव महाद्रुमः ॥६॥
वरं त्वत्सदृशं लोके नान्यमालोकयामि ते ।
तेनायं निश्चितो राजा मयापि सदृशो वरः ॥७॥
स यदि स्वयमागत्य त्वामगृह्णात् करे नृपः ।
अभ्यर्थनार्थलघुता न ममाभूद् गरीयसी ॥८॥

---

* प्रीत्या वीक्ष्यन्तीम् ।

महात्मा भविता पुत्रस्तव सुभ्रु महाबलः ।
य इमां भोच्यते कृत्स्नां भूमिं सागरमेखलाम् ॥९॥
स्वनाम्ना ख्यातिमप्यत्र वंशे संजनयिष्यति ।
परं चाभिगतस्यास्य चक्रं नाम महात्मनः ॥
भविष्यत्यप्रतिहतं नियतं चक्रवर्त्तिनः ॥१०॥

शेष उवाच

ततः प्रक्षाल्य पादौ सा सन्निधाय फलानि च ।
उपविष्टं गतश्रान्तिमब्रवीत्तं शुचिस्मिता ॥११॥
यो मयासौ वृतो राजा पौरवः पुरुषोत्तमः ।
स त्वयानुमतो यस्मात् कृतार्थास्मि पितः प्रभो ।
प्रसादं कुरु तस्यापि सामात्यस्य महीपतेः ॥१२॥

कण्व उवाच

प्रसन्न एव तस्याहं पूर्व्वमेव शुचिस्मिते ।
ब्रह्मण्यः पौरवो राजा धर्म्मात्मा च विशेषतः ।
कं ददामि वरं तस्मै ब्रूहि कल्याणि मा चिरम् ॥१३॥

शेष उवाच

ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा
शकुन्तला पौरवाणां दुःषन्तहितकाम्यया ॥१४॥
परेऽहनि मुनौ याते विरहेण शकुन्तला ।
न लेभे मनसः शान्तिं चिन्तयन्ती महीपतिम् ।
क्षणं निश्वासबहुला सुष्वाप धरणीतले ।
लिलेख च नखेन क्ष्मां नाललाप सखीजनैः ॥१६॥
क्षणं विलोकयामास दिगन्तान्नीललोचना ।
ध्यायन्ती जगतीनाथं क्षणं प्राप्तमनोरथा ॥
आस्ते स्म धरणीपृष्ठे ध्यानस्तिमितलोचना ॥१७॥

एतस्मिन्नन्तरे विप्र दुर्व्वासास्तपसा ज्वलन् ।
आजगामाश्रमपदं कण्वस्य द्विजसत्तम ॥१८॥
दूरादुच्चैर्बभाषेऽथ केयं पर्णोटजे स्थिता ।
विलोकयतु मां प्राप्तमतिथिं भोजनार्थिनम् ॥१९॥
इत्युच्चैर्मुहुराभाष्य न प्राप्यातिथिसत्क्रियाम् ।
तपोधनस्य कोपाश्च शशाप क्रोधनो मुनिः ॥२०॥
यं त्वं *चिन्तयसे बाले मनसानन्यवृत्तिना ।
विस्मरिष्यति स त्वां वा अतिथौ मौनशालिनीम् ॥२१॥
इत्येवमुक्ते वचने क्रोधाद्दुर्व्वाससा तदा ।
सखी प्रियंवदा नाम शुश्राव क्रोधभाषितम् ॥२२॥
त्वरयाथ समागम्य पाद्यादिकृतसच्चया ।
प्रसादयामास मुनिं मूर्ध्ना तच्चरणं गता ॥२३॥

प्रियंवदोवाच

पौरवस्य इयं राज्ञो दुःषन्तस्य महीभृतः ।
विश्वामित्रात्मजा बाला मेनकाप्सरसः सुता ॥२४॥
कण्वस्य दुहिता चेयं पालनात् सुपतिव्रता ।
चिन्तयन्ती पतिं मुग्धा विरहेण सुविह्वला ॥२५॥
न किञ्चिदभिजानाति न भवांस्तेन सत्कृतः ।
नावज्ञानान्न गर्व्वाच्च तद्भवान् क्षन्तुमर्हति ॥२६॥
यथा न विस्मरेद्राजा शापान्तं कुरु तापस ।
ततः प्रसन्नो दुर्व्वासाः प्राह शापान्तकारणम् ॥२७॥
विस्मृतिस्तस्य राजर्षेस्तावदेव भविष्यति ।
प्रियंवदे नृपो यावदभिज्ञानं न पश्यति ॥२८॥

---

* चिन्तयसि ।

इति कृत्वा स शापान्तं गृहीत्वा सत्क्रियां ययौ ।
अथ तस्यास्तदा गर्भो राजर्षेस्तेजसा भृत: ॥२९॥
शशीव विशदे पक्षे वर्द्धते स्म दिने दिने ।
कण्वोऽपि भगवान् दृष्ट्वा दोहदं समुपस्थितम् ॥३०॥
मुदा परमया युक्त: पृष्टाभिलषितं हितम् ।
सम्भावयति वन्यानि मूलानि च फलानि च ॥३१॥
अथ तां सप्तमे मासि गर्भे स्फूर्तिमुपेयुषि ।
उवाच भगवान् कण्वो मुनिमण्डलमध्यगाम् ॥३२॥
कन्या पितृगृहे नैव सुचिरं वासमर्हति ।
लोकापवाद: सुमहाञ्जायते पितृवेश्मनि ॥३३॥
नार्या: पतिर्गतिर्भर्त्ता तपश्च परमं पति: ।
दैवतं गुरुरार्यश्च पति: स्त्रीणां परं पदम् ॥३४॥
यं *प्रसोष्यसि देवि त्वं भविता स महाबल: ।
राजपुत्रो वने स्थास्यत्ययं नापुत्रचितो विधि: ॥३५॥
अतस्त्वां प्रेषयिष्यामि निकटं तस्य भूभृत: ।
पत्यु: प्रेम हि नारीणां परं सौभाग्यमुच्यते ॥३६॥

शकुन्तलोवाच

पितस्तेऽनुगृहीतास्मि पतिदर्शनवार्त्तया ।
नानुज्ञां प्रार्थये तुभ्यं स्नेहभङ्गभयात्तव ॥३७॥
न जाने को मया गर्भे धृतोऽयं पुरुषोत्तम: ।
यत्तेजसा न शक्नोमि स्थातुमेकत्र मारिष ॥३८॥
तदद्यैव गमिष्यामि राजर्षेस्तस्य चान्तिकम् ।
अनुज्ञां देहि मे तात कृपया तापसोत्तम ॥३९॥
तच्छ्रुत्वा भगवान् कण्व: स्नेहप्रसरविप्लुत: ।
अनुज्ञाप्य मुनीनन्यांश्च निपत्नीश्च सुव्रता: ॥४०॥

---

* प्रसोष्यसे ।

उवाच परया प्रीत्या प्रेषयामि शकुन्तलाम् ।
भर्त्तुर्गेहाय कल्याण्य: कल्याणं कुरुत ध्रुवम् ॥४१॥
ताश्च वाक्यं मुनेः श्रुत्वा प्रेमाश्रुक्लिन्नलोचनाः ।
आशीर्भिरनुकूलाभिः *प्रायुञ्जन्त शकुन्तलाम् ॥४२॥
विचित्रैरप्याभरणैः केशबन्धादिभिस्तथा ।
गात्रोद्वर्तनसंमार्ष्टिहरिद्रातैलसङ्गतैः ।
भूषयामासुरव्यग्रां मुनिपत्न्यः शकुन्तलाम् ॥४३॥
शुशुभे सा महाभागा विश्वामित्रसुता सती ।
नितरां गर्भिणी बाला चन्द्रलेखेव विच्युता ॥४४॥
अथ गुल्मलतावृक्षान् हरिणान् हरिणाङ्गनाः ।
उवाच कण्वः प्रेमार्द्रो मुञ्चन्नश्रुकला मुहुः ॥४५॥
युष्माकं परमप्रेम्णा वासितेयं सुता मम ।
सर्व्वे कुरुत कल्याणं सुखं यातु शकुन्तला ॥४६॥
इति सर्व्वाननुज्ञाप्य कण्वो मतिमतां वरः ।
आहूय गौतमीं वृद्धां सखीं चास्याः प्रियंवदाम् ।
उवाच श्लक्ष्णया वाचा शिष्यौ चापि महाव्रतौ ॥४७॥
यात यूयं महीभर्त्तुर्दुःषन्तस्य पुरं प्रति ।
इमां शकुन्तलां राज्ञे समर्प्य पुनरेष्यथ ॥४८॥
इति तस्य वचः श्रुत्वा गौतमी च प्रियंवदा ।
मुनिः सङ्गिरवः शिष्यस्तथा शारद्वतो मुनिः ॥४९॥
तथेति प्रतिगृह्याथ मुनेराज्ञां स्वमूर्धसु ।
शकुन्तलां पुरस्कृत्य पन्थानं प्रतिपेदिरे ॥५०॥
अथ दक्षिणतस्तस्याः शिवा घोरं ववाशिरे ।
मृगाश्च चेलुः सव्येन वाता वान्ति स्म धूसराः ॥५१॥

* प्रायोजयन् ।

तदालोक्य समुद्विग्ना पथि यान्ती शकुन्तला ।
नितम्बिनी गर्भसत्त्वा न शेके चलितुं द्रुतम् ॥५३॥
अथ मध्याह्नसमये प्राप्य प्राचीं सरस्वतीम् ।
मुनेः शिष्यौ च मध्याह्नक्रियां चक्रतुरेव तौ ॥५४॥
प्रियंवदा गौतमी च सलिलं तज्जगाहतुः । *
शकुन्तलापि तत्रैव स्नानार्थमुपचक्रमे ॥५५॥
प्रियंवदाकरे न्यस्य अभिज्ञानाङ्गुरीयकम् ।
स्नातुं सरस्वतीतोयमगाहत सुलोचना ॥
प्रियंवदा तु तद्द † गृह्य वसनाञ्चलमध्यतः ।
यावन्न्यस्तवती तावत् पपात सलिले द्विज ॥५६॥
प्रियंवदा भिया तस्यै वृत्तान्तं न न्यवेदयत् ।
शकुन्तलापि तत् सख्यै पप्रच्छापि न विस्मृता ॥५७॥
ततः स्नात्वा च ते सर्व्वे समाप्य विधिवत् क्रियाम् ।
दुःषन्तपुरमापेदु ‡ स्तास्त्रियस्तौ च तापसौ ॥५८॥

---

## तृतीयोऽध्यायः

शेष उवाच

राजद्वारं समासाद्य कण्वशिष्यौ महामती ।
ऊचतुस्तौ प्रतीहारं तूर्णं राज्ञे निवेदय ॥१॥
काश्यपस्य निदेशेन राजद्वारमिहागतौ ।
शिष्यौ तस्य सङ्गिवर-शारद्वतसमाह्वयौ ॥२॥

---

* तज्जगाहाते ।  † गृहीत्वा  ‡ मापेदिरे ।

उवाच परया प्रीत्या प्रेषयामि शकुन्तलाम् ।
भर्त्तुर्गेहाय कल्याण्यः कल्याणं कुरुत ध्रुवम् ॥४१॥
ताश्च वाक्यं मुनेः श्रुत्वा प्रेमाश्रुक्लिन्नलोचनाः ।
आशीर्भिरनुकूलाभिः *प्रायुञ्जन्त शकुन्तलाम् ॥४२॥
विचित्रैरप्याभरणैः केशबन्धादिभिस्तथा ।
गात्रोद्वर्त्तनसंमार्ष्टिहरिद्रातैलसङ्गतैः ।
भूषयामासुरव्यग्रां मुनिपत्न्यः शकुन्तलाम् ॥४३॥
शुशुभे सा महाभागा विश्वामित्रसुता सती ।
नितरां गर्भिणी बाला चन्द्रलेखेव विच्युता ॥४४॥
अथ गुल्मलतावृन्दान् हरिणान् हरिणाङ्गनाः ।
उवाच कण्वः प्रेमार्द्रो मुञ्चन्नश्रुकला मुहुः ॥४५॥
युष्माकं परमप्रेम्णा वासितेयं सुता मम ।
सर्व्वे कुरुत कल्याणं सुखं यातु शकुन्तला ॥४६॥
इति सर्व्वाननुज्ञाप्य कण्वो मतिमतां वरः ।
आहूय गौतमीं वृद्धां सखीं चास्याः प्रियंवदाम् ।
उवाच श्लक्ष्णया वाचा शिष्यौ चापि महाव्रती ॥४७॥
यात यूयं महीभर्त्तुर्दुःषन्तस्य पुरं प्रति ।
इमां शकुन्तलां राज्ञे समर्प्य पुनरेष्यथ ॥४८॥
इति तस्य वचः श्रुत्वा गौतमी च प्रियंवदा ।
मुनिः सङ्गिवरः शिष्यस्तथा शारद्वतो मुनिः ॥४९॥
तथेति प्रतिगृह्याथ मुनेराज्ञां स्वमूर्द्धसु ।
शकुन्तलां पुरस्कृत्य पन्थानं प्रतिपेदिरे ॥५०॥
अथ दक्षिणतस्तस्याः शिवा घोरं ववाशिरे ।
मृगाश्च चेलुः सव्येन वाता वान्ति स्म धूसराः ॥५१॥

---

* प्रायोजयन् ।

तदालोक्य समुद्विग्ना पथि यान्ती शकुन्तला ।
नितम्बिनी गर्भसत्त्वा न शेके चलितुं द्रुतम् ॥५३॥
अथ मध्याह्नसमये प्राप्य प्राचीं सरस्वतीम् ।
मुनेः शिष्यौ च मध्याह्नक्रियां चक्रतुरेव तौ ॥५४॥
प्रियंवदा गौतमी च सलिलं तत्जगाहतुः । *
शकुन्तलापि तत्रैव स्नानार्थमुपचक्रमे ॥५५॥
प्रियंवदाकरे न्यस्य अभिज्ञानाङ्गुरीयकम् ।
स्नातुं सरस्वतीतोयमगाहत सुलोचना ॥
प्रियंवदा तु तद् † गृह्य वसनाञ्चलमध्यतः ।
यावन्न्यस्तवती तावत् पपात सलिले द्विज ॥५६॥
प्रियंवदा भिया तस्यै वृत्तान्तं न न्यवेदयत् ।
शकुन्तलापि तत् सख्यै पप्रच्छापि न विस्मृता ॥५७॥
ततः स्नात्वा च ते सर्व्वे समाप्य विधिवत् क्रियाम् ।
दुःषन्तपुरमापेदु ‡ स्त्रास्त्रियस्तौ च तापसौ ॥५८॥

---

## तृतीयोऽध्यायः

शेष उवाच

राजद्वारं समासाद्य कण्वशिष्यौ महामते ।
ऊचतुस्तौ प्रतीहारं तूर्णं राज्ञे निवेदय ॥१॥
काश्यपस्य निदेशेन राजद्वारमिहागतौ ।
शिष्यौ तस्य सङ्गिवर-शारद्वतसमाह्वयौ ॥२॥

---

* तत्जगाहाते । † गृहीत्वा ‡ मापेदिरे ।

सुता तस्य च कल्याणी द्वे अन्ये च द्विजस्त्रियौ ।
प्रतीहारस्ततो गत्वा राज्ञे सर्व्वं न्यवेदयत् ॥३॥
राजा पुरोधसं प्राह गौतमं हृदि चिन्तयन् ।
कथमेतौ मुनेः शिष्यौ स्त्रीभिरेताभिरावृतौ ॥४॥
आगताविह संप्राप्तौ भवानेव हि पृच्छतु ।
किं कण्वस्याश्रमे कश्चिद्राक्षसः कुरुतेऽनयम् ॥५॥
न जानाति हि दुष्टात्मा दुःषन्तं राक्षसान्तकम् ।
किं वने पशवस्त्यक्त्वा नियमं मुनिना कृतम् ॥६॥
बाधन्ते व्याघ्रसिंहाद्याः स्त्रियो बालाञ् जरायुतान् ।
मृगयापि मया तावन्न कृता पुरवासिना ॥७॥
किं वा वन्यफलान्यद्य प्रभवन्ति न कानने ।
तेनाहारविनाभावाद्दुःखितास्ते तपोधनाः ॥८॥
यदद्य पतितं घोरं मुनीनां दुःखकारणम् ।
विधुनोमि तदद्यैव याहि पृच्छ तपोधनौ ॥९॥
पाद्यादीनि पुरस्कृत्य विधायातिथिसत्क्रियाम् ।
वासयस्व मुनी विप्र स्वगृहे ताः स्त्रियस्तथा ॥१०॥
चेद्विशेषविवक्षापि तयोरस्ति विबुध्य तत् ।
विज्ञापयिष्यसि पुनस्तद्विचार्यं करोम्यहम् ॥११॥

शेष उवाच

इति तद्वाक्यमादाय पुरोधाः स तपोधनः ।
पाद्यादीनि पुरस्कृत्य द्वारमागतवान् द्विज ॥१२॥
राज्ञोक्तं सर्व्वमाचष्टे ददर्श च शकुन्तलाम् ।
अन्तःसत्त्वां महाभागां शिरः प्रच्छाद्य वाससा ॥१३॥
अधोमुखीं चन्द्रकलामिव दीप्तिमतीं पुरः ।
पप्रच्छ च मुनी केयं सुन्दरी जगदद्भुता ।
अन्तःसत्त्वेव कल्याणी लज्जयाधोमुखी स्थिता ॥१४॥

शिष्यावूचतुः

विश्वामित्रसुता चेयं मेनकागर्भसंभवा ।
कण्वेन पालिता राज्ञी दुःषन्तस्य महीपतेः ॥१५॥
सेयं संप्रेषिता ब्रह्मन् कण्वेन नृपमन्दिरम् ।
अस्यैव भूपतेस्तेजो बिभ्रती मृगलोचना ॥१६॥
राज्ञे निवेदयत्वद्य तद्भवांस्त्वरया द्विज ।
नेयं राज्ञी द्वारदेशे स्थातुमर्हा महीपतेः ॥१७॥

शेष उवाच

पुरोधास्तदुपाकर्ण्य संभ्रमेण महीपतिम् ।
गत्वा निवेदयामास वृत्तान्तं मुनिभाषितम् ॥१८॥
दुःषन्तस्तदुपश्रुत्य विस्मृतिं परमां गतः ।
उवाच ब्राह्मणं ब्रह्मन् वचसा कटुना नृपः ॥१९॥
नैवं स्मरति मच्चेतः कुत्र का मे विवाहिता ।
गणिका कापि विप्रेन्द्र च्छलेन समुपागता ॥२०॥

गौतम उवाच

न तथा दृश्यते राजन्नन्तःसत्त्वा वरानना ।
अनुजानीहि राजेन्द्र त्वदन्तिकमुपानये ॥२१॥
विलोकय परं रूपं यदि ते स्मृतिरुद्भवेत् ।
प्रवेशनीया शुद्धान्ते नारी श्रीरिव रूपिणी ॥२२॥
स्थातुमर्हा न च द्वारि द्योतयन्ती दिशस्त्विषा ।
यदि नापि स्मृतिस्ते स्यात् तद्रूपं तु तथापि ते ।
विलोक्य भविता नान्यरूपदर्शनलालसा ॥२३ ॥
इति राज्ञानुनीतेनाभ्यनुज्ञातो द्विजोत्तमः ।
आनाययामास मुनी ताः स्त्रियश्च सुलक्षणाः ॥२४॥

आशीर्भिरनुयोज्याथ कण्वशिष्यौ महामती ।
ऊचतुः कण्वसन्देशं निषण्णौ जगतीपतिम् ॥२५॥

शिष्यावूचतुः

त्वामाशिषा वर्द्धयित्वा प्राह त्वामावयोर्गुरुः ।
तच्छृणुष्व * महाराजानन्तरं कर्त्तुमर्हसि ॥२६॥
इयं शकुन्तला नाम विश्वामित्रसुतानघ ।
मेनकासङ्गमाज्जाता पालिता दुहिता मम ॥२७॥
मृगयाचारिणारण्ये गान्धर्व्वेण महीपते ।
विधिना यद्गृहीताभून्ममानुज्ञां विनापि हि ॥२८॥
तत् साधुरिति तं मन्ये क्षत्रियाणामयं विधिः ।
तव सा बिभ्रती तेजो वत्सं नार्हीटजे मम ॥२९॥
महिषी राजराजस्य साक्षात् श्रीरिव रूपिणी ।
सेयं प्रगृह्यतां राजन् कल्याणी महिषी तव ॥३०॥
जनयिष्यति यं पुत्रमियं राज्ञी शकुन्तला ।
चक्रवर्त्ती राजराजो महात्मा स भविष्यति ॥३१॥
इत्याशिषा † नियुज्य त्वां गुरुराह महातपाः ।
इयं प्रियंवदा नाम सखी चास्या मुनेः सुता ॥३२॥
इयञ्च ब्राह्मणी वृद्धा राजन् गौतमवंशजा ।
राजन् वयमिहायाता अनया गुरुवाक्यतः ॥३३॥

राजोवाच

कति सन्तीह गणिका भ्रमन्ति कामसेवया ।
राजराजस्य महिषी का नो भवितुमिच्छति ॥३४॥
ब्राह्मणा विविधाः सन्ति तापसाश्छद्मरूपिणः ।
तासामनुग्रहेणैव समं ताभिर्भ्रमन्ति च ।
भुञ्जते विपुलान् भोगान् गणिकाभिरुपार्जितान् ॥३५॥

---

* शृणुष्व । † नियोज्य ।

निशम्य नृपतेर्वाक्यं शिष्यौ कण्वस्य तापसौ ।
शेपतुर्विरहेणास्याः पश्चात्तापमवाप्स्यसि ॥३६॥
इत्युक्त्वा तौ गतौ वृद्धौ तापसौ ब्रह्मवादिनौ ।
गौतमस्तौ प्रसाद्याथावासयत् स्वे च वेश्मनि ॥३७॥
अथ सा गौतमी वृद्धा जगाद जगतीपतिम् ।
नैवमर्हसि भो राजन् विश्वामित्रसुतां प्रति ॥३८॥
एवं लावण्यमापन्ना क्व दृष्टा गणिका त्वया ।
अन्तःसत्त्वा महाभागा त्वया राजन् विवाहिता ॥३९॥
समाहितेन मनसा स्मर पश्य च सुन्दरीम् ।
इत्युक्त्वा मोचयामास शिरश्छादनमम्बरम् ॥४०॥

राजोवाच

पौरवाणां कुले जाताः सतां मार्गे कृतासनाः ।
न वयं रूपमात्रेण गणिकानां * भ्रमामहे ॥४१॥
एवं वदति भूपाले व्रीडितेव तपस्विनी ।
निःसंज्ञेव च दुःखेन तस्थौ स्थूणेव निश्चला ॥४२॥
संरम्भामर्षताम्राक्षी † स्फुरमाणोष्ठसम्पुटा ।
कटाक्षैर्निर्दहन्तीव तिर्य्यग्राजानमैक्षत ॥४३॥
आकारं गूहमाना च मन्युनाभिसमीरितम् ।
तपसा संभृतं तेजो धारयामास वै तदा ॥४४॥
सा मुहूर्त्तमिव ध्यात्वा दुःखामर्षसमन्विता ।
भर्त्तारमभिसंप्रेक्ष्य क्रुद्धा राजानमब्रवीत् ॥४५॥
कथं न स्मरसे ‡ राजन् मृगयामधिगच्छता ।
गान्धर्व्वेण गृहीतो यत् पाणिर्मे विधिना नृप ॥४६॥
इति श्रुत्वा तु वचनं शापेनास्तमितस्मृतिः ।
अब्रवीन्न स्मरामि त्वां कस्य त्वं दुष्टतापसि ॥४७॥

---

* भ्रमामः ।  † स्फुरदोष्ठ ।  ‡ स्मरसि ।

धर्मकामार्थसम्बन्धं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत् कुरु ॥४८॥

शकुन्तलोवाच

कुतः प्रियंवदे साध्वि अभिज्ञानमिहानय ।
धूर्त्तमेनं सभामध्ये क्षेपयामि नराधिपम् ॥४९॥
इत्युक्त्वा पाणिमाक्षिप्य भूयो भूयः प्रियंवदाम् ।
उवाच देहि देहीति क्षेपयामि नराधिपम् ॥५०॥
प्रियंवदा तु नीचैस्तां जगाद मृगलोचनाम् ।
कर्णान्तिके समासाद्य पतितं ते तदम्भसि ॥५१॥
तदुपश्रुत्य कल्याणी रम्भेव मरुताहता ।
पपात भूमौ निश्चेष्टा हा हतास्मीति वादिनी ॥५२॥
अथ तां गौतमी वृद्धा बाहुभ्यां मृगलोचनाम् ।
आश्लिष्य सान्त्वयामास लेभे संज्ञां ततः पुनः ॥५३॥
अथ क्रुद्धा महाभागा सख्यै राज्ञे च भामिनी ।
उवाचाश्रूणि सम्मार्ज्य स्मरन्ती पितरं मुनिम् ॥५४॥
जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
न जानामीति निःशङ्कं यथान्यः प्राकृतो जनः ॥५५॥
अत्र ते हृदयं वेद सत्यस्यैवानृतस्य वा ।
कल्याणं वद साक्ष्येण मात्मानमवमन्यथाः ॥५६॥
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥५७॥
एकोऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्म्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि ॥५८॥
मन्यते पातकं कृत्वा न कश्चिद्वेत्ति मामिति ।
विदन्ति चैनं देवाश्च स्वस्यैवान्तरपूरुषः ॥५९॥

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मोऽपि जानाति नरस्य वृत्तम् ॥

यमो वैवस्वतस्तस्य निर्य्यातयति दुष्कृतम् ।
हृदि स्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥६१ ॥
न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः ।
तं यमः पापकर्म्माणं निर्य्यातयति दुष्कृतम् ॥६२ ॥
योऽवमन्यात्मनात्मानमन्यथा प्रतिपद्यते ।
न तस्य देवाः श्रेयांसो यस्यात्मापि न कारणम् ॥६३॥
स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम् ।
अर्च्चार्हां नार्च्चयसि मां स्वयं भार्य्यामुपस्थिताम् ॥६४॥
किमर्थं मां प्राकृतवदुपप्रेक्षसि * संसदि ।
न खल्वरण्ये रुदितमस्तु मे शृणु भाषितम् ॥६५॥
यदि मे याचमानाया वचनं न करिष्यसि ।
कण्वशापेन ते मूर्धा शतधैव भविष्यति ॥६६॥
भार्य्यां पतिः समाविश्य यज्जायेत नराधिप ।
जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः ॥६७॥
यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत्तारयति सन्तत्या पूर्व्वप्रेतान् पितामहान् ॥६८॥
पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्त्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥६९॥
मुनिनाभिहिता चाहं तव पुत्त्रो भविष्यति ।
राजराजश्चक्रवर्त्ती न तन्मिथ्या भविष्यति ॥७०॥
सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती ।
सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥७१॥

अर्द्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा।
भार्या मूलं त्रिवर्गस्य भार्या मूलञ्च सन्ततिः॥७२॥

भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः।
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः॥७३॥

सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः।
पितरो धर्म्मकार्येषु भवन्त्यार्तस्य मातरः॥७४॥

कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै।
यः सदारः स विश्रान्तस्तस्माद्दाराः परा गतिः॥७५॥

संसरन्तमभिप्रेतं विषमेष्ववपातिनम्।
भार्य्यैवान्वेति भर्त्तारं सन्ततं या पतिव्रता॥७६॥

प्रथमं संस्थिता भार्या पतिं प्रेत्य समीक्षते।
पूर्व्वं मृतं च भर्त्तारं पश्चात् साध्व्यनुगच्छति॥७७॥

एतस्मात् कारणाद् भूप पाणिग्रहणमिष्यते।
यदाप्नोति पतिर्भार्यामिह लोके परत्र च॥७८॥

आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः।
तस्माद् भार्य्यां नरः पश्येन्मातृवत् पुत्रमातरम्॥७९॥

भार्य्यायां जनितं पुत्रमादर्शेष्विव चाननम्।
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत्॥८०॥

दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः।
ह्लादन्ते स्वेषु दारेषु घर्म्मार्त्ताः सलिलेष्विव॥८१॥

सुसंरब्धोऽपि रामाणां न कुर्यादप्रियं नरः।
रतिं प्रीतिं च धर्म्मञ्च तास्वायत्तमवेक्ष्य हि॥८२॥

आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम्।
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः॥८३॥

परिपत्य यथा सूनुर्धरणीरेणुलुण्ठितः ।
पितुराश्लिष्यते * ऽङ्गानि किमस्त्यभ्यधिकं ततः ॥८४॥
वरं प्रसूय पुत्रं ते विधाय च सुखं तव ।
गमिष्यामि महाराज कण्वस्य पितुराश्रमम् ॥८५॥
अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः ।
न भरेथाः कथं नु त्वं धर्म्मज्ञः सन् स्वमात्मजम् ॥८६॥
न वाससां न रामाणां नापां स्पर्शस्तथाविधः ।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥८७॥
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम् ।
गुरुर्गरीयसां श्रेष्ठः पुत्त्रः स्पर्शवतां वरः ॥८८॥
स्पृशतु त्वां समाश्लिष्य पुत्त्रो मे प्रियदर्शनः ।
पश्चादहं गमिष्यामि पितुरेवाश्रमं प्रति ॥८९॥
आहर्त्ता वाजिमेधस्य शतसंख्यस्य पौरव ।
भविता तनयस्तेऽयमित्याह मां गुरुर्मुनिः ॥९०॥
मृगावकृष्टेन हि ते मृगयां परिधावता ।
अहमासादिता राजन् कुमारी पितुराश्रमे ॥९१॥
उर्व्वशी पूर्व्वचित्तिश्च सहजन्या च मेनका ।
विश्वाची च घृताची च षडेवाप्सरसां वराः ॥९२॥
तासां मां मेनका नाम ब्रह्मयोनिर्वराप्सराः ।
दिवः संप्राप्य जगतीं विश्वामित्रादजीजनत् ॥९३॥
सा मां हिमवतः प्रस्थे सुषुवे मेनकाप्सराः ।
अवकीर्य च मां याता परात्मजमिवासती ॥९४॥
किं नु कर्म्माशुभं पूर्व्वं कृतवत्यस्मि जन्मनि ।
यदहं बान्धवैस्त्यक्ता बाल्ये संप्रति च त्वया ॥९५॥

---

* आश्लिष्यति ।

दुःषन्त उवाच

न गर्भमभिजानामि त्वयि मत्तेजसार्जितम् ।
असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ॥९६॥
मेनका निरनुक्रोशा बन्धकी जननी तव ।
यथाऽसि हिमवत्प्रस्थे निर्म्माल्यमिव चोज्झिता ॥९७॥
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव ।
विश्वामित्रो ब्राह्मणत्वलुब्धः कामवशं गतः ॥९८॥
मेनकाप्सरसां श्रेष्ठा महर्षीणां पिता च ते ।
तयोरपत्यं कन्या त्वं पुंश्चलीव प्रभाषसे ॥९९॥
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ।
विशेषतो मत्सकाशे दुष्टतापसि गम्यताम ॥१००॥
क्व महर्षिः स चैवोग्रः क्वाप्सराः सा च मेनका ।
क्व च त्वमेवं कृपणा तापसीवेशधारिणी ॥१०१॥
सुनिकृष्टा च ते योनिः पुंश्चलीव प्रभाषसे ।
यदृच्छया कामरागात् कयाचित् जनिता ह्यसि ॥१०२॥
सर्व्वमेतत् परोक्षं मे यत्त्वं वदसि तापसि ।
नाहं त्वामभिजानामि यथेच्छं गम्यतां त्वया ॥१०३॥

---

## चतुर्थोऽध्यायः

शकुन्तलोवाच

राजन् सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ॥१॥
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् ।
ममैवोद्रिच्यते जन्म राजेन्द्र तव जन्मतः ॥२॥

क्षितावटसि राजेन्द्र अन्तरीक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥३॥
महेन्द्रस्य कुवेरस्य यमस्य वरुणस्य च ।
भवनान्यनुसंयामि प्रभावं पश्य मे नृप ॥४॥
सत्यश्च जनवादोऽयं तं प्रवच्यामि ते नृप ।
निदर्शनं ब्रवीमीति न कोपं कर्त्तुमर्हसि ॥५॥
विरूपो यावदादर्शे स्वमुखं नैव पश्यति ।
मन्यते तावदात्मानमन्येभ्यो रूपवत्तरम् ॥६॥
यदा तु मुखमादर्शे विकृतं * पश्यतेत्मनः ।
तदेतरं विजानाति स्वमेव नेतरं नरः ॥ ७॥
यस्तु स्याद्रूपसम्पन्नो न स निन्दति कञ्चन ।
अतीव जल्पन् दुर्वाचो भवतीह विकत्थनः ॥८॥
मूर्खो हि जल्पतां नृणां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥९॥
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद् वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥१०॥
अन्यान् परिवदन् साधुर्यथाहि परितप्यते ।
तथा परिवदन्नन्यान् हृष्टो भवति दुर्जनः ॥ ११॥
अभिवाद्य यथा वृद्धान् सन्तो गच्छन्ति निर्वृतिम् ।
एवं सज्जनमाक्रम्य मूर्खो भवति निर्वृतः ॥१२॥
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः ।
यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥१३॥
अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते ।
यत्र दुर्जन इत्याह दुर्जनः सज्जनं स्वयम् ॥१४॥

---

* पश्यत्यात्मनः ।

सत्यधर्म्मच्युतात् पुंसः क्रुद्धादाशीविषादिव ।
अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः ॥१५॥
स्वयमुत्पाद्य वै गर्भं न ममेति वदत्यहो ।
तस्य देवाः श्रियं घ्नन्ति न स लोकानुपाश्नुते ॥१६॥
पुत्रस्ते भविता राजन्पुत्रस्य महागुणः ।
चक्रवर्त्ती राजराज उत्तमः सर्व्वधन्विनाम् ॥१७॥
स त्वं नृपतिशार्द्दूल न पुत्रं त्यक्तुमर्हसि ।
आत्मानं सत्यधर्म्मौ च पालयन् पृथिवीपते ॥१८॥
वरं कूपशताद्वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात् पुत्रः सत्यं पुत्रशताद् वरम् ॥१९॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥२०॥
राजन् सत्यं परं ब्रह्म सत्यञ्च समयः परम् ।
मा त्याक्षीः समयं राजन् सत्यं सङ्गतमस्तु ते ॥२१॥
अनृते चेत् प्रसङ्गस्ते श्रद्दधासि न चेत् स्वयम् ।
कण्वस्यैवाश्रमं गच्छ त्वादृशे नास्ति सङ्गतम् ॥२२॥
ऋतेऽपि त्वां महाराज शैलराजावतंसकाम् ।
चतुर्वर्णामिमामुर्व्वीं पुत्रो मे पालयिष्यति ।
मुनेः कण्वस्य वै वाक्यं भविता कथमन्यथा ॥२३॥

राजोवाच

किं नालपन्ति पुंश्चल्य एवमेव सुदुर्व्वचः ।
याहि त्वं गच्छ वाचाटे दूषयिष्यन्ति मां जनाः ॥२४॥

पुरोहित उवाच

अत्र वक्ष्यामि ते मन्त्रं शृणु राजन् महामते ।
यावत्प्रसवमत्रैव नारी तिष्ठतु ते गृहे ॥२५॥

यदि ते सदृशं पुत्रं कामिन्येषा प्रसोष्यति * ।
ततस्तवैव भार्य्येति वेत्स्यामस्तदनन्तरम् ।
शालिबीजाद्विजायेत न कदाचिद् यवाङ्कुरः ॥२६॥

राजोवाच

नैषा शुद्धान्तमध्येऽपि मम वासमिहार्हति ।
संसर्गादपि पंश्चल्यो दूषयन्ति कुलस्त्रियः ॥२७॥

पुरोहित उवाच

अदृष्टतनयास्त्योऽसि राजराजोऽपि भूतले ।
अतस्ते सन्ततौ श्रद्धा राजन् मे जायतेऽधिका ॥२८॥

इयं साध्वी वरारोहा कण्वेन परिपालिता ।
व्यभिचारमतीं राजन्नाहं मन्ये मनागपि ॥२९॥

यावत्प्रसवमेतान्तु वासयेऽहं निजालये ।
प्रसवे सति कल्याणीं स्वयमेव ग्रहीष्यसि ॥३०॥

इत्युक्त्वा गौतमो ब्रह्मन् सान्त्वयित्वा शकुन्तलाम् ।
स्वगृहायैव तां नेतुं † विमनामुपचक्रमे ॥३१॥

सा चापि मुक्तकण्ठं वै रुदती मृगलोचना ।
शनैः शनैर्गौतमं तमनुगन्तुं प्रचक्रमे ॥३२॥

एतस्मिन्नन्तरे विप्र मेनकाप्सरसां वरा ।
तेजोरूपा व्योममध्यात्तडित्पातं पपात सा ॥३३॥

किमिदं किमिदं चित्रमिति जल्पत्सु सर्व्वतः ।
सभास्थेषु च सर्व्वेषु तेजसा धर्षितेषु च ॥३४॥

---

* प्रसोष्यते ।　　　† विमनसम् ।

आलोकनेऽप्यशक्तेषु दुःषन्ते भयविह्वले ।
शकुन्तलां समादाय अङ्कमारोप्य सत्वरम् ॥
अम्बरं विजगाहे सा तत् केनापि न लक्षितम् ॥२५॥
एवं गते तु दुःषन्तः खेदमाप ततो भृशम् ।
देवेन रचितां मायाममन्यत तदा नृपः ॥२६॥

---

## पञ्चमोऽध्यायः

शेष उवाच

एकदा स महीपालो मन्त्रिभिर्ब्राह्मणैः सह ।
प्रजानां वेदितुं वृत्तं बभ्राम नगरे द्विज ॥१॥
तत्र राजभटः कश्चिद्दृढमाबध्य धीवरम् ।
दण्डेन ताडयन् ग्रैर्वचोभिः समतर्जयत् ॥२॥
राजाभरणमेतद्धै यत्तया चोरितं कुलात् ।
अतो वद्धत्वमापन्नं त्वां नयामि नृपान्तिके ॥३॥
इत्युक्त्वा तं करे * गृह्य ताडयन् बहु मूर्धनि ।
राजान्तिकमुपानीय राजानमिदमब्रवीत् ॥४॥
एष धीवरको राजंश्चोरयित्वाङ्गुरीयकम् ।
त्वन्नामचिह्नितं लोके विदितं रत्ननिर्म्मितम् ।
विक्रेतुमुद्यतः पापो मया दृष्टो महीपते ॥५॥
राजा तं प्राह दाशेदं कुतो लब्धमिदं त्वया ।
कथयाभयमेतत्ते दत्तं जानीहि साम्प्रतम् ॥६॥

---

* गृहीत्वा ।

धीवर उवाच

जात्याहं धीवरो राजन् मत्स्यमात्रोपजीवकः ।
चौरिकां नैव जानामि न च सूनां न धूर्त्ततां ॥
जालेन मत्स्यान् बध्नामि सरस्वत्या हि रोधसि ॥७॥
एकदा जालमातत्य सरस्वत्यामहं नृप ।
स्थितः प्रत्याशया तत्र तीरस्थं तरुमाश्रितः ॥८॥
रोहितः कोऽपि बलवान् जाले बद्धो बभूव ह ।
ततोऽहं जालमुत्तार्य्य दृष्ट्वा रोहितमुद्धतम् ॥९॥
खड्गेन कृत्तवान् सद्यः परमानन्दनिर्वृतः ।
ततस्तदुदरे लब्धमेतन्नृपाङ्गुरीयकम् ॥१०॥
कस्येति न विजानामि तदहं नगरे तव ।
विक्रेतुमागतो बद्धो भटेनानेन भूमिप ॥११॥

राजोवाच

देहि पश्यामि कस्यैतत् किं रूपमङ्गुरीयकम् ।
त्वमेतन्मूल्यमादाय सुखेनैव व्रजालयम् ॥१२॥
इत्युक्त्वा पाणिनादाय यावद्राजा स पश्यति ।
निपतन्ति स्म नेत्राभ्यां तावदेवाश्रुविन्दवः ॥१३॥
प्रेयसीं तामनुस्मृत्य तथा गान्धर्वकर्म्म च ।
गर्भाधानञ्च सर्व्वं तन्मूर्च्छितो निपपात ह ॥१४॥
तदा पुरोहितामात्या भृशमुद्विग्नचेतसः ।
उत्थाप्य तं महीपालं निवेश्य च वरासने ॥
लब्धसंज्ञं शनैर्ब्रह्मन् पप्रच्छुः किमिदं तव ॥१५॥
दुःषन्तोऽपि समाश्वस्य प्रेयसीं तामनुस्मरन् ।
निश्वस्य दीर्घमुष्णञ्च अश्रुमिश्रमभाषत ॥१६॥
प्रत्याख्याता वरारोहा मन्दभाग्येन यन्मया ।
तदद्य मां दुनोत्येवमङ्गुरीयस्य दर्शनात् ॥१७॥

तया यदुक्तं मां प्राप्य मम तेजो दधानया ।
नानृतं तत्र वै किञ्चिन्मयैवानृतकं कृतम् ॥१८॥
मृगयाचारिणारण्ये सैव कण्वाश्रमे मया ।
गान्धर्व्वेणैव धर्म्मेण निर्बन्धेन विवाहिता ॥१९॥
उषितञ्च तया सार्द्धं प्रतिज्ञातञ्च सर्व्वथा ।
बलेन चतुरङ्गेण नयिष्ये * नगरं प्रति ॥२०॥
अभिज्ञानञ्च मे दत्तमेतद्रत्नाङ्गुरीयकम् ।
केनापि दैवयोगेन सर्व्वं तद्विस्मृतं मया ॥२१॥
हन्त पापं कृतं भूरि मया निष्करुणात्मना ।
आसन्नप्रसवा भार्य्या त्यक्ता देवसुतोपमा ॥२२॥
अनुकूलो न मे धाता नरकान्न च निष्कृतिः ।
प्रतिज्ञापूर्व्वकं पाणिगृहीता यद्विवर्जिता ॥२३॥
श्रीरूपिणी समागत्य स्वयमेव कृपान्विता ।
अर्पयन्ती महारत्नं यथा केनापि वर्ज्यते ॥२४॥
तथा मया पुत्रफला परा साध्वी पतिव्रता ।
याचमाना सवैयग्र्यं दूरादेव विवर्जिता ॥२५॥
मेनकाप्सरसो जाता विश्वामित्रसुता सती ।
कण्वेन पालिता कन्या चारुशीला तपस्विनी ॥२६॥
चिन्तामणिरिवायाता काममर्पयितुं स्वयम् ।
मया निराकृता बाला अन्तःसत्त्वा सुलोचना ॥२७॥
कल्पवल्लीव कामानां सम्प्रदानेऽभ्युपस्थिता ।
उन्मूलिता मया तन्वी † प्रमोष्यन्ती नरोत्तमम् ॥२८॥
संरम्भारुणनेत्रायाः स्मरचापायितभ्रुवः ।
वचांसि गूढगर्व्वाणि विदुन्वन्ति स्मृतानि माम् ॥२९॥

---

* नेष्यति ।  † प्रमोष्यमाणा ।

एवं * विलपमानं तं राजानं गौतमोऽब्रवीत् ।
तद्गतं † नानुशोचस्व समाश्वस परन्तप ॥३०॥
कथितञ्च मया तत्र दृष्ट्वा तस्याः सुलक्षणम् ।
तद्रूपशालिनी बाला राज्ञी भवितुमर्हति ॥३१॥
सा हि मेनकया जाता चारुरूपा तपस्विनी ।
देवीव नावमानार्हा त्वया राजन् विवाहिता ॥३२॥
यद्भूतं महदाश्चर्यं प्रत्याख्यातवति त्वयि ।
तद्दृष्ट्वा के न शोचन्ति वदन्तस्त्वां हतश्रियम् ॥३३॥
भद्रं वाप्यथवाभद्रं प्रियमप्रियमेव वा ।
यद्गतं तद्गतं राजन् नानुशोचन्ति पण्डिताः ॥३४॥

शेष उवाच

विमृषत्स्वेव तेष्वेव देशान्तरचरश्चरः ।
राज्ञे निवेदयामास यद्दृष्टं सागराम्भसि ॥३५॥

चर उवाच

राजन् सांयात्रिको नष्टो धनवृद्धिर्महाबलः ।
विपन्नः सागरे सप्त वाहयन् सम्भृतास्तरीः ॥३६॥
स चानपत्यस्तस्येष्टा नावो रत्नेन पूरिताः ।
तवैव कोषमर्हन्ति गृह्यतामचिरेण ताः ॥३७॥

राजोवाच

यान्तु मे मन्त्रिणः सम्यग् जानन्तु तत्परिग्रहान् ।
यदि काचिन्नवैज्ञाय्या गर्भिणी वणिजः क्वचित् ॥
सैव तद्धन ‡ मादद्यान्नाधिकारी तदा नृपः ॥३८॥

---

* विलपन्तं　　† अनुशोच समाश्वसिहि ।　　‡ आददीत ।

तच्छ्रुत्वा मन्त्रिणो गत्वा विज्ञाय च विशेषतः ।
राज्ञे निवेदयामासुर्वृत्तान्तं ब्राह्मणर्षभ ॥३९॥
अत्रैव नगरे राजन् भार्य्या तस्य विलासिनी ।
अन्तःसत्त्वा वणिक्पुत्रो वर्त्तते च पतिव्रता ॥४०॥
राजा प्राह तरोस्थानि यानि यानि धनानि च ।
तानि तस्यै ददत्वद्य भटा मे यान्तु सत्वराः ॥४१॥
इति प्रस्थाप्य राजेन्द्रो भटांस्तद्धनरक्षणे ।
द्विगुणेनैव शोकेन दह्यते स्म ततोऽब्रवीत् ॥४२॥
ममाप्यन्त एवमेव मम राज्यस्य दुर्गतिः ।
कं यास्यति महीयं हि धार्म्मिकं वाप्यधार्म्मिकम् ॥४३॥
अन्तःसत्त्वा महाभागा या सा भार्य्याप्युपस्थिता ।
उपेक्षिता प्रमादेन मन्दभाग्येन सा मया ॥४४॥
अत ऊर्द्ध्वं मया दत्तं पानीयं विधिनापि च ।
पास्यन्ति पितरः कोष्णनिश्वासेन मलीमसम् ।
पिण्डविच्छेददुःखार्त्ताः पिण्डानि च तथैव हि ॥४५॥
क्व लभ्यन्ते सा ललना साक्षाच्छ्रीरिव रूपिणी ।
न मन्दभाग्यं पापिष्ठं ज्ञात्वा मां पुनरेष्यति ॥४६॥
नैवंविधस्य दुष्टस्य दारुणस्य दुरात्मनः ।
तथाविधा वरारोहा भार्य्या भवितुमर्हति ॥४७॥
एवं विलपमानस्य दुःषन्तस्य महीपतेः ।
व्यतीयुस्त्रीणि वर्षाणि शोचतोऽहर्निशं द्विज ॥४८॥
अथासौ देवराजेन समाहूतो ययौ दिवम् ।
त्रिदिवेशैरवध्यानां निधनाय सुरद्विषाम् ॥४९॥
निर्वाह्य देवताकर्म्म रथं मातलिसारथिम् ।
आरुह्य भुवमायास्यन् मारीचाश्रममभ्ययात् ॥५०॥

तत्र काचिज्जरा नारी ब्राह्मणी बालमद्भुतम् ।
लालयन्ती नृपं वीक्ष्य ददावासनमन्तिके ॥५१॥
बालस्तु तावद्वेगेन प्रविश्य गहनं वनम् ।
निबध्य पञ्च पञ्चास्यान् लताभिः समुपानयत् ॥५२॥
उवाच वृद्धामेतेषां कति दन्ताः समुन्नताः ।
निम्ना वा कति मध्या वा गणयित्वा वदाशु मे ॥५३॥
दुःषन्तस्तु तदालक्ष्य बालस्याद्भुतविक्रमम् ।
चिन्तयामास मेधावी भार्य्याविरहकातरः ॥५४॥
पौरवादप्यहो बालो धत्तेऽधिकपराक्रमम् ।
सर्व्वराजश्रिया युक्तो न विप्रस्तदयं भवेत् ॥५५॥
चेतो मे वहते स्नेहं दृष्ट्वा बालं दुरासदम् ।
कारणं तत्र पश्यामि यन्ममेयमपुत्रता ॥ ५६ ॥
इति चिन्तापरे राज्ञि सिंहःकोऽपि स्वबन्धनम् ।
छित्त्वा नखेन दुर्व्वार्यो गन्तुं प्राक्रमत द्विज ॥५७॥
दूरादुत्प्लुत्य तं बालो निगृह्य पुनरेव तम् ।
उवाच किं रे पञ्चास्य प्राप्तोऽसि ब्रह्मबालकम् ॥५८॥
पौरवोऽस्मि न जानासि क्षत्रियो रणकोविदः ।
तदुपश्रुत्य राजर्षेः किञ्चिदुच्छ्वसितं मनः ॥५९॥
बालभाषितमित्येव सम्यक् श्रद्धापि नाभवत् ।
अथागमत् काश्यपोऽपि वनात् कुशसमिद्धरः ।
विलोक्य तत्र राजानं दुःषन्तं मुमुदे भृशम् ॥६०॥
आशीर्भिस्तमथाभ्यर्च्च्य विधायातिथिसत्क्रियाम् ।
पप्रच्छ कुशलं राज्ये देवानाञ्च तपोधनः ॥६१॥
राजा तत् सर्व्वमाचष्टे मुनिवाचा गतश्रमः ।
अथोवाच विहस्येषत् कोऽयं बालस्तपोधन ।
महाबलो महाबाहुः पौरवोऽहमिति ब्रुवन् ॥ ६२ ॥

कश्यप उवाच

तवैव तनयो राजन् यमसूत शकुन्तला ।
दमनः सर्व्वसत्त्वानां सिंहादीनां महाबलः ॥६३॥
तत् सर्व्वदमनो नाम मयैवास्य निरूपितम् ।
भरस्वेति च वच्मि त्वां ततोऽसौ भरतो भवेत् ॥६४॥
दुर्व्वाससो हि शापेन त्वया या विस्मृता पुरा ।
त्यक्ता मेनकयानीय मयि न्यस्ता मनस्विनी ॥६५॥
सा ते शकुन्तला राज्ञी सुषाविमं कुमारकम् ।
महाबलो महाप्राणो दुर्द्धर्षः सर्व्वभूभुजाम् ।
वद्धैः क्रीडति पञ्चास्यैः प्रबिभेत्यपि नान्तकात् ॥ ६६ ॥
मया विसृष्टं दुर्द्दान्तः शिशुरेष ममाश्रये ।
वस्तुं नार्हति बाल्यादि कदा किं नु समाचरेत् ॥६७॥
अत एनं महीभर्त्तुः सुतं तं प्रापयाम्यहम् ।
त्वमथो देवकार्य्यार्थं गतः स्वर्गं ततो मया ॥६८॥
कृतो विलम्बो राजर्षे शापान्तेऽपि तव प्रभो ।
एष ते गृह्यतां पुत्रश्चक्रवर्त्ती भविष्यति ॥६९॥
आहर्त्ता सर्व्वयज्ञानां महाभागवतो नृप ।
इत्युक्त्वा ब्राह्मणीं प्राह वृद्धां देवगुरुर्मुनिः ॥७०॥
शकुन्तलामिहानीय समर्पय महीपतौ ।
इत्युक्ता ब्राह्मणी गत्वा समाहूय शकुन्तलाम् ॥७१॥
राज्ञे समर्पयामास राजा च मुमुदे भृशम् ।
अथानुज्ञाप्य मारीचं सभार्य्यः ससुतो नृपः ॥७२॥
हृष्टः स्वपुरमागच्छद्देवयानेन मारिष ।
स एव भरतो नाम दुःषन्ततनयो महान् ।
ववृधे तव विप्रेन्द्र शुक्लपक्षे यथा शशी ॥७३॥

---

# शकुन्तलोपाख्यानम्

## [ श्रीमद्भागवतीयम् ]

### ( नवमस्कन्धे विंशोऽध्यायः )

दुःषन्तो मृगयां यातः कण्वाश्रमपदं गतः ।
तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव ॥८॥
विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम् ।
बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥९॥
तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ।
पप्रच्छ कामसन्तप्तः प्रहसन् श्लक्ष्णया गिरा ॥१०॥
का त्वं कमलपत्राक्षि कस्यासि हृदयङ्गमे ।
किं स्विच्चिकीर्षितं तत्र भवत्या निर्जने वने ॥११॥
व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ।
न हि चेतः पौरवाणामधर्मे रमते क्वचित् ॥१२॥

श्रीशकुन्तलोवाच

विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ।
वेदैतद्भगवान् कण्वो वीर किं करवाम ते ॥१३॥
आस्यतां ह्यरविन्दाक्ष गृह्यतामर्हणञ्च नः ।
भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते ॥१४॥

श्रीदुःषन्त उवाच

उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ।
स्वयं हि वृणते राज्ञां कन्यकाः सदृशं वरम् ॥१५॥

ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम् ।
गान्धर्वविधिना राजा देशकालविधानवित् ॥१६॥
अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ।
श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥१७॥
कण्वः कुमारस्य वने चक्रे समुचिताः क्रियाः ।
बद्ध्वा मृगेन्द्रं तरसा क्रीडति स्म स बालकः ॥१८॥
तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा ।
हरेरंशांशसम्भूतं भर्त्तुरन्तिकमागमत् ॥१९॥
यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ ।
शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥२०॥
माता भस्त्रा * पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुःषन्त मावमंस्थाः शकुन्तलाम् ॥२१॥
रेतोधाः † पुत्रो नयति नरदेव यमक्षयात् ।
त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥२२॥

———

* भस्त्रा चर्मपात्रं तद्वन्माता आधारमात्रम् । पितुरेव पुत्रः । तत्र हेतुर्येनेति । भरस्व पुत्रम् अनेन भरतनाम निरुक्तम् । ततश्च भार्य्यापुत्रौ स्वीकृतवानिति ज्ञेयम् ।

† किञ्च रेतोधाः रेतःसेक्ता वंशकृत् पुत्रो यमक्षयाद् यमभवनात् पितरं नयति तारयति तथा च स्मृतिः—

पुन्नाम्नो नरकाद् यस्मात् त्रायते पितरं सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ इति ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| | | |
|---|---|---|
| July, | १८५४ शकीये आषाढे | Vol. XV. |
| 1932. | १५श-वर्षस्य ३य-संख्या | No 3. |


## उपनिषत्कथा।

( छान्दोग्य उपकोसलविद्या )

[ निबन्धकः—महामहोपाध्यायः श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः ]

विदितमेवैतत् सहृदयानां पाठकानां, यत् परापरभेदेन द्विरूपं हि ब्रह्म प्रायेणोपनिषत्सु लिलक्षयिषितम्। तद्विजिज्ञापयिषया च तत्र तत्र यथायथमनेकरूपा उपासना अपि प्रस्तुताः। तास्तु सर्व्वा एव विद्यापदेनाभिधीयन्त उपनिषत्सु। तत्राप्यपरब्रह्मविद्या द्वारीभवति परब्रह्मविज्ञाने नितरामित्यपि सुप्रतीतमेव सुधियाम्। इयञ्चोपकोसलविद्या परब्रह्मविज्ञानोपायतया समुपन्यस्तेति न विस्मर्त्तव्यम्।

स्वत एव शिष्यसौहित्यसाधनपरे महेश्वरे गुरावखण्डितां भक्तिमनुपालयतां लोकहितरते दैवते च निरुपधि परिचरणवतां पूतचेतसां ब्रह्मचारिणां ब्रह्मविद्याधिगमे खलु देवा अपि द्वारीभवन्तीति दिदर्शयिषुः श्रुतिः पुनरप्याख्यायिकाद्वारेण स्वाभिप्रायं प्रकटयन्त्याह—

"उपकोसलो ह वै कामलायनः ( कमलस्यापत्यं पुमान् ) सत्यकामे जावाले ( गुरौ ) ब्रह्मचर्य्यम् उवास।" उपकोसलश्च ब्रह्मचर्य्यमालम्बमानो यथाशास्त्रमाचार्य्यसपर्य्यादिकमावश्यककृत्यसमुदायमनुपालयन् गुरोरनुज्ञां च वेदवादमिव सदा शिरसि धारयन्, महोदर्कमप्रतर्क्यं गुरूपदेशं च नियतमवधारयञ् श्रद्धया गुरोरग्नीन् परिचचार। एवमन्यदपि ब्रह्मचारिकरणीयतया विहितं कृत्यजातमखेदमन्ववर्त्ततेत्यकथितमपि सुतरामनुमीयत एव। एवमनुदिनमनुशासनं गुरोरनुपालयतस्तस्य द्वादश वर्षाणि व्यतीयुः। गुरुस्तु तस्य सत्त्वोत्कर्षप्रकर्षमनुदिनमुपचीयमानमन्वीक्षमाणो महते हि फलाय पर्य्याप्तोऽयमिति कृत्वा मन्दमतीनितरान् "अन्तेवासिनः समावर्त्तयन्नपि तं नैव समावर्त्तयति स्म।" उपकोसलस्तु हितैषिणोऽपि गुरोर्महोदारमाशयमनाकलयन्नसमावर्त्तितमात्मानमकृतार्थमिव कलयन् मनसि महान्तं खेदमवाप, सन्तापञ्चाधिजगाम।

अथ तस्य तादृशीं मनोगतां तापसन्ततिमाकृतिविशेषेण नितरामाकलयन्ती गुरुपत्नी तु करुणापरवशा सती सविनयं पतिमभ्युवाच— भगवन्! "तप्तो ब्रह्मचारी कुशलं [यथा स्यात्, तथा] अग्नीन् परिचचारीत् [ परिचरितवान् इत्यर्थः ] प्रब्रूह्यास्म इति।"

एवं हि शिष्यसन्तोषं कामयमानया जायया सादरमनुरुद्धोऽपि कार्य्यदर्शी महर्षिर्जाबालः प्रज्ञाचक्षुषा सर्वमन्तरालोच्य फल्गुनद इव सरसान्तरोऽपि बहिर्विरसमिवात्मानं दर्शयन् जायोपरोधमशृण्वन्निव शिष्यचित्तमनवगच्छन्निव बधिरवत् सर्वमनाकर्णयन्निव च "तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे।" शिष्यमनुपदिश्यैव यथाभिमतं देशमभिप्रतस्थे। शिष्य उपकोसलस्त्वनुपदिश्यैव गुरौ प्रवसति सति परमखेदपदमभजत। एवमकृतार्थमिवात्मानमालक्षयन्ननुदिनं खिद्यन् महता व्याधिना समधिचक्रे। स च "व्याधिनाऽनशितुं दध्रे" गुरुणोपेक्षितस्याकृतार्थस्य मरणमेवेति निश्चित्य जीवनं जिहासन्निवानशनव्रतं समाललम्बे।

अथैवं कृतनिश्चयस्य व्याधिना निपीड्यमानस्य नित्यमनश्नतः प्रतिदिनमधिकाधिकमवसीदत उपकोसलस्य कष्टां तादृशीं दशां सोढुमपारयन्ती आचार्य्यपत्नी कृपया तदन्तिकमुपेत्य सस्नेहमिदमुवाच—"व्रतचारिन्! अशान; किन्नु नाश्नासीति।" एवमाभाष्यमाणः शिष्यः "स होवाच—बहवोऽस्मिन् पुरुषे कामा नानात्यया:,—व्याधिभिः प्रतिपूर्णोऽस्मि, नाशिष्यामीति।" इदमत्राकूतम्—भो भगवति! ब्रह्मचर्य्ये वर्त्तमानस्य मम मनसि किलावश्यकर्त्तव्यतया बहवः कामाः प्रादुरासन्। सम्प्रति हि परमकारुणिकस्यापि गुरोरनुग्रहमलभमानस्याकृतार्थतयातितरामनुतप्तस्य मे त एव कामा नितरां प्रतिहन्यमाना हृदयशूलमिव सुदुःसहां वेदनामुपजनयन्तः कामं व्याधय इव संवृत्ताः। तैरेव व्याधिभिरुपतप्तस्य मे अशनाया-पिपासे दूरनिरस्ते; अत एवाहमिदानीं नाशितुमिच्छामीति। एवमन्तरुपतप्तः कल्यानुषक्तः परमगुरुभक्तः पुरुषः समीहितार्थप्राप्तौ कदाचिदपि न विप्रलभ्यते फलेन, सर्व्वेषामन्तश्चरः करुणाकरः परमेश्वरोऽपि यथाकालं तमनुगृह्णाति; देवा अपि तच्चित्तमनुगच्छन्ति। इयमेव हि साधीयसी मर्य्यादा लोकस्थितये भगवतः। सा चोपकोसलेऽपि नान्यथा बभूव। तामेव शाश्वतीं मर्य्यादामनुसरन्तः सकललोकवृत्तं साक्षात्कुर्व्वन्तो दक्षिणाग्निगार्हपत्याहवनीयाख्यास्त्रयोऽग्नयस्तत्सेवासमधिगततुष्टयस्तदानीं तस्मिन्ननुग्रहमाविष्कुर्व्वन्तः सन्तः—"अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्य्यचारीत्। हन्तास्मै प्रब्रवामेति", कठोरतरब्रह्मचर्य्यपरिपालनपरः श्रद्धासहचरः सुष्ठुगुरूपासनकुशल उपकोसलोऽथम् एतावतः कालान् भक्तिपुरःसरमस्मान् समाराध, अन्तस्तापश्चेदानीं परमुपगतो गुरुप्रसादं विना; तदस्य मनोवेदनापनयसमर्था अपि वयं किमित्यकृतज्ञा इव उदासीना वर्त्तामहे; हन्तास्मै प्रशान्तचेतसे श्रद्धाभक्तिपूतमतये ब्रह्मचारिणे शान्तिसन्ततिसुखां परानन्दसन्दोहप्रदां तामेव ब्रह्मविद्यां प्रब्रवामेति—अग्नयः सम्भूयान्योन्यं कथयामासुः। एवं कृताध्यवसाया दयार्ज्जितसदाशयास्ते खल्वग्नयस्तस्मै

विदितभक्तये हितव्रतायोपकोसलाय ब्रह्मविद्यां तदभिलषितामुपदेष्टु-मुपचक्रमिरे।

अथैवं दत्ताशिषो गार्हपत्यान्वाहार्य्यपचनाहवनीयाभिधानास्त्रयोऽग्नयः प्रथमं सम्भूय प्रधानतया प्रसिद्धां ब्रह्मविद्यामभिदधिरे, समनन्तरञ्च तदङ्गविद्या अपि यथायथमेकैकशः समवोचन्, तत्फलानि च सममेव समुपादिशन्, येन तदनुबद्धबुद्धिः स्वत एव विद्यासु प्रवर्त्तेत। अथाय-मृजुमतिरुपकोसलो यदि नामास्मदुपदेशमधिगत्यैव स्वात्मानं कृतार्थ-माकलयन्नाचार्य्योपदेशं नापेक्षेत, ततश्च स्वार्थात् प्रतिहन्येतानर्थञ्चाधि-गच्छेत्, इत्थमन्तरालोचयन्तः कृपापरवशास्ते खल्वग्नय उपकोसलमामन्त्र्य समवोचन्,—भो ब्रह्मचारिन्! नैतावतैवात्मा कृतार्थो मन्तव्यः, अस्ति खल्वन्यदपि ते विज्ञेयम्, तच्चाचार्य्यत एवाधिगन्तव्यमिति विज्ञापयन्तः "आचार्य्यस्तु ते गतिं वक्ता" इत्युक्त्वा तूष्णीम्बभूवुः।

उपकोसलोऽपि करुणाकृष्टचेतसामेषामग्नीनामनाशंसितं प्रसादमधिगम्य तदुदितां विद्यामनिशमनुचिन्तयन् परिशुद्धमानस आत्मन्यानन्दसन्दोह-समुद्बोधेन सुखेन दिनानि यापयितुमारेभे। उपासने तीव्रायासवशेनान्त-रुपजायमानोऽपि परमानन्दो बहिरप्यङ्गानि प्रसादबहुलतया सर्व्वतो भास्वराणीवाकरोत्। एवमेव गच्छत्सु दिवसेष्वाचार्य्यः सत्यकामः प्रवासात् प्रत्याजगाम। अन्तेवासिनश्च दीर्घप्रवासात् परं प्रत्यागत-माचार्य्यमुपाकर्ण्य सर्व्वे सम्भूय तदन्तिकमुपाजग्मुः, उपकोसलोऽपि शिष्टा-चारपद्धतिं प्रतिपालयन् गुरूपसदनं कृतवान्। अथैवमाचार्य्यः सर्व्वानन्ते-वासिनोऽन्तिकागतानालक्ष्य तानेकैकशः कुशलमापृच्छ्य यावत् तमुप-कोसलमवालोकयत्, तावदेव केनचिदचिन्त्यप्रसरेणानन्दप्रवाहेणान्तरुपप्लुतः सस्मितं तमाह—वत्सोपकसल! "ब्रह्मविद इव सोम्य ते मुखं भाति, को नु त्वाऽनुशशास इति।"

एवमाभाष्यमाण उपकोसलस्तु "को नु मानुशिष्याद्भो इतीहापेव निह्नुते।" गुरोः प्रकोपभीत्या बाष्पावरुद्धकण्ठ इव नितरां प्रस्खलद्वचनः

भगवन्! उपदेष्टरि गुरौ भवति प्रवसति सति को नु खलु मामधन्यं ब्रह्मविद्यामुपदिशेत्? इत्येवं काकुव्याजेन वृत्तमपह्नुते इव, न तु गुरुसमीपे आत्मवृत्तापह्नवमेव चक्रे। प्रकृतार्थमावेदयन्नङ्गुल्या विनिर्दिशन् "नूनमीदृशाः" इत्यग्नीनुदाजहार।

गुरुस्तु स्नेहप्रवणहृदयतया परमानन्दमास्वादयन् तञ्चाभिनन्द्य, तदधिगतविद्यायाः स्वरूपमवजिगमिषुरुपकोसलं सास्मितमपृच्छत्— "किं नु सोम्य, किल तेऽवोचन्"—ते खलु करुणापरवशा अग्नयः कियदवसानं विद्यायाः प्रावोचन् इति। (क्रमशः)

---

## श्रीदामबन्धलीलाप्रकरणे यत्किञ्चित्

[ निबन्धकः—श्रीगोविन्दविजय गोस्वामी वि-ए ]

तं मत्वात्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम्।
गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा॥
तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः।
द्व्यङ्गुलोनमभूत्तेन सन्दधेऽन्यच्च गोपिका॥
यदासीत्तदपि न्यूनं तेनान्यदपि सन्दधे।
तदपि द्व्यङ्गुलं न्यूनं यद्द यदादत्त बन्धनम्॥
एवं स्वगेहदामानि यशोदा सन्दधत्यपि।
गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताभवत्॥
स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः।
दृष्ट्वा परिश्रमं कृष्णः कृपयासीत् स्वबन्धने॥
एवं सन्दर्शिता ह्यङ्ग हरिणा भक्तवश्यता।
स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे॥

नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया ।
प्रसादं लेभिरे गोपी यत्तत् प्राप विमुक्तिदात् ॥
नायं सुखापो भगवान् देहिनां गोपिकासुतः ।
ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह ॥

निद्रोत्थितस्यार्भकस्य मातृदर्शनादेव स्तन्यकामता, विलम्बासहिष्णुत्वम्, अतृप्तौ क्रोधः, क्रोधेनाधरदंशनं, दधिमन्त्रकभङ्गः हैयङ्गवीनचौर्य्यं शिचिस्थितस्य मर्केभ्यो दानं, ततस्ततो विशङ्कातो निलीयावस्थानं, हितैषिण्या मातुर्दुर्व्विनीतस्यापचयपरस्यातिचपलस्य विवेकहीनस्य स्वसुतस्य शिक्षार्थम् अवश्यदण्ड्यत्वमननादात्तयष्ट्याः शनैस्तत्पश्चादागमनं तां दृष्ट्वा सत्वरं भीतवत् पलायनपरस्य तयाऽनुधाव्य परामर्षः, भीतिं विज्ञाय वत्सलत्वाद् यष्टित्यागः, चापलं स्मृत्वा कृतागसो दुर्व्वृत्तस्य स्वार्भकस्य वानरप्रियस्य गभीरवनप्रदेशेषु पलायनमाशङ्क्य च तद्वीर्य्यकोविदाया मातुस्तद्बन्धनेच्छा, ततो गोपिकया दाम्नोलूखले प्राकृतवदात्मजस्य बन्ध इति बन्धनान्त-सपरिकर-लीला-समाप्तिं वर्णयित्वा तद्दामबध्यमानस्येत्यादिभिः 'सेश्वरं वशे' इत्यन्तैः श्रीशुकदेवेन, "एवं वदन्ति राजर्षे" इत्यादिप्रकरणवत्, परमतस्यान्तर्विरोधं व्यञ्जयित्वाऽऽक्षेपार्थमुपन्यासः कृतः । तद्यथा, कृष्णः कृपयासीत् स्वबन्धन इति परसिद्धान्तः किं सत्यो भवति, न हि न हि, यतः स्वार्भकस्येति स्वमातुरिति च कृष्णस्यार्भकहृदि गोपिकायाः स्वमातृत्वनिश्चयस्य प्रकृतत्वाद् विघाताशक्यत्वात् तस्यां तस्य कृपा वक्तुमनुचितेत्यभिप्रायः । 'एवं सन्दर्शिताह्यङ्ग हरिणा भक्तवश्यते'ति भक्तवश्यतामात्रं प्रकरणस्य तात्पर्य्यं किमिति श्रीशुकप्रश्नेन, कृष्णेन स्वमातुर्भक्तत्वं न मन्यते, इति द्योत्यते । वस्तुतस्तु 'नायं सुखाप' इत्यादिना गोपिकासुतत्वेनैव तं भजमानानां नान्येषां केषामपि तत्प्राप्तिकथनाद् गोपिकायाः स्वयं तादृशत्वेनैव तद्भजनासम्भवात् तदीयेशित्वज्ञैः परैस्तस्या गोपिकात्वमात्रमननाद् भक्तत्वमात्रनिश्चयस्योपहासास्पदत्वं सिद्धान्तितम् । किञ्च, 'यस्येदं सेश्वरं

वशे' तस्य श्रीकृष्णस्य विरिञ्चिभवश्र्यादिषु प्रसाद एव उचितः, गोपी तु यत् तदिति प्रसादशब्देन वक्तुमयोग्यं लब्धात्यन्तप्रसादैरप्यलभ्यं कमपि भाव-विशेषं लेभ इति तु श्रीशुकसिद्धान्तेन बन्धनस्य कृपाजातत्वात् कृपात्ववादः स्पष्टतः खण्डित एव ; वशीभूतेस्यश्वरस्य श्रीकृष्णस्य मातृस्थाने तु पराभव एव प्रकरणतात्पर्य्यम् । "तं मत्वात्मजमि"त्यादिनाऽत्मजत्वमननेनैवार्थात् शुद्धवात्सल्येनैव बबन्ध, प्राकृतं यथेत्यत्र लोकवन्मातृत्वापत्यत्वयोः पूर्णावयवत्वं मन्तव्यम् अत एव बन्धने भक्तपरिश्रम-भगवत्कृपयोरपेक्ष्यत्व-सूचिका दाम्नां द्व्यङ्गुलोनता यद् मन्यते तत् परमतं मन्तव्यम्,प्रागेव बन्धनस्य प्राकृतसादृश्यसमाप्त्योः प्रस्तुत्वात् प्रकरणेऽत्र कृपाप्रसादादिशब्दवाच्य-भावस्यासङ्गतत्वाच्च । यद्वा, कथञ्चित् कौतुकत्वेनैव श्रद्धनीया, तद्यथा व्रजवधूलाल्यस्य श्रीकृष्णस्य बालस्वभावसुलभबन्धनानिच्छातोऽवसरं प्राप्य योगमायानामिनी तत्कर्म्मकारिणी हि तन्मनोऽनुसारिणी तस्य विभुता-शक्तिर्द्व्यङ्गुलोनतां निष्पाद्य क्षणकालमात्रमुचितां सेवां कृत्वा कांश्चिज्जनान् कौतुकविशेषं प्रदर्श्य भयेनैवाचिरेण माता पुत्रालक्षितमेवापससारेति यावत् । माता तु प्रथमडोरिकाद्वयमात्रसम्बन्धेन बालकस्य बद्धगात्रत्वेऽपि उर्व्वरि-तानां दाम्नां द्व्यङ्गुलोनताप्रतीतिरियं भ्रम एवेति विस्मयं प्राप । अतएव कृष्णः कृपयासीत् स्वबन्धने इति स्वमातुः परिश्रमं दृष्ट्वा स्वार्भकस्य कृतागसः कृपापूर्व्वकबन्धनाङ्गीकारवादोऽयुक्त एवेत्यभिप्रेत्य श्रीशुक-देवेन भङ्ग्या जिज्ञासा कृता ।

पूर्व्वाध्याये श्रीपरीक्षितः श्रीयशोदाया मातृत्वघटककारणविषयक-प्रश्नस्योत्तरे श्रीशुकदेवेन कारणाभासरूपं द्रोणधरयोरुपाख्यानमुपन्यस्तम् पश्चात् श्रीयशोदाया मातृत्वस्य ब्रह्मवरघटितत्व-श्रीकृष्णकृपाजनित-त्वादीनां बाधकत्वेनैव तस्यास्तत्वस्य तत् तद् विरोधि-नित्यत्व-स्वाभाविकत्व-निष्कारणत्व-पूर्णावयवत्वादि-धर्म्मान्तराणां स्थापनार्थमेव वात्सल्यविलासहेतुक-तर्ज्जनताडनबन्धनादिवर्णनमयैकदा गृहदासीष्वित्या-द्यध्यायप्रवृत्तिः, अतएवास्मिन् प्रकरणे तत्तत्स्थापननिरसनपूर्व्वका

"नायं सुखाप" इति वाक्यशेषात् श्रीशुकसिद्धान्तो ज्ञेयः। अयं श्रीकृष्णः स्वरूपत एव गोपिकासुतस्तस्मिंस्तत्तया भक्तिमतामेव तत्प्राप्तिस्तल्लीला-तत्वाभिज्ञता रसबोधश्च नान्यथेति यावत्। रसबोधश्च पुरुषार्थ-शिरोमणिः प्रेमैव तस्य हेतुः, व्रजवासिन एव प्रेम्णः परमाश्रयाः, यदानु-गत्येनैवास्मदादीनां तल्लाभस्तेषां नित्यत्वे सिद्ध एव श्रीभागवतसाफल्य-मिति श्रीश्रीदामोदराय नमः।

एवञ्चेत्तत्वं द्रोणधरयोरुपाख्यानप्रसङ्गस्य किं सार्थकत्वम्? सत्यम् तत्रोच्यते, ननु प्रकटलीलायां नन्दयशोदयोरन्तस्तदंशयोर्द्रोणधरयोः प्रवेशनात् तन्नन्दनेऽपि विष्ण्वाद्यंशानां प्रवेश इति बोधनार्थं दाम्ना बद्धोलू-खलस्यापि शनकैर्बाहुभ्यां गच्छतोऽपि सार्व्वज्ञ्य-मोचकत्वादि विष्णुधर्म्म-वर्णनमयाध्यायान्तरप्रवृत्तिः। नारदानुग्रहवशाद् व्रजे वृक्षतां प्रापिताभ्यां यमलार्ज्जुनाभ्यां नारदसंकल्पानुरूपभक्तिदानलीला श्रीगोपालान्तर्भूततदंश-सर्व्वज्ञविष्णुद्वारा साधिता मन्तव्या। श्रीगोपाले दामोदरे तु मधुरनर-लीलावेशमये सार्व्वज्ञ्याद्यैश्वर्य्यस्पर्शीऽशोभनीयः शुद्धरसविघातको न घटते। इति तत्रांशानां प्रवेशोऽप्यप्रसक्तिर्मन्तव्या। इत्यापाततस्तद्-विरोधप्रतीतिजनकवचनवृन्दं क्रमशो विचार्य्य, निजवय-आदिमधुरिम्णः सफलीकुर्व्वतः कलयतो व्रजे विहारं, श्रीगोपालस्य लीलामाधुर्य्यं प्रदर्शयि-ष्यामीति शम्।

# ऐन्द्रजालिकः

( पूर्व्वानुवृत्तः )

## तृतीयः परिच्छेदः

मातुलस्योन्मत्तता

परेद्यवि प्रातर्नवमघटिकायां कुलदा द्रविणं तडिद्वार्त्तावहेन संप्रेष्य पत्रप्रापणाकार्य्यालयात् प्रत्यावृत्तोऽपश्यत्, मातुलः पर्य्यङ्किकायां निषण्णस्तदेकतानमनाः किमपि लिखतीति। समीपमुपसृत्य ददर्श तद्दिवसीयप्रकटनपत्रविरचनायामेव व्यापृतोऽसाविति।

परिसमाप्तायां प्रकटनपत्ररचनायां पत्रं भागिनेयाय समर्प्यावोचद्द रामरतनः, गच्छ मुद्रणालयम्। स्वयमेव तत्रावस्थायाक्षराणि संग्रथय्य सहस्रद्वितयस्य मुद्रापणायादिश। यथा द्विवादनात् पूर्वमेव लभेय तथा विधातव्यम्।

पत्रं वाचयता कुलदाचरणेनोक्तम्, अद्य तावद्दूरदृशानां रूप्यकाणां प्रदानं पूर्वमेव तेभ्यः प्रतिश्रुतं मया। अथ मुद्रणेऽसम्मता भवेयुः?

रामरतनोऽवदद्, ब्रूहि तान् श्वः प्रातस्तेषां सर्वं प्राप्यं निर्यातयिष्यामि, न खलु काकिन्यप्यवशिष्येत।

कुलदा पुनरपि प्रकटनपत्रस्यानुलिपिं प्रति निक्षिप्य नयनयुगलीमवदत्, भवता तावद्द विलिखितं परं परिणामः कीदृशो भविष्यति न खल्ववबोद्धं प्रभवामि। अपि नाम वृथैव बलानं स्यादस्माकम्।

मातुलस्तु क्रोधस्य परां कोटिमधिरूढः प्रोवाच, त्व—त्वं तावत् मुद्राप्यानय। कथं भविष्यति न वा भविष्यति तदानीमेव ज्ञास्यसि। गच्छ, मा विलम्बस्व।

कुलदा सविमर्षवदनः प्रातिष्ठत। तस्य चिन्ताया बीजमेतदेव—

अद्यान्तिमतमायां—सर्वथैवान्तिमतमायां रजन्यां यस्य नूतनेन्द्रजालप्रदर्शनस्य वृत्तान्तः प्रकटनपत्रे समुपवर्णितस्तद्धि न केवलं दर्शकजनानां कुलदाया अपि सर्वथाश्रुतचरमेव। मातुलेनेतः पूर्वमिदमिन्द्रजालं कुत्रापि नोपप्रदर्शितम्, किं बहुना कथाप्रसङ्गेनापि तेन कदाप्येतस्य समुल्लेखो नैव विहितः। अपरेण केनाप्यैन्द्रजालिकेन तत् प्रदर्शयितुं शक्यते इत्यपि कुलदया कदापि न श्रुतम्। सोऽचिन्तयत्, किमिति मातुलेनेदृशं प्रकटनपत्रं प्रकाश्यते। ह्यो हि सर्वरात्रं तेन विनिद्रेणैवावस्थितम्, केवलं शय्यायाम् इतस्ततो विपरिवर्त्तितम्, अन्तरान्तरा चोत्थाय प्रज्वल्य प्रदीपिकां ताम्रकूटधूमो निषेवितः। अपि नाम दुश्चिन्तया तस्य मानसो विकारः समापतितः! कुलदा किमपि नाववोद्धुं प्राभवत्। एवं प्रकटनपत्राणि प्रचार्य्य जनान् एकत्रीकृत्यान्ते चेदतिसन्धीयते तर्हि तस्य फलं किं वोपनमेन्न ज्ञायते। रङ्गपुरस्य छात्रा अतीव दुर्दान्तास्तेऽस्मासु प्रहरेयुरपि।

यथा तथा वा भवतु कुलदाचरणो मातुलस्यादेशपालनाय प्रस्थितः।

मुद्रणालयस्याध्यक्षस्तदापि न समागतः। अक्षरग्रथका विज्ञापनस्यानुलिपिं वाचयित्वा कुलदां परिवृत्य पुनः पुनरपृच्छन्, भद्रमुख, अपि नाम सत्यमेतत्?

कुलदा धीरमुक्तवान्, न खलु सत्यम्, इन्द्रजालमेव।

"भवतु तद् भवतामिन्द्रजालं वा चन्द्रजालं वा—अत्र यद् यद् विलिखितं वर्त्तते, अपि नाम तत् सर्वं प्रत्यक्षीकर्त्तुं प्रभवेम वयम्?

"अवश्यमेव प्रभवेयुर्भवन्तः?"

एवञ्चेत् तर्ह्यवश्यमेवास्मभ्यं विनैव मूल्यं दर्शनपत्रं दातुमर्हसि। वयं त्रयोऽक्षरग्रथकाः, मुद्रणालयरक्षकः, अध्यक्षोऽप्यवश्यं गन्तुमेषिष्यति—एतेषां पञ्चानां कृते दर्शनपत्रं विलिख्य दातुमर्हसि।

तत्तु दीयते, परं प्रकटनपत्रं द्विवादनतः पूर्वमवश्यमपेक्ष्यते।

द्विवादनमिति किमुच्यते, एकवादनतः पूर्वमेव मुद्रितानि प्रकटन-पत्राणि वयं भवतां गृहं नेष्यामः। प्रदर्शनपत्रं तावद्विलिख्यताम्।

प्रकटनपत्रे तावदेवं विलिखितमासीत्—

अन्तिमा रजनी ! अन्तिमा रजनी !!

अद्य सर्वथैवान्तिमा रजनी !!!

विपरीतो व्यापारः ! लोमहर्षणो वृत्तान्तः !

अद्य सर्वेषामेव समक्षम् अध्यापक-
वसुमहोदयो जीवन्तं मानवं भक्षयित्वा
इन्द्रजालविद्याप्रभावेण सर्वेषामेव पुरतः
पुनरपि तं प्रत्युज्जीवयिष्यति इत्यादि।

निर्वर्त्य भोजनादिव्यापारं कुलदा प्रकटनपत्राणि गृहीत्वा शकटेन प्रस्थितः। रामरतनो वादकानवदत्, अद्य यथाशक्ति युष्माभिर्वादित्राणि ताडयितव्यानि। श्वो वयं गमिष्यामः, गमनकाले युष्मभ्यं मनोरमं पारितोषिकं दास्याम इति।

द्विवादनत आरभ्य पञ्चवादनं यावत् नगरं परितः सर्वत्रैव प्रकटन-पत्राणि वितीर्णानि।

तेषां पाठेन समग्रे नगरे कोलाहलेन कृतं पदम्। दिनान्तरेष्वि-वाद्यापि सायं सार्द्धसप्तवादनकाल एव क्रीडाप्रदर्शनस्य प्रारम्भः। परं षड्वादनकाल एव रामरतनो गृहेऽवस्थित एवाज्ञासीन्नगरशालाया प्राङ्गने इतः पूर्व्वमेव जना मिलितुमारब्धा इति। उवाच च भागिनेयम्, ब्रूहि पाचकं शीघ्रमेव सन्नह्यतामिति, यदि किमप्यवशिष्यते तर्हीदानीं तिष्ठतु तत्, प्रत्यावर्त्तनत ऊर्द्ध्वं भविष्यतीति।

क्रीडनकाले प्रदर्शनपत्राणां विक्रयस्य भारोऽस्यैव पाचकस्योपरि विन्यस्तः। हरिदासकुलदाचरणौ द्वारेऽवस्थाय प्रदर्शनपत्राणि दृष्ट्वा दर्शकानां स्थानादिकं निर्दिशतः।

रामरतनो हरिदासमुवाच, अस्माकं फास्टो केलासो ( प्रथमा श्रेणी ) रूप्यकद्वितीयसम्मितान्यासनानि एका पङ्क्तिरेव ननु ?

"अथ किम् ।"

"रूप्यकैकसम्मितसेकण्डक्लास् अपि पङ्क्तित्रितयम् ?"

"अथ किम् ।"

"भवतु । रज्जुमपनीय पङ्क्तिचतुष्टयमेवाद्य फास्टो केलास् विधीयताम् । शेषाणाम् अर्धं सेकेण्डक्लास् ततश्च थार्डक्लास् फोर्थक्लासश्च—तत्र केवलं काष्ठासनानां ( Bench ) द्वित्राः पङ्क्तयो रक्ष्यन्ताम् ।"

कुलदावदत्, तावता आनकचतुष्टयमूल्यप्रदर्शनपत्राणि नितान्तत एव न्यूनीभविष्यन्ति ।

"भवतु नाम । स्थानसम्मितान्येव प्रदर्शनपत्राणि गृहीत्वावतिष्ठस्व । एकस्याः श्रेण्याः पत्रेषु विक्रीतेषु तदूर्द्ध्वश्रेणीपत्राणि विक्रेतव्यानि ।"

सत्वरं कृतसन्नाहः ससम्भारः सभृत्यवर्गश्च रामरतनः प्रस्थितः । नगरशालां सम्प्राप्यापश्यत्, न खलूपलब्धो वृत्तान्तो वितथ इति । अङ्गने बहवो जनाः प्रदर्शनपत्राणां कृते दण्डायमानास्तिष्ठन्ति । पाचको द्वारसन्निधिं गत्वा प्रदर्शनपत्राणि विक्रेतुमुपचक्रमे, कुलदा हरिदासश्च द्वारे समुपविष्टौ । रामरतनो रङ्गोपरि यवनिकाया अन्तराले इन्द्रजालसम्भारान् सज्जीकर्तुमारेभे ।

## चतुर्थः परिच्छेदः

### सनुषा-भोजनम्

सार्द्धसप्तवादनकाले पटीक्षेपत ऊर्ध्वं रामरतनोऽपश्यत्, नगरशाला सर्वथा पूर्णैव—तत्र न स्थानं तिलधारणम्, प्रथमश्रेणीयानि रूप्यद्वितयमूल्यान्यासनानि सर्वाण्येव विक्रीतानि, स्वयं रक्षिवर्गाध्यक्षः सपत्नीकः प्रथमायाः पङ्क्तेर्मध्ये समुपविष्टः । इतरश्रेणीयान्यपि सर्वाण्येवासनानि

पूर्णानि—उभयतश्च कुड्ययोः समीपे बहवो जना दण्डायमाना अतिष्ठन्। रामरतनो रङ्गमञ्चतः पूर्वकायं प्रसार्य्यावनमय्य च रक्षाधिकारिणं तत्सहधर्म्मिणीं सभक्तिभरं प्रणनाम।

क्रीडा प्रारब्धा। प्रथमतस्तावत् क्रीडापत्र- ( Card )-कौतुकम्। रङ्गमञ्चतोऽवतीर्य्य प्राथमिकपङ्क्तेर्दर्शकानां समक्षं तत इतो गत्वा रामरतनः क्रीडापत्रकौतुकं प्रादर्शयत्। तत ऊर्द्ध्वं भौतिकपुष्पपादपनिर्माणम्, दर्शकस्य घटीयन्त्रस्य चूर्णीकरणम्, अन्ततश्च पुनरप्यक्षतस्य तस्य प्रत्यर्पणम्, पट्या अभ्यन्तरेऽङ्गुलीप्रवेशः, कुलदाचरणं सम्मोह्य चक्षुषी च बद्ध्वा तेन दर्शकप्रश्नानां यथायथमुत्तरप्रदानम् इत्येवमादीनां प्रात्यहिकीनां क्रीडानां समाप्तौ नववादनकालः संवृत्तः।

अन्ततश्च रामरतनोऽब्रवीत्, भद्रमुखाः, इदानीं तावदभिनवा काचन क्रीडा भवतां पुरतो मया प्रदर्शयिष्यते—सा च जीवतो मनुजस्य भक्षणमेव। अयं ह्यतीव विस्मयकरो व्यापारः। औरङ्गजेबसाहस्य साम्राज्ये केनचन माहम्मदीयेन फकिरेण प्रथमं प्रदर्शितमासीत् क्रीडनमिदम्। अत्यद्भुतेयं क्रीडा भारतीयप्रतिभाया एवाक्षयं निदर्शनम्। न खलु विदितेयं प्रतीच्यानामैन्द्रजालिकानाम्, सर्वथा भारतीयैवेयम्। महतायासेन मया गुरोरियं शिक्षिता। भवतां पुरतो नरमेकं क्रमशः सम्पूर्णतया भक्षयिष्यामि ततश्च तमेवाक्षतदेहं भवतां पुरस्तादुपस्थापयिष्यामि। दर्शकेषु यस्तावद् भक्ष्यमाणमात्मानमिच्छेत् सोऽत्र कृपयागच्छतु।

रामरतनः प्रेक्षकाणामुपरि सप्रतीक्षां दृष्टिं संस्थाप्य दण्डायमानस्तस्थौ। सभातो गुञ्जनध्वनिः समुदभूत्। एको निमेषो व्यतीतो निमेषद्वयं व्यतीतं निमेषत्रितयं व्यतीतं परं कोऽप्यात्मानं तेन भक्षयितुं न प्रासरत्।

तदा रामरतनेनोक्तम्, भद्रमुखाः अपि नाम भीता भवन्तः? न भेतव्यम्, न भेतव्यम्। भक्षयित्वाहं पुरुषं पुनरपि प्रत्युज्जीवयिष्यामि।

ततो भवन्तः सर्व एव द्रक्ष्यन्ति तस्य शरीर आघातचिह्नमपि नास्तीति। को वागच्छेत्, आगच्छतु।

रामरतनः पूर्णं निमेषद्वितयं प्रतीक्षाञ्चक्रे। सभाप्रदेशे बहूनां जनानामनुच्चभाषितस्यानुच्चहसितस्य च विरावः श्रुतः, परं कोऽप्यात्मानं तेन खादयितुं लेशतोऽप्याग्रहं न प्रकटितवान्।

अन्ततश्च रामरतनोऽवदत्, अपि नाम विशङ्कन्ति भवन्तः कदाचिदहं नैव प्रभवेयं प्रत्युज्जीवयितुमिति। मा शङ्किध्वं भद्रमुखाः, सर्व्वथा दोषलेशशून्यं नर्मैवैतत्। अहञ्चेद् भक्षयित्वा नालं भवेयं सञ्जीवयितुं तर्हि नरघाती एव स्याम्, नरहत्यापराधेन लिप्येय। स्वयं धर्मावतारो नगररक्षाधिकारी, प्रधानं नगररक्षिणाम्, अत्रत्यानां च प्राड्विवाकानां बहव एव कृपया पदरजःप्रदानेन स्थानमिदं पवित्रीकृतवन्तः इति पश्यामि अहञ्चेज्जनं पुनरपि न प्रत्युज्जीवयितुं प्रभवेयमेते मां निरुध्य निःसंशयं प्राणान् एव दण्डयेयुः। परं तत्तु न घटिष्यते। नास्त्यत्र लेशतोऽपि शङ्का। आगच्छतु क आगच्छेत्।

तृतीयश्रेण्याः कस्मिंश्चित् फलके केचनच्छात्रा समुपविष्टा महान्तं कोलाहलं हासपरिहासादिकं च कुर्वन्त आसन्। ते हि सञ्चाल्य बालकमेकमुत्थापितवन्तः। तस्मिन्नुत्थाय रङ्गमञ्चाभिमुखे गतमात्र एव सर्व्वे प्रेक्षका अनिमेषं तं ददृशुः।

क्रमेण बालोऽसौ रङ्गमञ्चस्य पाददेशमनुप्राप्य स्थितः। रामरतनोऽवदत्, "उपर्यागच्छ वत्स उपर्यागच्छ। मा भैषीः।"

बालकस्य वयस्तावत् पञ्चदशषोडशानि वर्षाणि। रङ्गपुरकारुविद्यालयेऽधीतेऽसौ, साहसीति सतीर्थेषु तस्य प्रसिद्धिरस्ति। तथापि रङ्गभूमिमारोहतस्तस्य पादाववेपेताम्।

रामरतनो बालकं प्रावारोन्मोचनायादिदेश, पूर्व्वकायमनावृतं विधायावतस्थेऽसौ बालः। साध्वसेन दुरदुरायते स्म तस्य हृदयं मुखञ्च म्लानिमापन्नम्।

रामरतनो दर्शकानामुपरि पातयित्वा दृष्टिमवोचत्, पश्यत भद्रमुखाः, बालकमिमं भक्षयामि। ततश्च बालकोपरि विनिवेश्य विलोचन-युगलं बलितग्रीवमवोचत्, हन्त हन्त अतिरमणीयं पीनं शरीरम्! चिराय खलु न भुक्तो मानुषो मया, कोमलं मांसमतीव स्वदिष्यते मे। एवमुक्त्वा जिह्वां प्रसार्य्य स्वोष्ठौ लिहन्नासीत्।

शालायां समवेताः सर्व्वे एव जनाः सर्वथा स्तिमिततामनुप्राप्ताः। सूचीपतनस्यापि शब्दः श्रूयेत। एकदा "अपसरेयम्" इतीच्छा बालकस्य मनसि प्रादुर्भूता, परमपत्रपया नैव प्रबभूव तथाचरितुम्। निमील्य नयनयुगलं कथमपि स्तब्धोऽतिष्ठत्।

सपदि रामरतनो बालकस्य स्कन्धे महता संरम्भेण विहितवान् दंशनम्।

"हा तात! हा मातः! उहुहु!" इत्येवं बालकस्यार्त्तरवेण भग्ना सा गभीरनिस्तब्धता। सामाजिकेषु केचन दण्डायमाना भूत्वा क्रुद्धस्वरेणावदन्, किमिदं भोः! किमिति दष्टवानस्येतम्? इति।

रामरतनोऽब्रवीत्, न चेद्दशेयं कथं नाम भक्षयेयम्? न खल्वेतत्-प्रमाणं नरं गबिति संगिल्य भक्षयितुं शक्यते, क्रमश एव भक्षणीयोऽयं मया। सर्व्वमेव भक्षयेयं भक्षयित्वा चेन्द्रजालप्रभावेण पुनरपि प्रत्युज्जीवयेयम्।

श्रुत्वैवैतद्बालको रङ्गभूमित उत्प्लुत्योद्घाटितद्वारे दण्डायमानं प्रहरिणं दूरे निक्षिप्य सोर्द्ध्वश्वासं पलायितः।

ततश्च शालाभ्यन्तरे महान् कलकलः प्रादुर्भूतः। केचिदुच्चैरवोचन्, किमिदं भोः। अपि नामातिसन्धानमिदम्। इन्द्रजालप्रभावेण भक्षयिष्यसि चेत् किमिति दत्तं दंशनम्? सर्व्वमेव कैतवं ननु।

रामरतनोऽपश्यत्, शालीयाः सर्वे एवातिमात्रमुद्दीपितामर्षाः सञ्जाताः केवलं रक्षाधिकारी युरोपीयस्तदीया पत्नी च मृदु विहसन्तौ स्थितौ।

सोऽवदत्, किमिति भद्रमुख, कुत्र वा मे कैतवम्? प्रकटनपत्रं तावद्

अभविष्यः, तर्हि नगररक्षाविभागे मया त्वं न्ययोजयिष्यः। इदानीं गच्छ गृहान्। श्वः प्रातरेव त्वया रङ्गपुरं परित्यज्य गन्तव्यम्" इति। तस्य पत्नयपि विहसन्त्यासीत्।

रक्षाधिकारिण आदेशात् तत्रत्यं रक्षिद्वितयं रामरतनं स्वस्थानं प्रापयामास।

परेद्यव्युत्तमर्णानामृणं निःशेषं निर्यात्य समवशिष्टमुद्राराशिं वस्त्राञ्चले विनिबध्य रामरतनो रङ्गपुरं पर्य्यत्यजत्। भवनं च सम्प्राप्यापश्यत् भगवतः कारुण्येन कन्याया व्याधिरुपशान्तप्राय एवेति।

---

## कुण्डलीविचारः

१८३०।५।१६।५०।११।१२

अष्टोत्तरी
ब्रु—१४।०।७

| | | |
|---|---|---|
| रा ६ | | श २६ ० |
| ल० | | ० |
| बृ १० शु १० म १२ र १३ | बु १५ | च २१ के १९ ० |

विंशोत्तरी
रवि—५।८।२०

कर्कटलग्ने जाताया बालिकाया लग्नाधिपस्य चन्द्रस्य केतुना सह षष्ठे समवस्थानाच्चतुर्दशे वर्षे, १५।२० वर्षादौ च चन्द्रदशाया अवसानात् पूर्वमुदरामयादिका पीडा भविता, प्रथमतो जातायाः कन्यायाश्च हानिः। प्रथमकन्यायाः पतिस्थानन्तु विशेषतोऽशुभं तस्याश्चाष्टादशवर्षे वैधव्य-

अपि सम्भाव्यते। पूर्वोक्तसन्तानजन्मनः फलेन बाल्य एव सूतिकारोगे-णाक्रान्तिरस्थलरोगेण बाधा वा कल्पनीया। चन्द्रदशावसानकाले मातुः स्वास्थ्यमतीव कष्टकरं स्यात्। चन्द्रदशायाश्चान्तरान्तरा मातुरुदरामयादि-पीडा सूच्यते।

धनस्थाने सुखभाग्याधिपयोर्गुरुशुक्रयोः संयोगात्, सप्तमाधिपस्य च शनैश्चरस्य भाग्यस्थाने गुरुगृहे समवस्थानात् काले इयं पत्युर्धनभाग्य-विवर्धिन्येव स्यात्, अस्याश्च यावज्जीवं पतिकुले प्रतिदिनमेव अन्नदानादि-सत्कार्य्यजातं महोत्सवादयश्च सम्पद्येरन्, पत्युश्च धनमानयोर्विवर्धनं स्यात्। परं प्रोक्तपूर्वस्य गुरोः षष्ठाधिपतित्वात् षष्ठस्थानस्थित-लग्नाधिपं प्रति च पूर्णदृष्टिवशात् श्वश्रूप्रभृतिगुरुजनैः साकं विगतभर्त्तृक-ननान्दृप्रभृतिभिर्वा साकं वैमनस्यात् षोडशसंवत्सरपर्य्यन्तं बालाया अस्य मनःक्लेशो भविता। तत ऊर्द्ध्वम् अशान्तेरस्याः कथञ्चिन्निवृत्तिः स्यात्। गृहव्ययादिकर्त्तृत्वं विंशाद्वर्षात् पूर्वमेव लब्ध्वापि नासौ यथायथं दाक्षिण्येन सर्वांस्तोषयितुं प्रभवेत्।

सुखाधिपस्य शुक्रस्य धनस्थानेऽवस्थित्या धनाधिपस्य च कर्माधिपेन कुजेन साकं विक्रमराशाववस्थानात् षोडशवर्षतः कतिचि-द्वर्षाणि ( मङ्गलदशायां राहोश्च दशांशे ) गृहे कर्त्तृत्वं कीर्त्तिसुखादिकं च भविता। परं यावती सुखवार्त्ता बहिः प्रचारिता भवेत्, मनसि ततो न्यूनमेव सुखं स्यात्, अत्र च गुरुजनानामप्रीतिरेव निदानम्।

भ्रातृस्थाने रविकुजयोरवस्थानाच्छनेश्च पूर्णदृष्ट्या भ्रातृगतं दुःखं विवाहादनन्तरं च भ्रातृश्वशुरदेवरादीनां पुत्रदुहित्रादिगतं दुःखं सूच्यते। तृतीये शनैश्चरसन्दृष्टस्य रवेः पञ्चमदशमाधिपेन कुजेन साकमवस्थानात्, अस्याः सन्तानसंख्या त्रित्वं नातिवर्त्तेत, पुत्राश्चास्या धनिनः प्रभाव-वन्तश्च भवेयुः। पितैव पुत्ररूपेण जन्म परिग्रहीष्यति, परं राहुदशायां पितृसम्पदो हानिः सूच्यते। राहुदशायां पुत्रप्रसवावसरे प्रसवसम्बन्धिन्या

पीडया स्वानिष्टापातसम्भवः। राहुदशा च २३—४१ वर्षव्यापिनी, अतः ३६—४० मध्ये एव सन्तानसम्पर्कतः स्वीया विपत् कल्पनीया। राहुदशायां निर्विघ्नं व्यतीतायां विंशोत्तर्य्यां शुक्रदशायां पुत्रपौत्रदौहित्रादिपरिवृताया अस्याः सुखेनैव संसारयात्रानिर्वाहः। षड्विंशत ऊर्द्धम् अष्टोत्तर्य्यां शुक्रदशायामापतितायां पत्युर्यानवाहनादिसम्पद्विवृद्धिः, कन्याजामातृदौहित्रादितश्च क्रमशः सुखसौभाग्यवृद्धिर्भविष्यति। अष्टोत्तरीमतेन राहुदशावसाने विंशोत्तरीमतेन च राहोः प्रारम्भे पतिगृहे वादमूलतो राजद्वारेऽर्थनाशः, गृहविभागादिश्चाप्रियघटनापरम्परापातः सूच्यते। गृहे अर्थाभावस्य वार्त्ताप्यस्याः कदापि न श्रूयते, यानवाहनादि सर्वदैव तिष्ठेत्, उत्तरकाले वृद्धिमपि गच्छेत्। दीर्घायुर्योगः पुनरस्याः सबाध एव। पुत्राश्चास्या राजकीयकर्माधिकारमधिगमिष्यन्ति, पतिरपि प्रथम एव वयसि कार्य्यक्षेत्रं सम्प्रविश्य समुन्नतिं समवाप्स्यति। बालाया अल्प एव वयसि स्वास्थ्यहानिसम्भावनैव नितरां दुःखकरी। अत्रत्यमपरं सर्वं शुभमेव। प्रथमत एव पुत्रस्य जन्म, पुत्रविषये च चिन्ताकारणं वर्त्तते। मङ्गलदशायामुपर्युपरि पुत्रद्वययोगो वर्त्तते। तृतीयपुत्रविषये दुःखयोगः परिलक्ष्यते। प्रथमत एव चन्द्रदशावसाने कन्याजन्म चेत् तर्हि चतुर्थसन्तानसम्भवसमये दुःखयोगः। राहुदशायां गर्भनिवृत्तिः प्रतीयते।

# इन्द्रायुधम्

[ निबन्धकः—के० ए० रामलिङ्ग शास्त्री ]

इन्द्रायुधस्य सौन्दर्यं कवीन्द्रैरपि दुर्भणम्।
सर्वैः संविदितं त्वेतत्तत्त्वमद्य विमृश्यते ॥ १ ॥

नात्र 'इन्द्रायुध'-पदेन वज्रायुधं परिगृह्यते। किं तर्हि ? इन्द्रस्य धनुः

इन्द्रस्य आयुधम् इन्द्रायुधम् ; शक्रधनुः, ऋजु, रोहितम्, आखण्डल-धनुःखण्डम्, सुर-पति-धनुः, त्रिदश-चापः, अमर-चाप इत्याद्यैः पद-जालैरैन्द्रमिदमायुधं धनूरूपम् अभिलप्यते। तथाहि—'इन्द्रायुधं शक्र-धनुस्तदेव ऋजु रोहितम्' इत्यमरसिंह आह।

'पूर्वजन्म-धनुषा समागतः सोऽतिमात्र-लघुदर्शनोऽभवत्।
केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचाप-लाञ्छितः ॥' ८० ॥
रघु, सर्ग-११ ॥ इत्येकं सूक्तम्।

रत्न-च्छाया-व्यतिकर इव प्रेक्ष्यमेतत् पुरस्ताद्
वल्मीकाग्रात् प्रभवति धनुः-खण्डमाखण्डलस्य।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरित-रुचिना गोपवेषस्य विष्णोः ॥'

'तत्राऽगारं धन-पतिगृहानुत्तरेणाऽस्मदीयं
दूराल्लक्ष्यं त्वदमर-धनुश्चारुणा तोरणेन।
क्षाम-च्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥'

इति च मेघदूते आयोजितसूक्तद्वितयम्। 'इन्द्रायुधद्योतिततोरणाङ्कम्' इति चान्यत्र। अत्राऽयमभिसन्धिः—

यथा किल वाणिज्य-तन्त्रनिष्णातैः सकलैर्वैदेशिकैः स्वोपज्ञस्य यस्य

कस्यापि भैषज्यस्य वा भोज्यस्य वा भूमण्डले निखिलेऽपि प्रचारणार्थं वर्ण-सङ्करकारकैः प्रतिबिम्बोद्ग्राहिणि काकले कमनीये ( Photo-Art Papers ) महता समारोहेण नूत्नमुद्रणरचनाविशेषेण मुद्रापितै-र्विज्ञापन-निबन्धैर्न केवलं भारतवर्षीयाणां, स्वेषां सर्वेषामपि मनांसि सुतरामावर्ज्यन्ते, नन्वेवमेव वैमानिकाग्रगण्येष्वन्यतमो मान्यतमश्च उदन्वदाकाश-मही-महीधर-सञ्चरिष्णुं प्रावृषेण्यं पयोवाहं वाहनवर्यम् अधिरूढ आखण्डलोऽपि—स्व-वाहनालञ्चिकीर्षयेव स्फुरत्प्रभामण्डल-मण्डितम्, नवविधरत्नानां चित्रवर्णमिव प्रेक्षकान्तरङ्गावर्जकं धनुः-प्रकाण्डं कुथेन ऐरावतमिव, अवतंसयति—इति। स्यादेतत्।

'वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य'।

इत्येतत् कुत इति चेदनुयुज्यते,—व्याख्यातॄणामाशयः प्रथमतस्तावदा-लिख्यते—वल्मीकान्तर्वसन्ति खलु वदूर्य-महानीलादिदिव्यमणिवर्यरञ्जित-फणामण्डलजाज्वल्यमानवैद्युतप्रदीपप्रभाभास्वरभवनोदराः काकोदराः। ननु अमीषामेव वतंसमणीनां छविविशेषा नवजीमूततल्लजमण्डलानां मण्डनी-भवन्ति। करतलामलकवद् विशदयतितमां प्रस्तुतं तत्त्वं वराहमिहि-राचार्यविरचिता महायात्रा—

'चापमैन्द्रमनुलोममखण्डं प्रोज्ज्वलं बहलमायतमिष्टम्।'

इति सूक्तेनानेन।

'रत्नच्छाये'ति—पद्ये—'कस्यचिद् राज्ञः प्रस्थानारम्भे कुतश्चित् पुरुषा-दनर्घरत्नाभरणोपहारप्राप्तिसमाधिरनुसन्धेयः। इन्द्रधनुषो दर्शनस्य यात्रायां मङ्गलत्वमुक्तं ग्रन्थान्तरे।

रसायनतन्त्रपारावारपारीणास्तु विचक्षणा अभिप्रयन्ति इत्थम्—नभोविभागे वर्षणायत्तेन तडित्वता तोयदेन सहस्रकिरणे किञ्चिदवच्छेदेन आवृते किञ्चिदवच्छेदेन चानावृते सति, अदसीयाः कियन्तश्चिदंशवः ( Rays ) पयोदान्तःस्थपयःप्रणालिकाद्वारा प्रतिफलन्ति अन्तिकस्थे अम्बरैकदेशे, अथवा उपत्यकायामचलस्य यदा, तदा रत्नच्छायाव्यतिकर

# इन्द्रायुधम्

[ निबन्धकः—के० ए० रामलिङ्ग शास्त्री ]

इन्द्रायुधस्य सौन्दर्यं कवीन्द्रैरपि दुर्भणम्।
सर्वैः संविदितं त्वेतत्तत्वमद्य विमृश्यते ॥ १ ॥

नात्र 'इन्द्रायुध'-पदेन वज्रायुधं परिगृह्यते। किं तर्हि? इन्द्रस्य धनुः।

इन्द्रस्य आयुधम् इन्द्रायुधम्; शक्रधनुः, ऋजु, रोहितम्, आखण्डल-धनुःखण्डम्, सुर-पति-धनुः, त्रिदश-चापः, अमर-चाप इत्याद्यैः पद-जालैरैन्द्रमिदमायुधं धनूरूपम् अभिलप्यते। तथाहि—'इन्द्रायुधं शक्र-धनुस्तदेव ऋजु रोहितम्' इत्यमरसिंह आह।

'पूर्वजन्म-धनुषा समागतः सोऽतिमात्र-लघुदर्शनोऽभवत्।
केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचाप-लाञ्छितः ॥' ८० ॥
रघु, सर्ग-११ ॥ इत्येकं सूक्तम्।

रत्न-च्छाया-व्यतिकर इव प्रेक्ष्यमेतत् पुरस्ताद्
वल्मीकाग्रात् प्रभवति धनुः-खण्डमाखण्डलस्य।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरित-रुचिना गोपवेषस्य विष्णोः ॥'

'तत्राऽगारं धन-पतिगृहानुत्तरेणाऽस्मदीयं
दूराल्लक्ष्यं त्वदमर-धनुश्चारुणा तोरणेन।
क्षाम-च्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥'

इति च मेघदूते आयोजितसूक्तद्वितयम्। 'इन्द्रायुधद्योतिततोरणाङ्कम्' इति चान्यत्र। अत्राऽयमभिसन्धिः—

यथा किल वाणिज्य-तन्त्रनिष्णातैः सकलैर्वैदेशिकैः स्वोपज्ञस्य यस्य

कस्यापि भैषज्यस्य वा भोज्यस्य वा भूमण्डले निखिलेऽपि प्रचारणार्थं वर्ण-सङ्करकारकैः प्रतिबिम्बोद्ग्राहिणि काकले कमनीये ( Photo Art Papers ) महता समारोहेण नूलमुद्रणरचनाविशेषेण मुद्रापितैर्विज्ञापन-निबन्धैर्न केवलं भारतवर्षीयाणां, स्वेषां सर्वेषामपि मनांसि सुतरामावर्ज्यन्ते, नन्वेवमेव वैमानिकाग्रगण्येष्वन्यतमो मान्यतमश्च उदन्वदाकाश-मही-महीधर-सञ्चरिष्णुं प्रावृषेण्यं पयोवाहं वाहनवर्यम् अधिरूढ आखण्डलोऽपि—स्व-वाहनालञ्चिकीर्षयेव स्फुरत्प्रभामण्डल-मण्डितम्, नवविधरत्नानां चित्रवर्णमिव प्रेत्तकान्तरङ्गावर्जकं धनुः-प्रकाण्डं कुथेन ऐरावतमिव, अवतंसयति—इति। स्यादेतत् ।

'वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य' ।

इत्येतत् कुत इति चेदनुयुज्यते,—व्याख्यातॄणामाशयः प्रथमतस्तावदालिख्यते—वल्मीकान्तर्वसन्ति खलु वदूर्य-महानीलादिदिव्यमणिवर्यरञ्जित-फणामण्डलजाज्वल्यमानवैद्युतप्रदीपप्रभाभास्वरभवनोद्राः काकोद्राः। ननु अमीषामेव वतंसमणीनां छविविशेषा नवजीमूततल्लजमण्डलानां मण्डनीभवन्ति। करतलामलकवद् विशदयतितमां प्रस्तुतं तत्त्वं वराहमिहिराचार्यविरचिता महायात्रा—

'चापमैन्द्रमनुलोममखण्डं प्रोज्ज्वलं बहलमायतमिष्टम् ।'

इति सूक्तेनानेन ।

'रत्नच्छाये'ति—पद्ये—'कस्यचिद् राज्ञः प्रस्थानारम्भे कुतश्चित् पुरुषादनर्घरत्नाभरणोपहारप्राप्तिसमाधिरनुसन्धेयः । इन्द्रधनुषो दर्शनस्य यात्रायां मङ्गलत्वमुक्तं ग्रन्थान्तरे ।

रसायनतन्त्रपारावारपारीणास्तु विचक्षणा अभिप्रयन्ति इत्थम्—नभोविभागे वर्षणायत्तेन तडित्वता तोयदेन सहस्रकिरणे किञ्चिदवच्छेदेन आवृते किञ्चिदवच्छेदेन चानावृते सति, अदसीयाः कियन्तश्चिदंशवः ( Rays ) पयोदान्तःस्थपयःप्रणालिकाद्वारा प्रतिफलन्ति अन्तिकस्थे अम्बरैकदेशे, अथवा उपत्यकायामचलस्य यदा, तदा रत्नच्छायाव्यतिकर

इव नानावर्णमनोहरो महेन्द्रचाप-प्रसरः प्रेक्षकाणामक्ष्णोः पुरस्ताद् गोचरीभवति। तदात्वे भासमाना असमाना सुषमा भणितिमनसो-रपि अलक्ष्यानुभावा इति हेतोः सकलकलाकुशलाः सकलभाषाकोविदाश्च स्वीयकाव्यमणिमयमञ्जूषासु निवेशयन्ति सुरपतिचापप्रभावमिति।

'यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे
येनाऽऽद्यः पितृमान् पुमान् वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुख-
प्रेङ्खत्स्यन्दन-केतनाम्बरदशा-सन्दर्शनाद्दर्दशाम् ॥''

इति जनकपुरोधःश्लाघितः संक्रन्दनेन विहितासनसंविभागो मधुमन्मधु-मन्मथसन्निभः अप्रतिरथः पंक्तिरथः।

'परिचयं चललक्ष्यनिपातने
भयरुषोश्च तदिङ्गितबोधनम्।
श्रमजयात् प्रगुणां च करोत्यसौ
तनुमतोऽनुमतः सचिवैर्ययौ ॥ रघु-८म सर्ग ॥

'मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥

इति वर्णितरीत्या बहूपयोगायै मृगयायै अखिलमृगशरण्यमरण्यं प्रस्थितः।

'अथ नभस्य इव त्रिदशायुधम् कनकपिङ्गतडिद्गुण-संयुतम्।'
धनुरधिज्यमनाधिरुपाददे नरवरोरवरोषितकेसरी ॥५४॥ (रघु-६-स०)

भाद्रपदमासः सुन्दरं सुरेन्द्रचापमिव सज्यं धनुः सज्जं चकारेति कविकुलतिलको रघुवंशे वर्णयामास। कविसार्वभौमीये काव्यत्रितये यो यो विषयोऽन्विष्यते सकुतुकं स स विमर्शकमनोरथानुगुणो नूतन-नूतन उन्मिषतीति मोदामहे।

रघुवंशे चतुर्थसर्गे—

'पुरुहूतध्वजस्येव तस्योन्नयनपंक्तयः ।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥'

इत्यस्य सूक्तस्य व्याख्यानावसरे मल्लिनाथमखीन्द्रः इत्थम्—पुरुहूतध्वज इन्द्रध्वजः ; स किल वृष्ट्यर्थं पूज्यते इति। उक्तं भविष्योत्तरे—

'एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर ।
पर्जन्यः काम-वर्षी स्यात् तस्य राज्ये न संशयः ॥'
'चतुरस्रं ध्वजाकारं (?) राज-द्वारे प्रतिष्ठितम् ।
आहुः शक्रध्वजं नाम पौरलोकसुखावहम्' ॥

कोऽयम् इन्द्रध्वजो नाम ? यस्य देवस्य यो यो वाहनभावापन्नः, स स एव ध्वजोऽस्ति विनिवेश्यते स्यन्दन-तोरणाद्यूर्ध्वभागे निजचिह्नतयेति सर्वविदित एवायं संप्रदायः । महेन्द्रस्य वाहनं च वारिवाह एव 'तुराषाड् मेघ-वाहनः' इति अमरसिंहोक्तेः ।

शिवक्षेत्रे शिवा-क्षेत्रे वा, विष्णुक्षेत्रे विरिञ्चिक्षेत्रे वा आगम-शास्त्रानुसारेण ध्वजस्तम्भः कोऽप्युन्नतः प्रतिष्ठापितः सन्दृश्यते महोत्सव-समये, देवताचिह्नध्वजपटोच्छ्रयणार्थम् ऋषभ-सिंह-गरुड-हंसमयो यथा, तथा मघवतः पत्रं पयोदश्च राजद्वारे चतुरस्रध्वजाकारेण रञ्जित उद्धव-लक्षणतयोच्छ्रीयते ; अत इन्द्रध्वजलक्षणनिरूपणार्थं प्रवृत्ते भविष्योत्तरपुराणीयपद्ये—

"चतुरस्रं '**घनाकारं**' राजद्वारे प्रतिष्ठितम् ।
आहुः शक्रध्वजं नाम पौरलोकसुखावहम् ॥

इति पाठः स्याद्वेति सम्भावयामः। यथा तथा वा भवतु, अधुना इन्द्रोत्सवः सर्वत्र भारतवर्षेऽनुष्ठीयमानतया न सन्दृश्यते—

'वार्षिकं सञ्जहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
परार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥
'पर्यायोद्यम-विभ्रमौ ॥ '(इति पाठान्तरम् )

दुदोह गां स यज्ञाय सस्याय मघवा दिवम्।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्॥

कल्पेऽस्मिन् साकल्येन कलधौतमिव इन्द्रनीलरत्नमिव तामरसमिव च चकासत् स्फुरत्प्रभामण्डलमध्यवर्ति व्योमचरं चराचराह्लादकं च सञ्जीवनं च संवननं च नवीनं किमपि वाङ्मनसागोचरवर्त्तुलाकारं रामणीयकाधिष्ठानं सुरपतिधनुश्चारु अक्ष्णोः पुरत आविरासीद् असीममहिमहिमकरकरस्रोत इव आप्यायकम्; विस्मयोत्फुल्ललोचनः प्रतिमुहुरहं वियदाभोगप्रसारितापाङ्गोऽन्तरङ्गस्यामृतपारणामिव अन्वभूवम्; आंग्लकविपुङ्गवाः किल विशेषत एतदिन्द्रधनुः स्वीयप्रबन्धेषु उपश्लोकयन्ति च प्रेरयन्ति च प्रेक्षकाग्रगण्यान् असकृददसीयसुषमावर्जितान्तःकरणा 'नश्वरमिदं चराचरमिन्द्रधनुरिव' इति च ईरयन्तीति संश्रृणुमहे। बहोः समयात् प्रभृति एतदधिकृत्य प्रबन्धरचने मानसं कुतुकायते स्माऽस्मदीयम्; अधुना यत्किमपि प्रियपाठकेभ्य उपहरणीयमिति मनीषया आखण्डलधनुःखण्डस्य अखण्डेन सुषमातिशयेन परवशीकृतचेता अहमस्मिन् कृत्ये प्रावर्तिषि। 'भिन्नरुचिर्लोक' इति नीत्या यस्य यस्य वाचकस्य यादृशं हृदयं, तत्तदनुसारेणैकेन लेखकेन अभीष्टपरिपूरणमशक्यम्, अतः सारवद्वा न वा मदीयं प्रबन्धनिर्माणम्, नैव जाने पार्वतीजाने! परमकृपया अनुगृह्णन्तु प्रियपाठककण्ठीरवा इति सदा सम्प्रार्थये इति शम्॥

---

# कालसिद्धान्तदर्शिनी

[ निबन्धकः—श्रीहाराणचन्द्र शास्त्री ]

( पूर्व्वतोऽनुवृत्ता )

कालादीनां ग्राहकः साक्षी किंस्वरूप इति विचारणायां परमेश्वरलक्ष्मीसर्वजीवानां स्वरूपभूतः तत्त्वभूतज्ञानेन्द्रियकर्म्मेन्द्रियसमष्टिरूप इति निर्णयः। तथाहि,—माध्वमते ज्ञानेन्द्रियकर्म्मेन्द्रियभेदेन द्विविधानीन्द्रियाणि ; तानि पुनर्द्विधा भिद्यन्ते,—तत्त्वभूतानि तत्त्वभिन्नानि चेति। सर्वाणि पुनरिन्द्रियाणि नित्यानि अनित्यानि च। तत्र तत्त्वभिन्नानि यानीन्द्रियाणि नित्यानि, तान्येव परमेश्वरलक्ष्मीसर्वजीवानां स्वरूपभूतानि साक्षिपदवाच्यानि। साक्ष्यनङ्गीकारे ग्राहकप्रमाणाभावेन कालाकाशादीनां सिद्धिरेव न स्यात्।

अत्रोक्ताः सर्वे विषयाः पदार्थसंग्रहे माध्वसिद्धान्तसारे च निरूपिताः।

चार्वाकाः खलु प्रत्यक्षातिरिक्तं प्रमाणं नाङ्गीकुर्वन्ति। अत एवाकाशस्याप्रत्यक्षतया सत्तानभ्युपगमेन चत्वार्य्येव भूतानीति वर्णयन्ति—

'अथ चत्वारि भूतानि भूमिवार्य्यनिलानलाः।'

[ सर्वदर्शनसंग्रह—लोकायतदर्शने ]

लोकायतमतम् ] [ भास्करोदया—मङ्गलवादे ]

तन्मते "इदानीं घटः" इत्यादिप्रत्यक्षबलेनैव कालसत्ता व्यवस्थापनीया, कालानङ्गीकारे "इदानीं घटः" इत्यादिव्यवहाराणां निरालम्बनतया विलोपप्रसङ्गात्। स च कालः किंस्वरूप इति जिज्ञासायामेतन्मते तत्तद्वस्तूनामवस्थाविशेषः प्रत्यक्षसिद्धः काल इत्यङ्गीक्रियताम्। न चैतन्मतेऽतिरिक्तः कालपदार्थोऽभ्युपगन्तुं शक्यः, तुल्ययुक्त्याऽऽकाशस्याप्यतिरिक्तस्य सिद्धिप्रसङ्गात्।

कालविषये लोकायतसिद्धान्तः क्वचिदपि स्पष्टतया व्युत्पादितोऽद्यावधि नास्मद्दृष्टिगोचरतां गत इति नैतद्विषयेऽस्माभिर्विशेष उपपादयितुं शक्यते।

बौद्धमतानुयायिनश्चतुर्द्धा भिद्यन्ते—सौत्रान्तिका वैभाषिका योगाचारा माध्यमिकाश्चेति।

बौद्धमतम् ]

सौत्रान्तिकास्तावत्सन्ति बाह्यार्थास्ते च न प्रत्यक्षगोचराः किन्तु विज्ञानवैचित्र्येणानुमीयन्ते—इति मन्यन्ते।

वैभाषिकास्तु बाह्यपदार्थसत्वमभ्युपगत्यापि सर्वेषामनुमानगम्यत्वं न सहन्ते किन्तु यथाप्रमाणं केचन परमाण्वादयोऽनुमेया अपरे घटादयश्च प्रत्यक्षविषया इति वर्णयन्ति (१)।

"सौत्रान्तिकवैभाषिकयोः परोक्षापरोक्षत्वाभ्यां बाह्यार्थवैलक्षण्ये सत्यपि बाह्यार्थाभ्युपगन्तृत्वेन" (२) तुल्यत्वं विद्यते।

सौत्रान्तिका वैभाषिकाश्चोभयेऽपि पुञ्जवादिनः। "परमाणव एव द्व्यणुकादिभूतभौतिकपर्य्यन्तं बाह्यसमुदायरूपेण संहन्यन्ते नावयविनमारभन्ते।" (३) "यथा तार्किकमते परमाण्वादिभिर्द्व्यणुकादिक्रमेण कार्य्यमारभ्यते, नैवं बौद्धमते, अपितु, परमाणुसमुदाय एव गिरिनद्यादिकं सर्वम्।" (४) ननु घटादीनां परमाणुसमुदायरूपत्वे प्रत्येकं परमाणुषु महत्त्वाभावेन तत्र स्थौल्यापरपर्य्यायं महत्त्वं कथं प्रतीयत इति नाशङ्कनीयं, यत्र "प्रतिभासदशापन्नानां तेषां भविष्यति बहुत्वादिवत् सांवृतं स्थौल्यम्।" (५)

"नचादृश्यसमुदायस्यादृश्यत्वनियमः अप्रयोजकत्वात्। एकैकस्य तन्तोः स्पन्दनाकर्षणशक्त्यभावेऽपि तत्समुदायस्य तदाकर्षणशक्तिवदेकैकस्य परमाणोरदृश्यत्वेऽपि तत्समुदायस्य दृश्यत्वोपपत्तेः। यदाहुः—

(१) सर्वदर्शनसंग्रहे ( श्रीवाणीविलासयन्त्रालयमुद्रिते ) २ पृष्ठे।

(२) ब्रह्मविद्याभरणे ( Advaitamaryary Series ) २।२।१८।

(३) शिवार्कमणिदीपिका २।२।१७।

(४) ब्रह्मविद्याभरणम् २।२।१८।

(५) भामती २।२।२८।

( सम्यक् संहतया बुद्ध्या कृतं सांवृतम्। "विशकलितपरमाणुतत्त्वाच्छादकत्वात् संवृतिर्बुद्धिः।"—वेदान्तकल्पतरुः २।२।२८)

प्रत्येकं दृष्ट्ययोग्यत्वेऽप्यणूनां दृश्यता भवेत् ।
सामग्र्ये सति तन्तूनां नौकाद्याकर्षशक्तिवत् ॥' इति" (१)

योगाचारास्तु बाह्यार्थसद्भावेऽस्वारस्यं मन्यमाना विज्ञानमात्रमेव विश्वं न ततोऽन्यदस्तीति प्रतिपन्नाः (२) । अत एव विज्ञानवादिन इत्युच्यन्ते । एतेषां मते घटादयः सर्वे बुद्धेरेवाकारविशेषाः । तदुक्तम्—

"सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदस्तु भ्रान्तिविज्ञाने दृश्येतेन्दाविवाद्वये ॥" (३)

"अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥" इति (४)

विज्ञानाकाराणामेव घटपटादीनां दोषवशेन बाह्यत्वेनाध्यवसानम्—

"यदन्तर्ज्ञेयरूपं तद् बहिर्वदवभासते ।" (५)

माध्यमिकाः खलु विज्ञानवादेऽप्यस्वारस्यं मन्यमानाः शून्यमेव तत्त्वमिति सिद्धान्तमातिष्ठन्ते । अत एव ते शून्यवादिन इति व्यपदेशं भजन्ते । तेषां सिद्धान्ते घटादयो विज्ञानान्ताः सर्वे पदार्थाः कल्पितास्तेषां सांव्यवहारिकं सत्त्वमाश्रित्य सर्वे व्यवहारा निर्वहन्ति (६) । संगृहीतं चैतदीयं मतं कारिकाभ्याम्—

"नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम् ।
एकानेकस्वभावेन विरोधाद्वियदब्जवत् ॥
न सन्नासन्न सदसन्न वाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥" इति (७)

---

(१) शिवार्कमणिदीपिका २।२।१८।

(२) अवैदिकदर्शनसंग्रहे ११ पृष्ठे ।

(३) शिवार्कमणिदीपिका २।२।२७ । उत्तरार्द्धे "भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति पाठान्तरं भामतीसर्वदर्शनसंग्रहयोः ।

(४) शिवार्कमणिदीपिका २।२।२७ ; द्वितीयपादे "विपर्य्यासनिदर्शनैः" इति पाठान्तरं सांख्यप्रवचनभाष्ये १।२० । (५) शाङ्करभाष्यम् २।२।२८ । (६) अवैदिकदर्शनसंग्रहे १५ । (७) अवैदिकदर्शनसंग्रहे १८ ।

निरंशैकस्वभावत्वात् पौर्वापर्य्याद्यसंभवः ।
तयोः संबन्धिभेदाच्चेदेवं तौ निष्फलौ ननु ॥"

( तत्त्वसंग्रहः ६२९—६३० )

अत्र कमलशीलकृतायां पञ्जिकायामभिहितम्—

"विशिष्टसमयः =पौर्वापर्य्यादिनोत्पन्नेष्वेवार्थेषु पूर्वापरादिसंकेतः, तदुद्भतो मनस्कारः= आभोगः स निबन्धनमस्येति तथोक्तम् ।" इति

एवं चानयोः कारिकयोरयमर्थः पर्य्यवसितः —

क्रमेणोत्पन्नेषु स्थितेषु वा वस्तुषु लोकाना'मयं पूर्वो''ऽयं परः' इति यः सङ्केतस्तेन बोद्धृणां मनसस्तदेकप्रवणता भवति। सैवाभोगशब्देन व्यवह्रियते। तयाऽऽभोगसंज्ञया 'अयं पूर्व्वः' 'अयं परः' इत्यादिसङ्केतज्ञानजनितसंस्कारविशेषरूपया जनानां वस्तुषु "अयं पूर्वः' 'अयं परः' इत्येवं विज्ञानमुत्पद्यते ; एवं च परापरविज्ञानस्य कालदिग्भ्यां विनैवोपपत्तेः कालो दिक् च नैवाङ्गीक्रियेते। किंच कालदिशोर्निरवयवत्वेन तयोः स्वतः पौर्वापर्य्यं न सम्भवतः। यदि दिक्कालसम्बन्धिनो ये बाह्याध्यात्मिका भावाः प्रदीपशरीरादयो वर्त्तन्ते, तेषां पौर्वापर्यं आदाय कालदिशोः पौर्वापर्य्यं भविष्यत इत्युच्येत तदा तैः प्रदीपशरीरादिभिरेव पौर्वापर्य्यव्यवहारनिर्वाहसम्भवेन तन्निर्वाहाय कालदिशोः कल्पनापार्थिका इति ।

तथाच सौगतसमये कश्चित् कालो नामातिरिक्तः पदार्थो नास्तीति सिद्धम् ।

जैनानां सिद्धान्ते खलु जीवाजीवभेदेन द्रव्यं द्विविधम् (१)। तत्राजीवः "पुद्गल-धर्म्मा-धर्म्मा-काश-काल-भेदेन पञ्चधा" भिद्यते। (२) एतेषु

(१) नेमिचन्द्रमुनिकृते द्रव्यसंग्रहे १ गाथायाम्। उमास्वामिकृते तत्त्वार्थसूत्रे पञ्चमाध्याये १, २, ३, ३९ सूत्रेषु ; (२) द्रव्यसंग्रहे १५ ; द्रव्यसंग्रहवृत्तौ च।

जीवादयः पञ्च "अस्तिकाय"-शब्देन व्यवह्रियन्ते। कालस्यास्तित्वे सत्यपि प्रदेशाभावात् कायत्वाभावेनास्तिकाय"—शब्दव्यवहार्य्यता नास्ति। (१)

कालश्च द्विविधः, व्यवहारकालो निश्चयकालश्चेति। व्यवहारकालश्च "परिणाम-क्रिया-परत्वापरत्वेन लक्ष्यते।" (२) तदुक्तम्—

"व्यावहारिककालस्य परिणामस्तथा क्रिया।
परत्वं चापरत्वं च लिङ्गान्याहुर्महर्षयः॥" इति
( तत्त्वार्थसारे ३।४५ )

"जीवपुद्गलयोः (३) परिवर्त्तो नवजीर्णपर्य्यायस्तस्य या समय-घटिकादिरूपा स्थितिः स्वरूपं यस्य, स भवति द्रव्यपर्य्यायरूपो व्यवहार-कालः।"

"स्वकीयोपादानरूपेण स्वयमेव परिणममानानां पदार्थानां कुम्भकार-चक्रस्याधस्तनशिलावत्, शीतकालेऽध्ययनेऽग्निवत्, पदार्थपरिणतेर्यत् सह-कारित्वं सा वर्तना भण्यते ; सैव लक्षणं यस्य स वर्त्तनालक्षणः कालाणु-द्रव्यरूपो निश्चयकालः।" "योऽसावनाद्यनिधनस्तथैवामूर्त्तो नित्यः समयाद्युपादानकारणभूतोऽपि समयादिविकल्परहितः कालाणुद्रव्यरूपः स निश्चयकालः। यस्तु सादिसान्तसमयघटिकाप्रहरादिविवक्षितव्यवहार-विकल्परूपस्तस्यैव द्रव्यकालस्य पर्य्यायभूतः स व्यवहारकालः।" "यथाऽऽकाशद्रव्यमशेषाणां द्रव्याणामाधारः स्वस्यापि, तथा कालद्रव्य-मपि परेषां परिणतिसहकारिकारणं, स्वस्यापि।" "कालस्य घटिका-दिवसादिकार्य्यं प्रत्यक्षेण दृश्यते।" ( द्रव्यसंग्रहवृत्तौ—२१-२२ )

अत्रेदं तत्त्वम्, निश्चयकालोऽणुद्रव्यरूपो नित्योऽमूर्त्तः ; स च पदार्थ-परिणतौ सहकारिभूतोऽमूर्त्तत्वादेव निष्क्रियः घटिकादिवसादिरूपस्य

---

(१) द्रव्यसंग्रहे २३।२४ ; (२) द्रव्यसंग्रहे २१, द्रव्यसंग्रहवृत्तौ च।

(३) पूर्य्यन्ते गलन्तीति पुद्गलाः परमाणुसंघाः कायाः ( रत्नप्रभा २।२।३३ )।

स्थूलकालस्योपादानकारणरूपः ; स च स्वीयेन कार्य्येण व्यावहारिककालेनानुमेयः। व्यावहारिककालस्तु अणुरूपस्य निश्चयकालस्य कार्य्यभूतो घटिकामुहूर्त्तयामाहोरात्रादिरूपः समयशब्दवाच्यः प्रत्यक्षेण गृह्यते।

जैनानां मते लोकाकाशोऽलोकाकाशश्चेति द्विविध आकाशः (१)। धर्म्माधर्म्मौ कालः पुद्गला जीवाश्च लोकाकाशमध्ये वर्त्तन्ते। मोक्षावस्थायां जीवोऽलोकाकाशं प्रविष्टः सततमूर्द्धगामी भवति। कालस्याणवः खलु लोकाकाश (२) एव विद्यन्ते ;—

"एकैकवृत्त्या प्रत्येकमणवस्तस्य ( =कालस्य ) निष्क्रियाः।
लोकाकाशप्रदेशेषु रत्नराशिरिव स्थिताः।

( तत्वार्थसारे ३।४४ )

कालपदार्थश्च सर्वेषां जैनदार्शनिकानां न सम्मत इति प्रतिभाति। तथाहि,—श्रीशङ्करभगवत्पादैर्जैनमतप्रदर्शनाय "एकस्मिन्नसंभवादि"ति ( २।२।३३ ) सूत्रे प्रत्यपादि—

"संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवाख्यौ। यथायोगं तयोरेवेतरान्तर्भावादिति मन्यन्ते। तयोरिममपरं प्रपञ्चमाचक्षते पञ्चास्तिकाया नाम, जीवास्तिकायः पुद्गलास्तिकायो धर्म्मास्तिकायोऽधर्म्मास्तिकाय आकाशास्तिकायश्चेति।"

अत्र जीवाजीवौ द्वौ पदार्थौ प्रदर्श्य तेषामेव प्रकारान्तरेण पञ्चास्तिकायरूपेण प्रतिपादनं कृतम्। कालश्च पञ्चास्तिकायेभ्यो भिन्नः पृथक् प्रतिपादनार्होऽपि न प्रतिपादितः। "यथायोगं तयोरेवेतरान्तर्भवादि"त्युक्त्यैतेभ्योऽन्ये पदार्था न सन्तीति सूचितम्।

कुण्डकुण्डाचार्य्यप्रणीते "पञ्चास्तिकायसमयसारे" २४ गाथायां

---

(१) "आकाशास्तिकायो द्विविधः,—लोकाकाशः सांसारिकः, अलोकाकाशो मुक्ताश्रयः।—रत्नप्रभा—२।२।३३

(२) द्रव्यसंग्रहे २२।

निश्चयकालं प्रतिपाद्य २५ गाथायां समयापरपर्य्यायं व्यावहारिककालं च निरूप्य २६ गाथायां कालस्य पुद्गलद्रव्येऽन्तर्भाव उपपादितः —

णत्थि चिरं वा खिप्पं मत्तारहिदं तु सा वि खलु मत्ता ।
पुद्गलदव्वेण विणा तम्हा कालो पडुच्च भवो ॥

अस्याः संस्कृतम् ;—

नास्ति चिरं वा क्षिप्रं मात्रारहितं तु साऽपि खलु मात्रा ।
पुद्गलद्रव्येण विना तस्मात्कालः प्रतीत्यभवः ॥

चिराचिरव्यवहारौ मात्रया=परिणत्या रहितौ न भवतः। सा च परिणतिरूपा मात्रा पुद्गलद्रव्येण रहिता न वर्त्तते, तस्मात् स्वपरिणामं प्रति पुद्गलद्रव्यस्यैकस्यैव कारणत्वसम्भवात्तदतिरिक्तस्य कालस्य प्रतीत्यभावेन नास्ति कालनामा कश्चित् पृथक् पदार्थ इत्यभिप्रायः (१) ।

द्रव्यसंग्रहवृत्तौ गाथाव्याख्यानावसर इममेव पक्षं पूर्वपक्षत्वेनोपन्यस्यानन्तरं तत्खण्डनं कृतम् । तत्रायं पूर्वपक्षः—

"अथ मतम् यथा कालद्रव्यं स्वस्योपादानकारणं परिणतेः सहकारिकारणं च भवति तथा सर्वद्रव्याणि, कालद्रव्येण किं प्रयोजनमिति ।"

द्रव्यसंग्रहे खलु कालपदार्थस्याङ्गीकरणादित उत्तरं द्रव्यसंग्रहवृत्तावस्य खण्डनमेव वृत्तम् । परन्तु केषांचिज्जैनानां मते कालपदार्थो नास्तीत्यनेनापि पूर्वपक्षग्रन्थेन सूच्यत एव ।

(१) न्यायमञ्जर्य्याम् [ १४६ पृष्ठे ] उक्तमेतत् ;

"न तावद् गृह्यते कालः प्रत्यक्षेण घटादिवत् ।
चिरक्षिप्रादिबोधोऽपि कार्य्यमात्रावलम्बनः ॥
न चामुनैव लिङ्गेन कालस्य परिकल्पना ।
प्रतिबन्धो हि दृष्टोऽत्र न धूमज्वलनादिवत् ॥" इति ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| August, 1932. | १८५४ शकीये श्रावणे १५श-वर्षस्य ४र्थ संख्या | Vol. XV. No 4. |

## सुभाषितानि

( भासस्य )

१। कन्यापितुर्हि सततं बहु चिन्तनीयम्।

२। विवाहा नाम बहुशः समीक्ष्य कर्त्तव्या भवन्ति। कुतः

जामातृसम्पत्तिमचिन्तयित्वा
पित्रा तु दत्ता स्वमनोऽभिलाषात्।
कुलद्वयं हन्ति मदेन नारी
कूलद्वयं क्षुब्धजला नदीव ॥१।३॥

३। भोः कष्टममात्यत्वं नाम। कुतः,

प्रसिद्धौ कार्य्याणां प्रवदति जनः पार्थिवबलं
विपत्तौ विस्रष्टं सचिवमतिदोषं जनयति।
अमात्या इत्युक्ताः श्रुतिसुखमुदारं नृपतिभिः
सुसूक्ष्मं दण्ड्यन्ते मतिबलविदग्धाः कुपुरुषाः॥१।५॥

४। अथवा कः शक्तः सूर्य्यं हस्तेनाच्छादयितुम्। इह हि

छन्ना भवन्ति भुवि सत्पुरुषाः कथञ्चित्

स्वैः कारणैर्गुरुजनैश्च नियम्यमानाः।

भूयः परव्यसनमेत्य विमोक्तुकामा

विस्मृत्य पूर्वनियमं विवृता भवन्ति ॥१।६॥

५। स्वामिन्, दूतगतान्यागतान्यागमिष्यन्ति च,

न तत्र कर्त्तव्यमिहास्ति लोके

कन्यापितृत्वं बहुवन्दनीयम्।

सर्वे नरेन्द्रा हि नरेन्द्रकन्यां

मत्ताः पताकामिव तर्कयन्ति ॥१।९॥

६। न भृत्यदूषणीया राजानः। स्वामिनो हि स्वाम्यमात्यानाम्।

७। अहो कार्य्यमेवापेक्षते बुद्धिरमात्यानां न स्नेहम्।

८। अहो महान् भारो राज्यं नाम। कुतः

धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुद्ध्या

प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्य्यौ।

ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं

रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः॥१।१२

९। सच्चो हि लोअप्पवादो सञ्चारिणो अणत्थत्ति। (सत्यो हि लोकप्रवादः सञ्चारिणोऽनर्था इति)।

१०। अयुक्तमधृतित्वं पुरुषाणाम्। सङ्कल्प्यमानो हि विजृम्भते मदनः।

११। कस्तावदौषधमुपलभ्य मन्दीभवत्यातुरः।

१२। हत्थिहत्थचञ्चलाणि पुरुसभग्गाणि होन्ति। (हस्तिहस्तचञ्चलानि पुरुषभाग्यानि भवन्ति)।

१३। अरे सव्वं अलङ्कारो होदि सुरूवाणं। (सर्वमलङ्कारो भवति सुरूपाणाम्)।

१४। एकः परगृहं गच्छेद् द्वितीयेन तु मन्त्रयेत्।
बहुभिः समं कुर्य्यादित्ययं शास्त्रनिर्णयः ॥ २।१०॥

१५। भोः कष्टं तारुण्यं नाम। कुतः,
रागं विजृम्भयति संश्रयते प्रमादं
दोषान्न चिन्तयति साहसमभ्युपैति।
स्वच्छन्दतो व्रजति नेच्छति नीतिमार्गं
बुद्धिं शुभां सुविदुषामवशीकरोति ॥ २। ॥

१६। अहो बलवान् हि भगवान् प्रजापतिः। कुतः,
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः।
का वा न सिध्यति ममेति करोति कार्य्यं।
यत्नैः शुभैः पुरुषता भवतीह नृणां
दैवं विधानमनुगच्छति कार्य्यसिद्धिः ॥२।१२॥

१७। * संसक्तनालगतकण्टकभीतचेता—
स्तृष्णार्दितः क इह पुष्करिणीं जहाति ॥२।१५॥

१८। विलासिनी—आइदो एव्व भट्टिदारिआए अलङ्कारोत्ति भणामि। (आकृतिरेव भर्त्तृदारिकाया अलङ्कार इति भणामि।)

मागधिका—णणु पुप्फं पि वासीअदि। (ननु पुष्पमपि वास्यते।)

विलासिनी—सदिसं एदं। सभावरमणीयाणि मण्डिदाणि अदिरमणीयाणि होन्ति। (सदृशमेतत्। स्वभावरमणीयानि मण्डितान्यतिरमणीयानि भवन्ति)।

१९। सच्चो खु लोअप्पवादो—बहुविग्घाणि सुहाणित्ति। (सत्यः खलु लोकप्रवादः बहुविघ्नानि शुभानीति।)

---

* अरे अयं कन्याप्रासादः। एष तु काष्ठकर्मबहुलतया समासन्नजालत्वाच्च सुखमारोढुम्, अथवा दुरारोहत्वेऽपि, कान्तसमीपमुपगम्य मनोऽभिलाषाद्धर्म्याधिरोहणमते मम का विशङ्का इति शेषः।

२०। विद्याधरः—पुष्पितानां नगानां षड्भागग्रहणमस्माकं धर्मः।

२१। अच्छलं मित्रत्वं नाम।

२२। एते खलु लोके सुखिनो भवन्ति—

सम्यक् चरन्ति गगने वनितासहायाः
क्रीडन्ति पर्व्वततटेषु कृतोपदेशाः।
सर्वं विदन्त्यपि च मन्त्रकृतैः प्रभावै-
रन्तर्हिताश्च विवृताश्च सुखं भ्रमन्ति॥४।१३॥

२३। न तथा रत्नमासाद्य सुजनः परितुष्यति।
यथा तत् तद्गताकाङ्क्षे पात्रे दत्त्वा प्रहृष्यति॥४।१४॥

२४। को शक्कदि उच्छिट्ठं ण करन्तो भुञ्जिदुं (कः शक्नोत्युच्छिष्टमकुर्वन् भोक्तुम्)।

२५। अलमुत्प्रहसितेन; अच्छलो हि स्नेहो नाम।

न तेन बुद्धिर्मम दूषणीया
येन प्रकामं भवितास्मि हास्यः।
प्राज्ञस्य मूर्खस्य च कार्ययोगे
समत्वमभ्येति तनुर्न बुद्धिः॥५।५॥

२६। इट्ठमाअन्तुअस्स भोअणदाणं (इष्टमागन्तुकस्य भोजनदानम्)।

२७। ण हि घिदवअणेण पित्तं णस्सदि। (न हि घृतवचनेन पित्तं नश्यति)।

२८। अहो विसमसीला संवच्छरिआ णाम, अत्तणो णक्खत्तविसेसं एव्व चिन्तअन्ति कम्मगोरवं न जाणन्ति। (अहो विषमशीला सांवत्सरिका नाम, आत्मनो नक्षत्रविशेषमेव चिन्तयन्ति, कर्मगौरवं न जानन्ति)।

२९। अहो अल्पमूल्यत्वं महतां चानर्थस्य।

---

# विद्याप्रस्थानम्

( पूर्व्वतोऽनुवृत्तम् )

*[ निबन्धक :—कालीघट्टवास्तव्यः श्रीगुरुपदशर्म्मा हालदारः । ]

कर्म्मब्रह्मविषयभेदेन मीमांसाऽपि द्विविधा—कर्म्मणामपूर्व्वादिनिरूपिका या पूर्व्वमीमांसात्वेन प्रसिद्धा, भगवतः स्वरूपादिनिरूपिका योत्तरमीमांसात्वेन प्रसिद्धा चेति। तदेदं सुविदितमस्ति षड्दर्शनीमरण्यानीमवगाहमानानां कोविदपञ्चाननानां यच्चार्वाकादिवेदबाह्यमतप्रभावेण नास्तिक्यस्रोतसि जनानां प्लवमानत्वात् त्रिविधदुःखोत्थितधूमेनाधिकृते वैहायसस्थाने, विरलतामुपगतायाञ्च च धर्म्मचर्य्यायां धर्म्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनमिति विचिन्त्य धर्म्मादिप्रतिपादनपरा द्वादशलक्षणी पूर्व्वमीमांसा नाम सूत्रात्मकं शास्त्रं जैमिनिमुनिपादैः कर्म्मणो गहनां गतिं निखिलश्रुतितात्पर्य्यञ्च दिव्येन चक्षुषा प्रत्यक्षीकुर्व्वाणैरपूर्व्वस्य फलदातृत्वं दुष्प्रवेशञ्च वेदार्थञ्च बुभुत्सून् जनाननुग्रहीतुमभ्यधायीति।

अथातिक्रामति दीर्घकाले 'ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयतामि'ति न्यायेन भारतीयानां धर्म्मानुरागादिभिः सह मन्दत्वमुपेयुषि बुद्धिवैभवे, तमःसमुल्लासात् पदार्थप्रतिबिम्बग्रहाक्षमे प्रतिभादर्पणे, बौद्धादिमतप्राबल्येन तिरोभवत्यदृष्टवादे च परमकारुणिकैः शबरतौतातिकुमारिलप्रभाकरपादादिभिर्मीमांसकैः सूत्राणां भाष्यवार्त्तिकादिरूपेण भूयांसो ग्रन्थाः कालोपयोगिनः कृताः।

ततश्च कालान्तरे दुर्दैवतो नवागतानां वैदेशिकानां देशिकवत् प्रभावेण सर्वतो रूपान्तरं प्रतिपन्नायां कर्म्मभूमौ भारतभुवि, विलुप्तप्रायायाञ्च यागादिश्रौतक्रियायां भाष्यवार्त्तिकादिभ्योऽपि दुर्बोधतया

पराङ्मुखान् मन्दधिषणान् जनानवलोक्य सुविचक्षणैरर्वाचीनैः पार्थसारथिशालिकनाथमाधवाचार्य्यप्रमुखैरपरे बहवो निबन्धग्रन्थाः प्रणीताः। तत्र बुक्कराज्यसमयवर्तिना विद्यारण्यविरुदवता बृहस्पतिकल्पेन माधवाचार्य्येण संग्रथितो न्यायमालाविस्तरः सरलसरण्या निखिलमीमांसारहस्यनिरूपणपरतया सर्वानपि कालोपयोगिनो मीमांसाग्रन्थानतिशेते। वस्तुतोऽपि नास्ति मीमांसारहस्यं प्रविविक्षूणां जनानामेवंविध उपकारकः कश्चिदन्यो ग्रन्थविशेषः।

ततः प्रभृति प्रसृतायां वेदचर्चायां कृष्णयज्वापदेवलौगाक्षिभास्करादिभिर्मीमांसकाचार्य्यैः केचित् प्रकरणग्रन्थाः कृता यदन्तरेण वेदार्थज्ञानं नाधुना सुशकं भवतीति। ये हि मीमांसाज्ञानशून्या वैदिकम्मन्याः स्वबुद्धिबलेनैव वेदार्थं मीमांसन्ते, ते खलु न केवलं प्रेक्षावतामुपहासास्पदतां भजन्ते, परं तु पातयन्ति स्वात्मानमपि निरयनिमित्ते सङ्कटावटे। तदेव कलौ रजोदूषिततया पदार्थप्रतिबिम्बग्रहाक्षमा वेदार्थमधिजिगांसवो लोकोपहासं निरयपातञ्च परिजिहीर्षया प्रागेव यावदर्थपरिचायकाः सम्प्रतितनाः प्रकरणग्रन्था मीमांसाधिगमस्य जीवातुभूता अध्येतव्या इति न परोक्षमध्येतृवर्गाणामध्यापकानाञ्च।

मीमांसाशास्त्रं द्वादशाध्यायरूपं भवति। तदुक्तम्—मीमांसा द्वादशलक्षणीति। तत्र प्रथमाध्याये विध्यादिरूपं धर्म्मं प्रमाणं निरूपितम्। तत्रापि प्रथमे पादे विधेः प्रामाण्यं विचारितं द्वितीये मन्त्रार्थवादयोस्तृतीये स्मृत्याचारयोश्चतुर्थे उद्भिच्चित्रादिनामधेयानामिति विशेषः। तदुक्तम्—

विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम्।
प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम्॥ इति॥

द्वितीयाध्याये कर्मभेद उक्तः। स च चतुर्विध उत्पाद्यत्वप्राप्यत्वविकार्य्यत्वसंस्कार्य्यत्वभेदात्। तत्र कटं करोतीत्यत्र कट-

स्योत्पाद्यत्वम्। ग्रामं गच्छतीत्यत्र ग्रामस्य गमनेन प्राप्यत्वं न तु जन्यत्वमेव। ओदनं पचतीत्यत्र ओदनस्य विकार्य्यत्वं न तु तस्य प्राप्यत्वमुत्पाद्यत्वं वा। स्रुचं विमलीकरोतीत्यत्र स्रुचः संस्कार-कर्म्मत्वं न तु पाकेन ओदनस्येव विकार्य्यत्वं न च गमनेन ग्रामस्येव प्राप्यत्वं, नापि कटस्येव करणेन उत्पाद्यत्वमपि।

द्वितीयाध्यायस्य प्रथमे पादे कर्म्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः, द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्म्मभेदविशेषः, तृतीये रथन्तरादीनां कर्म्मभेदप्रामाण्यापवादः चतुर्थे नित्यकाम्ययोः प्रयो-गयोर्भेद इति विशेषः। तदुक्तम्—

उपोद्घातः कर्म्मभेदमानं तस्यापवादगोः।
प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः॥ इति।

तृतीयाध्याये शेषशेषिभावो निरूपितः। तत्रापि प्रथमे पादे शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता, द्वितीये लिङ्गम्, तृतीये वाक्यप्रकरणस्थानसमाख्यारूपं प्रमाणचतुष्टयम्, चतुर्थं श्रुति-स्मृत्यादीनां परस्परविरोधे विध्यर्थवादत्वनिरूपणम्, पञ्चमे प्रतिपत्ति-कर्म्माणि*, षष्ठेऽनारभ्याधीतानि, सप्तमे बहुप्रधानोपकारकप्रयाजादि-कर्म्माणि, शेषतोऽष्टमे यजमानानीति विशेषः। तदुक्तम्—

श्रुतिलिङ्गञ्च वाक्यादिविरोधप्रतिपत्तयः।
अनारभ्योक्तिबह्वर्थस्वाम्यर्था अष्टपादगाः॥ इति।

चतुर्थाध्याये क्रत्वर्थपुरुषार्थत्वभेदेन प्रयुक्तिविशेषः। तत्रापि प्रथमे पादे प्रधानभूतामिक्षा दध्यानयनस्य प्रयाजिकेत्यादिप्रधान-प्रयोक्तृत्वं विचारितम्, द्वितीये त्वप्रधानं वत्सापाकरणशाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम्, तृतीये जुहूपर्णमयीत्वादेरपाप-श्लोकश्रवणादिफलभावचिन्तनम्, चतुर्थे राजसूयगतगाणाङ्गाक्षद्यूतादि चिन्तनमिति विशेषः। तदुक्तम्—

---

* प्रतिपत्तिरुपयुक्तद्रव्यस्य विनियोगः।

प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता ।
फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः ॥ इति ।

पञ्चमाध्याये कस्य कर्म्मणोऽनन्तरं किमित्यादिधर्म्मगतक्रमविशेष-विषयादिनिर्णयः । तत्रापि प्रथमे पादे श्रुत्यादिपठनक्रमो निरूपितः, द्वितीये वाजपेयगतक्रमविशेषः, तृतीये वृद्धिवृद्ध्यभावौ, चतुर्थे श्रुत्यादिषु पूर्व्वपूर्व्वस्य प्राबल्यमुत्तरोत्तरस्य दौर्बल्यमित्यादिविचार इति विशेषः । तदुक्तम्—

श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्द्धने ।
श्रुत्यादेर्बलिता चेति पञ्चमाध्यायपादगाः ॥ इति ।

षष्ठाध्याये कस्मिन् धर्म्मे कोऽधिकारी कोऽनधिकारीत्यादिकर्त्रधिकारविचारः । तत्रापि प्रथमे पादे चक्षुष्मतः कर्म्माधिकारो नान्धादेरित्येवमादिविचारः, द्वितीयेऽधिकारिधर्म्मविचारः, तृतीये मुख्याभावे प्रतिनिधिविचारः,चतुर्थे पदार्थलोपनविचारः, पञ्चमे कालादिवैगुण्ये प्रायश्चित्तनिरूपणम्, षष्ठे सत्राधिकारिविषयनिरूपणम्, सप्तमे देयविशेषविचारः, शेषतोऽष्टमे वह्निनिरूपणमिति विशेषः । तदुक्तम्—

अधिकारी तस्य धर्म्माः प्रतिनिध्यर्थलोपने ।
दीक्षासत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः ॥ इति ।

सप्तमाध्याये प्रकृतिगतस्य धर्मस्य विकृतावतिदेशः सामान्यतो निर्णीतः । तत्रापि प्रथमे पादे प्रत्यक्षवचनातिदेशो विचारितः, द्वितीये तस्य शेषः, तृतीये वह्निहोत्रनाम्नातिदेशः, चतुर्थे लिङ्गातिदेश इति विशेषः । तदुक्तम्—

प्रत्यक्षोक्त्यतिदेशोऽस्य शेषः सामनिरूपणम् ।
नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः ॥ इति ।

अष्टमाध्याये विशेषातिदेश उक्तः । तत्रापि प्रथमे पादे प्रत्यक्ष-वचनाभावे स्पष्टैर्लिङ्गैरतिदेशः, द्वितीयेऽस्पष्टैर्लिङ्गैरतिदेशः, तृतीये

प्रबलेन लिङ्गेनातिदेशः, चतुर्थे दार्विहोमिष्वतिदेशापवाद इति विशेषः। तदुक्तम्—

स्पष्टलिङ्गादथास्पष्टात् प्रबलादपवादतः।
अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः॥ इति।

नवमाध्याय ऊहविचारः। ऊहश्च मन्त्रस्थितानां देवता-लिङ्गादिवाचकशब्दानां प्रयोगविशेषे तत्तद्देवतालिङ्गाद्यनुसारेण परिवर्त्तनम्। तत्रापि प्रथमे पादे ऊहविचारारम्भो द्वितीये सपरि-करः सामोहः, तृतीये मन्त्रोहः, चतुर्थे मन्त्रोहप्रसङ्गापतितो विचार इति विशेषः। तदुक्तम्—

ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः।
नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्त्तिताः॥ इति।

दशमध्याये बाधो निर्णीतः। तत्रापि प्रथमे पादे बाधहेतुर्द्वार-लोपो निरूपितः, द्वितीये संक्षेपत उक्तस्य द्वारलोपस्य बहुभिरुदा-हरणैर्विस्तारः, तृतीये बाधकारणं कार्य्यैकत्वम्, चतुर्थे बाधकारणाभावे समुच्चय उक्तः, पञ्चमे बाधप्रसङ्गतो ग्रहादिविचारः, षष्ठे बाधप्रसङ्गेन सामविचारः, सप्तमे बाधप्रसङ्गत इतरसामान्यविचारः, शेषतोऽष्टमे बाधोपयुक्तो नञर्थविचार इति विशेषः। तदुक्तम्—

द्वारलोपस्य विस्तारः कार्य्यैकत्वं समुच्चयः।
ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः॥ इति।

एकादशाध्याये तन्त्रावापविचारः। तन्यते विस्तार्य्यते बहूनाम् उपकारो येन तत्तन्त्रम्। भवति च तदनुवादिनो शास्त्रोक्तिरनेकम् उद्दिश्य सकृत् प्रवृत्तिस्तन्त्रतेति। यथा बहूनां मध्ये स्थापितो दीपः। यद्वा सकृदासनशुद्धौ बहुदेवानां पूजासिद्धिः। यस्त्वावृत्त्या बहून् उपकरोति स आवापः, यथा बहूनां भोजनम्। एकादशा-ध्यायस्य प्रथमे पादे तन्त्रस्योपोद्घातः, द्वितीये तन्त्रावापौ, तृतीये तन्त्रोदाहरणप्रपञ्चः, चतुर्थे आवापप्रपञ्च इति विशेषः। तदुक्तम्-

उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः।

आवापविस्तृतिश्चैकादशाध्यायस्य पादगाः ॥ इति।

द्वादशाध्याये प्रसङ्गः। अन्योद्देशेऽन्यसिद्धिः प्रसङ्गः। तत्रापि प्रथमे पादे प्रसङ्गविचारः, द्वितीये तन्त्रिणां निर्णयः, तृतीये समुच्चयः, चतुर्थे विकल्प इति विशेषः। तदुक्तमध्यायविषयानधिकृत्य "प्रसङ्ग-स्तन्त्रिनिर्णीतिः समुच्चयविकल्पने" इति। एवं द्वादशाध्यायगतेषु षष्टिसंख्यकेषु पादेषु प्रतिपाद्या अर्थाः संगृहीता नवशताधिका अधिकरणापरपर्य्याया विचारविशेषाश्च स्वीकृताः।

'स्वाध्यायोऽध्येतव्य' इत्यध्ययनवाक्ये विचार्य्येति पदस्य विना-ऽध्याहारं तद् वाक्यं न निराकाङ्क्षमिति 'स्वाध्यायोऽध्येतव्य' इत्यत्र विचारबोधकपदस्य विद्यमानत्वादध्ययनविचारयोरेकमूलकत्वं समुपपन्नं भवति। एवं च गुरुगृहे स्थित्वा धर्म्मविचारोऽपि कर्त्तव्य इति सिद्धम्। इममेवार्थं मनसि निधाय जैमिनिगुरुरादौ सूत्रया-मास—'अथातो धर्म्मजिज्ञासे'ति। इहाथशब्दो वेदाध्ययनानन्तर्य्य-वचनः। अतः शब्दो हि वेदाध्ययनस्य दृष्टार्थत्वं सूचयति। तदेव वेदाध्ययनानन्तरम् अध्ययनस्य अर्थज्ञानफलकत्वेनाध्ययनवद् वेदार्थ-विचारस्यापि वैधत्वाद् धर्म्मजिज्ञासा-वेदार्थविचारो विधेय इति शास्त्रारम्भसूत्रार्थः। अस्य सूत्रस्य जिज्ञासाधिकरणमिति नाम।

अधिकरणं पञ्चावयवसमन्वितं भवति। तल्लक्षणञ्च—

विषयो विशय*श्चैव पूर्व्वपक्षस्तथोत्तरम्।

†सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥ इति।

तत्र यत्किञ्चन वेदवाक्यमेव सर्व्वेषामधिकरणानां विषयः, तत्तद्वाक्यं कस्यार्थस्य बोधकमिति सन्देहो विशयः। वादिप्रति-पादितं मतं पूर्व्वपक्षः। उत्तरं सामान्यतश्चतुर्व्विधम्।

---

* विशयो विकल्पः सन्देहो वा।

† निर्णय इति पाठान्तरम्। सामान्यतो निर्णयः पुनरनुभूतार्थकथनम्।

सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा।
पूर्व्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्व्विधम् ॥ इति।

इह पुनरुत्तरं सिद्धान्तो य एव पूर्व्वपक्षकोटिनिरासपूर्व्वक-स्वीकरणीयकोटिनिर्द्देशो भवति। सङ्गतिरपि सामान्यतः षोढा।

सप्रसङ्ग उपोद्‌घातो हेतुतावसरस्तथा।
निर्व्वाहकैक्य-कार्य्यैक्ये षोढा सङ्गतिरिष्यते ॥ इत्युक्तेः।

मीमांसाशास्त्रे तु सङ्गतिस्त्रिविधा—शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्चेति। 'शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधे'त्युक्तेः। असदुत्तरेणापि पूर्व्वपक्षकोटिनिरासो भवतीत्यतः सङ्गतेरुत्तरा-पेक्षया पार्थक्येन ग्रहणम्। अतएव भट्टपादैः सङ्गतिरधिकरणाङ्गत्वेन नोक्ता।

अधिकरणोदाहरणं प्रदीयते। जिज्ञासाधिकरणे 'स्वाध्यायो-ऽध्येतव्य इति वेदवाक्यं विचारार्थत्वेन विषयः। तेन वेदवाक्येन अध्ययनमक्षरग्रहणसाक्षमुतार्थग्रहणपर्य्यन्ताध्ययनं विधीयते इति विशयः। तत्र अक्षरग्रहणमात्रम् अध्ययनमिति पूर्व्वपक्षः। अर्थ-ग्रहणादृते सुस्थिरं न धर्म्मज्ञानम् न च धर्म्मज्ञानादृते अक्षरग्रहणसाफल्य-मिति अर्थज्ञानसहिताक्षरग्रहणमिति सिद्धान्तः। तेन विधिवाक्यस्य सार्थवेदाध्ययनमेव फलितोऽर्थ इति शास्त्रसङ्गतिः। एवं धर्म्मप्रमाण-विचारस्यात्र प्रतिज्ञानाद् अध्यायसङ्गतिः। पादसङ्गतिरप्येवमेव। अतो हि धर्म्मविचारो गुरुगृहे स्थित्वा कर्त्तव्य इति युक्तमेव।

अस्तु धर्म्मविचारः कर्त्तव्यः। किन्तु कः पुनः स धर्म्मः किं वा तस्य लक्षणमिति चेत्? तदेव जैमिनिमुनि'रथातो धर्म्म-जिज्ञासे'ति प्रथमसूत्रेण प्रारिप्सितस्य शास्त्रस्य श्रोतृप्रवृत्तिसिद्धये धर्म्मप्रतिज्ञानम् अवगमयति। स च धर्म्मः कथंलक्षणक इत्यभि-प्रायेणापि प्राह—'चोदनालक्षणोऽर्थो धर्म्म' इति। यो धर्म्मः स चोदनालक्षणश्चोदनैव तस्य लक्षणमिति भावः। एवं यश्चोदना-

लक्षणः स धर्म्मो नातल्लक्षणश्चैत्यवन्दनादिरिति स्वरूपविधावर्थात् प्रमाणसिद्धिर्वेदितव्या। 'मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणाद्' इत्युक्तेः। अतो हि चोदनाशब्दस्य वेदमात्रपरत्वाद् वेदबोधितविधिविभाव्यप्रयोजनोद्देश्यक्रतिविषयो धर्म्म इति सुष्ठूक्तिः।

ततः शब्दनित्यत्वमाचरितम्। तत्र हैरण्यगर्भादयो मन्यन्ते वर्णौघश्रवणानन्तरं पदप्रत्ययो मानसप्रत्यक्षेण समुद्‌गतो भवति। तस्य च प्रत्ययस्य वर्णव्यतिरिक्तः कश्चित् स्फोटनामकपदार्थो विषयः। स एव नित्यो न तु वर्णः। मीमांसका एतन्न सहन्ते। त एवमाहुः—पुरुषोच्चारिते कस्मिंश्चित् पदे तद्‌गता एवेमे वर्णा इति काचिदबाधितप्रत्यभिज्ञा जायते। तद्बलान्नित्या वर्णाः। एवं सति न साधीयसी हैरण्यगर्भादीनां स्फोटकल्पना, न चापि नित्येषु शब्देषु कारणदोषाभावाद् अप्रामाण्यमिति। यदुक्तम्—

विध्यादिरूपो यः शब्दः सोऽनित्योऽथाविनश्वरः।
अनित्यो वर्णरूपत्वाद् वर्णे जन्मोपलम्भनात्॥
अबाधितप्रत्यभिज्ञाबलाद् वर्णस्य नित्यता।
उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते॥ इति।

( क्रमशः )

———

## कुण्डलीविचारः

१८३८।१।२०।४८।३४

| | | | |
|---|---|---|---|
| ब्रू३ र४ के७ शु५ | म३ बु३ | लं | |
| श८ | | | |
| | | रा२० च१७ | |

मीनलग्ने जातस्य जातकस्य गुरो रविणा सहावस्थानेन तथा लग्नाधिपस्य वृषराशौ षष्ठाधिपसम्बन्धेनाष्टोत्तर्यां गुरुदशायां व्याधि-पीडितः चीणाङ्गश्च भविताय जातकः, पश्चाच्छुक्रदशायां पुनः स्थौल्यं शैशवे तु चीणता भवति। भवति चाविचारमतिर्मानहानिशङ्कया सदा क्रुद्धः। कदाचिद्वा दुष्टचेष्टा। गुरुदशायां राजतो भीतिः। रवि-दशायां व्याधिबाहुल्यम्। रविगुर्वोरन्तर्दशासम्बन्धे भ्रातृदुःखं भ्रातृ-हानिर्वा। तथा पितुरपि दुःखं कमचेते अस्वास्थ्यम् असाफल्यं वा भवति। तत्र गुरोर्दशायां पितृगतानि फलानि, रविदशायान्त्वात्म-गतानि, रविगुर्वोश्चारवशाच्च पितरि भ्रातर्यात्मनि च कदाचिद्व्याधितः कदाचिद्वा कर्मभोगाणि फलानि कल्प्यानि।

मेषे कुजर्क्षे धनभाग्याधिपस्य कुजस्य सुखसप्तमाधिपेन बुधेनैकर्क्षे प्रत्यरितारायामवस्थित्या बुधदशायां ज्ञातिवादमूलतो भ्रातृवाद-मूलतो वा गृहे धनसुखहानिः। पत्नीधनलाभयोर्यौगपद्यं पत्नी-

लाभात् प्राग् वा धनाधिकारः। पत्नग्रनुगता धनसुखकामना भ्रातृभि-विवादाय भविष्यति। सञ्चितधने वञ्चनासम्बन्धश्च कल्पनीयः। विक्रमर्क्षे रविगुर्वोरवस्थित्या भाग्यगतस्य पञ्चमाधिपस्य पूर्णशशिनस्तत्र पूर्णदृष्ट्या गुरुदशायां विद्यार्जनं कर्मक्षेत्रे ख्यातिविशेषोऽर्थ-प्राप्तिर्वा भवति। रविदशायां राजद्वारे प्रतिष्ठा, तथा चन्द्रदशाया-मपि, किन्तु रवौ सहजावैधव्यं भवति, चन्द्रदशायां कन्यापक्षतो दुःखविशेषः। गुरुदशावसाने पितुः कार्यहानिस्तन्मूलतो राजद्वारे व्ययबाहुल्यम्।

सुखराशौ तृतीयाष्टमाधिपस्य केतुसहायस्य शुक्रस्यावस्थित्या चतुर्विंशवर्षादूर्ध्वं द्वात्रिंशवर्षमध्ये केतुदशायां सहजादुःखमाकस्मिकम्, अष्टाविंशे च वर्षे स्वस्यापि दुःखविशेषश्चिन्त्यः। एवं गुरुदशायां शुक्रान्तरे सहजाविवाहकृतो व्ययः, उत्सवसमुद्भूतो वा।

पञ्चमे लाभव्ययाधिपशनैश्चरस्यावस्थित्या तदधिपस्य शशिनो नीचर्क्षे भाग्यराशाववस्थित्या तत्र च कर्माधिपगुरोर्दृष्ट्या म्लेच्छ-विद्यायां पटुत्वं तन्मूलतश्च राजद्वारे दास्यं भवति। एवं गुरु-दशायामष्टोत्तर्यां राहोरन्तरे पितुः कर्ममूलिका प्रतिष्ठा। किन्त्वव-सानकाले कर्माधिपतिनासौहार्द्यं चन्द्रान्तरे विद्यामूलतोऽर्थलाभः, कुजबुधयोर्विवाहमूलतो धनसम्बन्धः। कुजान्तरे कर्मक्षेत्रप्रवेश-सूचना, शन्यन्तरे कर्मक्षेत्रप्रवेशः, बुधान्तरेऽपि भवितुमर्हति। एवमपि गुरुदशायां पितुः स्थावरसम्पद् रविबुधयोरन्तरे पितृ-व्यादिभिर्वादः, तन्मूलतः पितृसम्पद्धानिश्च।

कर्मर्क्षे राहोः स्थित्या कर्माधिपस्य च विक्रमर्क्षे स्थिरराशौ स्थित्या, तत्र च षष्ठाधिपस्यावस्थानाज्जातकस्य कर्मप्रतिष्ठा पितृवत्, पत्नीलाभात् परत एव कर्मणि प्रतिपत्तिः। भवति च प्रभुत्वं कर्मक्षेत्रे बहूनां च पालकत्वम्। धनुराशौ राहुगुर्वोशारसम्बन्धेनै-कस्य दृष्टिसम्बन्धेन च मानहानिः पितृसम्पन्मूलको वादश्च। मेषर्क्षे

शनिराहुकुजानां पार्थक्येन यौगपद्येन वा सम्बन्धात् व्याधिमूलिका वादमूलिका पत्नीमूलिका वा धनहानिः, स्वजनवियोगादिदुःखञ्च। वृश्चिकर्त्ते शनिराह्वोश्चारसम्बन्ध आत्मनो व्याधिभीतिः।

---

## "मनो हि जन्मान्तरसङ्गतिज्ञम्"

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

जन्मान्तरसङ्गतिस्तावत् कीदृशी ? इति चर्चायाम्, अस्माभि विस्मरणशीलैर्वर्त्तमाने जनने यादृशी वासना समनुभूयते नूनं तादृश्येव जन्मन्यतीतेऽपीत्यनुमातुम् अध्यवसातुं वा शक्यते; जन्मान्तरसङ्गतिरेवेयम् प्राक्तनसंस्कार इत्याख्यायते। अनुभूतो विषयः प्रतिक्षणं संस्कारात्मना परिणमते। निशाम्य रम्याणि वस्तूनि, निशम्य च मनोहराञ्छब्दान्, यतः सततमयं जन्तुः सर्वोऽपि उन्मनो-भवति, नन्वत एव वयम् अनुमिमीमहे—भावस्थिराणि जननान्तर-सौहृदान्येव चेतनोऽयम् अबोधपूर्वं चेतसा संस्मरति ध्रुवम् इति। तथाहि—

'रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि॥'
'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः।'
'तस्य संवृत-मन्त्रस्य गूढाकारेङ्गितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव॥'
'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।

तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥'

'तं विद्या-कर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥'

जननान्तरसङ्गतिरेव उपनिषदि—'पूर्वप्रज्ञा' इत्यभिधीयते; इदानीमपि जातिस्मराणां माणवकानां बहूनाम् उपन्यासान् निर्याण-कालिकान् वार्तापत्रिकाभ्यः पदे पदे उपलभामहे; चिन्तीयामहे च। गैर्वाणीपरिचितिशालिनो हि वयं गीर्वाणभाषामयान् प्रबन्धान् वा पत्रिका वा यावता कुतूहलेन पश्यामो न तावता कौतुकेनेतर-भाषामयाणि पुस्तकानि पत्राणि वेत्यनुभवसिद्धमिदम् अस्मदा-दीनाम्; तत् कस्य हेतोः?

त्रिमूर्तिष्वन्यतमां कामपि मूर्तिं कश्चिद् भजति; मूर्ति-त्रितयमपि समं भजति कश्चित्।

'शैवा वयं न खलु तत्र विचारणीयं
पञ्चाक्षरीजपपरा नितरां तथापि।
चेतो मदीयमतसीकुसुमावभासं
स्मेराननं स्मरति गोपवधूकिशोरम् ॥'

इति सूक्त्या श्रीलीलाशुकमुनिः—भगवति गोपालबालके एव चेतः प्रसज्यते—इति वर्णयामास; तत् कुतो हेतोः?

जातमात्रः किल शिशुः स्वयमेव स्तन्यपाने प्रवर्तते खलु! तत् केन हेतुना?

अतोऽवश्यम् अभ्युपगन्तव्यं मनीषिणा—सकलं प्राणिजालं स्वस्व-जन्मान्तरीयकर्मानुसारं तेषु तेषु भोगसाधनेषु व्याप्रियत इति।

इयमेव च जन्मान्तरीयवासना 'प्रकृतिः' इति च व्यपदिश्यते।

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
इन्द्रियार्थान् विमूढात्मा कर्ताऽहमिति मन्यते ॥'

'कुर्वते कर्म भोगाय कर्म कर्तुञ्च भुञ्जते।
नद्यां कीटा इवाऽऽवर्तादावर्तान्तरमाशु ते ॥

व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम् ॥
सत्कर्मपरिपाकात् ते करुणानिधिनोद्धृताः ।
प्राप्य तीरतरुच्छायां विश्राम्यन्ति यथासुखम् ॥'
'जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि ।'
'पूर्वजन्मसुकृत-व्ययलब्धाः सम्पदो विपद एव विमृष्टाः ।
पात्रपाणिकमलार्पणमासां'
'न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति ।'

पुण्यपापमिश्रकर्मफलानुभवार्थमेवेदं वर्ष्माऽस्माभिरासादितम् । यद्यपि वादिनः केचिद् जन्मान्तरं नाङ्गीकुर्वन्ति, तथापि, आस्तिकोत्तमैर्नैतदपलपितुं पार्यते । कान्तोपदेशसम्मितमुपदेशम् उपदिशन्तो महाकवयोऽस्माकं प्रमाणम्—

"यदेव पूर्वं जनने शरीरं सा दक्षरोषात् सुदती ससर्ज ।"
'भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ।'
'ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ।'

जन्मान्तरीयसुकृतपरिपाक एवायम्—दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः—इति पद्यार्धेन श्रीमदमरसिंहेन क्रोडीक्रियते ।

'द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥'
'क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ।'
'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥'

सत्कर्मानुष्ठानेन मनसि प्रसन्ने—

'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः',
'उपदेशमवाप्यैवमाचार्यात्तत्त्वदर्शिनः ।
पञ्चकोशविवेकेन लभन्ते निर्वृतिं पराम् ।'

'आनन्दरूपास्तिष्ठन्ति'; 'अपरिष्कृतमनोवाचाम् अगोचरं ब्रह्म';

'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' ; 'मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन' यथा किल विमलम् आदर्शतलं मुखबिंबग्रहण-निपुणं भवति, नन्वेवमेव अमलम् अन्तःकरणाख्यं मनः विद्या-कर्म-वासनानुगुणं फलं निर्वाणाभिधम् आत्मस्वरूपाभिव्यञ्जनेन दत्त्वा आनन्दयतीति शम् ॥

---

## साहित्यसौन्दर्य्यम्

[ निबन्धकः—महेशानन्द-न्यायसांख्ययोगशास्त्री ]

अय्यशेषशेमुषीजुषो विद्याभ्यासविलासानन्दितमानसा महानुभावा महात्मानः, नाविदितमस्त्यत्रभवतां भवतां सुरसरस्वती-प्रणयप्रियाणाम्, यत्संस्कृतसाहित्यसौरभसमुद्भवं सकलसांसारिक-साहित्यसौन्दर्य्यं म्लानञ्चेति। संस्कृतसाहित्यसौन्दर्य्यसोदर्योऽस्ति कश्चिदपरः संसारे न वेत्यद्यापि साहित्यसुधासारसपिपासूनां विदुषां विचारास्पदमेवेति निश्चितं प्रतिजाने। तमेवाद्यान्विष्याहं स्तोकं विवक्षुः सर्वशास्त्रपारावारपारीणानाम् अनवद्यानेकविधविद्यागोष्ठी-जनितसुखरसिकानामादरणीयचरितानां श्रीमतां संमुखे सुलभ-बालकदोषैरेव बाधितः समुपस्थितोऽस्मि। आशासे श्रीमन्तः "ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः" इतीमां नीतिमनु-सरन्तो मदीयं निवेदनं श्रुतिकट्वपि बालालपितमिदमित्याकलयन्तः कर्णे करिष्यन्तीति।

माननीयाः पारिषद्याः, विचित्रपरिवर्त्तनसहनक्षमेऽप्यस्मिन्न-पारे जगतीतलेऽनेकानि वस्तुजातानि क्षणविध्वंसीन्यपि नयनानन्द-

जनकानि चेतोहराणि सुमधुराणि प्राकृताप्राकृतान्यपि कमनीयतमान्युपलभ्यन्ते। सर्वेषामपि च कमनीयतमानां पदार्थानाम्मध्ये साहित्यमतिसुन्दरमित्याहुः साहित्यविदः सन्तः। साहित्यञ्चोभयविधमार्य्याणामस्माकं लौकिकालौकिकभेदात्। केचनाधुनिकाः साहित्यशब्देनालंकारशास्त्रस्यैवोपादानं कुर्वन्ति रूढ्या, किन्त्वियं तेषां संकीर्णा बुद्धिरेवाभाति मह्यम्। हिन्दसाहित्यशब्दालोचनेन यथा प्राकृतोऽपि जनः समस्तस्यैव हिन्दीवाङ्मयस्याध्यवसानमध्यवस्यति न केवलं रसगुणरीत्यलंकारपूर्णस्यैव काव्यस्य, तथैव मम साहित्यसौन्दर्यान्तर्गतमपि सकलसुरसरस्वतीसाहित्यसौन्दर्य्यमायात्यापाततः। एवञ्च हितेन सहेति सहितं सहितस्यैव भावः साहित्यमिति व्युत्पत्त्यर्थलब्धानि यानि कानि वेदाः दर्शनानि धर्मविवेचकानि सूत्राणि गणितेतिहासचिकित्साभूगोलकाव्यनाटकाख्यायिकादीनि सर्वाण्यपि साक्षात् पारम्पर्य्येण धर्मार्थकाममोक्षफलप्रदानि शास्त्राणि साहित्यशब्देन गृह्यन्ते। एवञ्चांगलभाषायाः लिटरेचरसमकक्षोऽयमस्माकं साहित्यशब्दः। साहित्यशब्दस्य मर्मज्ञैः पुरुषैः साहित्यशब्दतुलना परब्रह्मणा सह "शब्दब्रह्मातिवर्तते" इत्यभवत् कृता। संस्कृतसाहित्याकाशे वेदाश्चन्द्रमा इवान्यानि दर्शनाद्यनेकविज्ञानसम्भारभास्वराणि नक्षत्राणीव साहित्यपदभाञ्जि स्फुटं दरीदृश्यन्ते।

साहित्यस्य मानवीयेन जीवनेन सह प्रतीयतेऽनर्घ्यः कश्चित्सम्बन्धः। मनुष्योन्नत्याऽऽवनत्या वा परिवर्तत एव साहित्यम्। यत्किमपि मानवीयवंशे वैचित्र्यं जायते, तदेवांक्यते समस्तेऽपि भूमण्डलवर्तिन्यपारे साहित्यप्रत्यादर्शे। किन्तु मानववंशस्य जात्या वाऽऽवनत्यावश्यं साहित्यस्याप्यवनत्या साहित्यस्यापि विध्वंसेन भाव्यमिति नास्ति कस्या अपि जातेः साहित्यस्याच्छेद्यो नियमः। सर्वसंहारकारिण्यन्तकाकारमहाकालकराले जगतीतलेऽद्य यावद्

भूयसीनां द्रढीयसीनाञ्च जातीनां क्षयमुपगमितेऽपि ब्रह्माण्डभाण्डोदरे तासां जातीनां साहित्यमद्यापि प्राप्यत एवान्वेषणं कुर्वद्भिर्जनैः।

जातीनां धर्मः, जातीनां सभ्यता, जातीनां प्राकृतसौन्दर्याभिरुचिरेतत्सर्वमालोकयितुं क्षमा भवन्ति अन्यजातीयपुरुषाः परजातीयसाहित्ये सरोवरे। दर्पणाकारे भारतीयप्राचीनतमे संस्कृतसाहित्यसौन्दर्य्याकरेऽपि हैन्दवानां धर्मस्य, सभ्यतायाः, विज्ञानस्य, ऐतिह्यस्य ज्योतिषाद्यनवद्यविद्याचातुर्यस्य, व्यायामाद्यनेकविधस्य क्रीडनस्य, राजनीतेः, चापचक्रचर्मशक्तितोमराद्यनेकप्रकारायुधविषयकविज्ञानस्य, वीणाद्यनेकविधनारदीयादिकृतसूक्ष्मभेदस्य संगीतशास्त्रस्य हस्तकलाकौशलादिषड्विधव्यापारभूतस्यातिसुन्दरं प्रतिबिम्बं प्रतिफलितमिवाभाति।

गुणैकपक्षपातिना देशीयपक्षपातरहितेन प्रोफेसरमोक्षमूलरनामधेयेन जर्मणदेशवास्तव्येन संस्कृतसाहित्यरत्नाकरनौकर्णधारेणालेखि स्वकीयाऽतिशयपाण्डित्यप्रदर्शनपरे निबन्धे—यथा हि वयं हिमाच्छन्नस्य हिमवत उच्चतां तस्य सानुश्रेणीदर्शनेनानुमिमीमहे, एवमेव प्राचीनस्य भारतस्य संस्कृतेः सभ्यतायाः धर्मस्य कलाकौशलादीनाञ्चानुमानं वेदनिर्मातुरीश्वरस्य, उपनिषद ऋषीणां वेदान्तसांख्यादिबहुप्रकाराविष्कारकाराणामतिप्राचीनानां ज्ञानेन शक्यते कर्तुम्। संस्कृतस्यान्वर्थतामुपादेयताञ्च दर्शयता संस्कृतसाहित्यसौन्दर्यामन्दानन्दमोहितमानसेन जर्मणदेशस्यातिविदुषा श्लेगेल इत्याख्येनोक्तमासीत्—साहित्यं हि जातेर्विचारस्य जीवनसम्बन्धिन उदन्तस्य च प्रत्यक्षं दीप एव। या जातिः पूर्वमुन्नतिशिखरे स्वपादप्रक्षेपं विन्यस्यन्ती सती दैवाद् यद्यवनतिमायाति तदा सा स्वं साहित्यमहिमानमनुभवन्ती पुनरपि उन्नतिमार्गमारोढुं शक्नोति। स्वकीयसाहित्यं पथिप्रदर्शकं कृत्वा सुगमतयोन्नतिं विदधाति जातिः।

भारतीयानां संस्कृतसाहित्यं दर्पण एव, यस्मिन् भारतीयानां प्राचीनतमानामतितमां दीप्यते संस्कृतिः सभ्यता चेति। विज्ञानस्य धर्मव्यवस्थाया राजनीतेश्च मूलभूतं तथा सर्वेषामेव ग्रीकलाटिन-मिस्रादीनां साहित्यानां सौन्दर्योत्पादकं संस्कृतसाहित्यमेव प्रामाणिकत्वेनाङ्गीचकार तत्रभवान् मोक्षमूलरः।

कर्णल टाड्-महोदयः स्वीये राजस्थाननाम्नि पुस्तके फ्रांस-जर्मणीटलीस्वीडेनादिष्वनेकेषु राष्ट्रेषु भारतीयसंस्कृतसाहित्यस्य सुन्दरतमां कथां कथयामास।

पाश्चात्यदेशवास्तव्यैर्जनैः सहास्माकं यः कोऽपि सम्बन्धोऽस्ति सोऽस्माकं साहित्यसौन्दर्य्यकारणक एवेति तथ्यं विदांकुर्वन्तु महाशयाः। सुरसरस्वत्याः प्राचीनत्वार्वाचीनत्वविषये न विवदामहे वयं किन्त्वस्या भाषाया रूपमलौकिकमेव। इयं च भाषा सर्वभाषाप्रसविनी, अप्सरेव सर्वसुरासुरसांसारिकमनोहरा सती ग्रीकभाषाया सकाशादपि अधिक-पूर्णा, लाटिनभाषाया अपि विस्तृता विशुद्धा चेति तु सहर्षं व्याहरामः। इति मतं सरवीलियम जोन्समहोदयस्य।

संस्कृतसाहित्यं हि जगति किमप्यमूल्यं रत्नम्। आत्मानं धन्यं मन्यामहे वयं यद् भारत एव वर्षे समुत्पन्नाः स्मः। येषामस्माकं साहित्यं कालकवलितेषु बहुषु साहित्येषु, शत्रूणामाक्रमणेन भस्मसाद्-भूतेषु पुस्तकेषु, नद्यां प्रवहत्सु हस्तरचितेषु ग्रन्थेषु, साहित्यसौन्दर्य्य-गोपनपरेषु पंडितप्रकाण्डेषु कालाकाण्डताण्डवकारणमोहितेषु दिवं यातेषु सत्स्वपि दुर्विलसितात् पुस्तकाकारसौन्दर्य्यमात्रावशिष्टेषु स्मरणीयमात्रचरितेषु ऋषिप्रवरेषु संस्कृतसाहित्यसौन्दर्यैन्नविप्लावितं सदद्यापि महत्यामुन्नत्यामुपलभ्यत एव।

अत्याद्रियत एवास्माकं साहित्यं विदेशेषु। मोशिये लियोन डलबोजेनेत्याख्येन महापण्डितेन अष्टादशोत्तरचतुरशीतितमे खृस्तीयब्दे पारिस् इत्याख्ये जनपदे निर्वृत्तायां साहित्यगोष्ठाम-

शादि वेदसुन्दरता निरुपमेयेति। मान्याः, अन्वेषणीयमत्र भवद्भि-र्विद्वद्भिः किमत्र कारणं यत् संस्कृतसाहित्यं संसारिकाणां सर्वेषा-मतिकठोरचेतसामपि चेतांसि रञ्जयितुमद्यापि समर्थमेव। सूक्ष्मेक्षिकया विचार्य्य व्याचक्षतां स्पष्टं यत् संस्कृतसाहित्यसौन्दर्य्यं संस्कृतसाहित्यविज्ञानं संस्कृतप्रकृष्टोत्कर्ष एवात्र निदानं वरीवर्त्ति येन सर्वेऽपि भावुकाः मधुकरा इवाम्रपल्लवमिदमत्याद्रियन्ते।

संस्कृतेऽस्मिन् साहित्ये प्राधान्येन धर्मोऽवर्णि। संस्कृतसाहित्य-न्नाम धर्मस्य प्राणाः। भावुकाः, इह संसारे धर्मार्थकाममोक्षा-श्चत्वारः पुरुषार्थाः पुरुषैरवश्यं प्राप्तव्या इत्येषा सरणिर्विद्यत आर्य्याणामिति को न जानात्यत्रभवत्सु। अर्थकामयोः पुरुषस्य स्वतः प्रवृत्तिनिमित्तत्वात् तथा साहित्यस्यापेक्षा नास्तीति कृत्वा ततो विरमामो वयम्। धर्मात्तु प्राकृता जनाः पराङ्मुखा विशेषतश्च मोक्षात्। तमेवोपदिशत् संस्कृतसाहित्यं सफलं सत् रञ्जयितुमीष्टे सहृदयहृदयानि।

अहरहः सन्ध्यामुपासीत, यावज्जीवमग्निहोत्रं जुहुयात्, इत्येवं-विधानि नक्षत्राणि वर्त्तन्ते प्रतिपदं संस्कृतसाहित्याकाशे। इदं त्विदानीं चिन्त्यमानमानन्दयति मम मानसं मराल इव मानसं, यत् परदेश-भवैरपि जनैः स्तूयमानो विज्ञानभांडारसमलङ्कृतकोषाकरेणालङ्कृतः धर्मान्तरेभ्यश्च बहुगुणयुक्तोऽयं वेदोक्तधर्मः। संस्कृतसाहित्यमहिम्ने संस्कृतसाहित्यसुन्दरतायै संस्कृतसाहित्यान्तर्गतविज्ञानातिशयाय वेदेभ्यः के न स्पृहयन्ति। संस्कृतसाहित्ये वर्त्तमानानि, आत्मबुद्धि-तत्त्वादिप्रतिपादनपराणि दर्शनानि केभ्यो न रोचन्ते। वैदिकं धर्मं स्मारं स्मारं दार्शनिकं तत्त्वं पाठं पाठं नाटकादेर्दृश्यं दर्शं दर्शं के नोच्चैः स्तुवन्ति संस्कृतसाहित्यसौन्दर्य्यम्।

संस्कृतसाहित्यसौन्दर्य्यसरोवरात् प्रवहन्ति सर्वा भाषाः। भाषायाः साहित्यस्य च भवति नित्यः सम्बन्धः। साहित्यसौन्दर्यानुभवा-

नन्दोपभोगं कर्तुं भावुका एव प्रभविष्णवः। साहित्यसौन्दर्य्य-सरोवरे निमज्जितान्तःकरणानां ज्ञानमपि सरोवरान्तर्गतातिनिर्मल-सलिलमनुकरोत्याश्चर्यम्। किन्त्वेतद् विभावनीयं साहित्यसुन्दरतां विरला एव भावुका विदन्ति। तदेवाह तत्रभवानाहंकारिक आनन्दवर्द्धनाचार्य्यः—

शब्दार्थशासनज्ञानमात्रेणैव न विद्यते।

वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम्॥ इति वेदेऽपि शृणुमः तावत्—उत त्वः पश्यन्न ददर्श वाचम् उत त्वः शृण्वन् न शृणोत्येनामिति। साहित्यसुन्दरतान्तर्मुण्डितान्तःकरणाः सुकरणाः कारुण्य-निलया ऐहिकं सुखमनुभवन्तः सुगमेन सुपथा पारेसंसारं सरन्त इमाम् हिन्दीसाहित्यशिरोमणेः कविवर्य्यस्य विहारिलालस्योक्तिं सफलयन्ति एव—तंत्रिनादसरसकवित्तरसरागरतिरंग, अनबूड़े बूड़े तरेजे बूड़े सब अंग।

भारतीयस्य साहित्यस्य सर्वप्राथम्यात् सर्वसाहित्यापेक्षया सौन्दर्यातिशयाद् धर्म-राजनीति-गार्हस्थ्यजीवनादिव्यवस्थायाः प्राकृत-सौन्दर्य्यद्योतनाच्च सर्वोत्कृष्टतमं सौन्दर्य्यम्।

यस्यामापः परिचराः समानी अहोरात्रे अप्रमादं क्षरन्ति। सा नो भूमिर्भूरिधारा उक्षतु नो वर्चसा॥ एतादृशं प्राकृतसौन्दर्यवर्णनम्।

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णुरथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्। अस्यैव विहितो हिन्द्यनुवादोऽनूद्यते श्रोतृ-गणमनोरंजनाय—

हे जगदीश दयाल ब्रह्म प्रभु! सुनिये विनय हमारी। हों ब्राह्मण उत्पन्न देशमें धर्मकर्म व्रतधारी। क्षत्रिय हों रणवीर

महारथ धनुर्वेद अधिकारी। धेनु दूधवाली हों सुन्दर वृषभ तुंग बलधारी। हों तुरंगगति चपल अंगना हों स्वरूप गुणवाली। विजयी रथीपुत्र जनपदके रत्नतेजबलशाली। जबही जब जग करै काम जलधर जलवरषावें। फलें पकें बड़ें सुखद वनस्पति योग क्षेम सब पावें।

एतादृशी लोककल्याणानुग्रहकांक्षिणी प्रार्थना। तत्त्वमसीति महावाक्येभ्योऽन्येषां सर्वेषामपि सुखे सुखं दु:खे दुःखमनुभवनीय-मिति साम्यवादमाविष्कार मम साहित्यम्। समानो मंत्रः समितिः समानी समानं मनः सहचित्तमेषाम्। समानमंत्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि।

'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः' इत्यादीन्यति-मनोहराणि स्थलानि लौकिकालौकिके संस्कृतसाहित्ये प्रतिपदं सन्ति। वेदेषु वर्णितं विज्ञानं दर्शनेषु वर्णितस्य आत्मनः परब्रह्मणः प्रकृतेः ज्योतिषे विद्यमानातीन्द्रियज्ञानबोधकविज्ञानसौन्दर्य्यं कन्न सचेतसमाकर्षति।

पूर्वं भारतीयाः प्रकृतिसौन्दर्य्यगुणगुम्फिताः सन्तो वस्तुत ऐहिकं सुखं न कामयामासुः। मेध्यैः फलैः वृत्तिं समाचरन्तश्चिरं तपो-भूमावाश्रमेष्ववात्सुः। भारतीयसाहित्येऽस्मिन्नाध्यात्मिकभावना प्रतिकर्त्तव्येषु वर्णिता वर्त्तते। सैवातिनिर्म्मला भावना संस्कृत-साहित्यस्य सौन्दर्योत्पादिका कालेनेह जाता। येन चित्तं प्रसीदति तस्य वर्णनेनास्य सौन्दर्यं गौरवायैव सम्पन्नं लोके। मैत्री-करुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनात-श्चित्तप्रसादनम्। एवमस्य भावयतः शुक्लो धर्म उपजायते। इति योगभावनयाऽवश्यं चित्तं प्रसीदति। बृहदारण्यके-मैत्रेयीति हो-वाच याज्ञवल्क्यः, उद्यास्यन् वारेऽयमस्मात् स्थानादस्मि हन्त ते-ऽनया कात्यायन्याऽन्तं करवाणीति। सा होवाच मैत्रेयी, यन्नु म इयं

भगो: सर्वा पृथिवी वित्तेन पूर्णा स्यात् कथं तेनामृता स्यामिति, नेति होवाच याज्ञवल्क्यः—यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति। सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्य्याम्। अयमतिचारुप्रश्न आर्यजातेश्चारुसंवादश्चास्मिन्नेव संस्कृतसाहित्ये वर्तमानः किन्न सौन्दर्याभिव्यंञ्जकः शिक्षादश्च भवति लोके ? नश्वरे जगति यदविनश्वरं वस्तु तस्यैवान्वेषणं विदधत् साहित्यमिदं सौन्दर्यभाग् भवति। यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति सोऽन्वेष्टव्यः स विजिज्ञासितव्यः। अयमेवास्ति संस्कृतसाहित्यस्य सन्देशो लोकाय संस्कृतसाहित्यसौन्दर्य्यंहिमालयोपत्यकायाः पार्श्वात् प्रवहति। मूलमुद्गमस्यानन्तस्य मास्तपोभूमय एवाभूवन्॥

भारतवर्षस्यातिप्रख्यातपुरुषेण श्रीरवीन्द्रनाथटागोरेणाप्युक्तम् भारतीयसभ्यतायाः साहित्यस्य चोद्गमः पूर्वं तपोवनेष्वभूदिति।

आर्य्यजातिः संस्कृतसाहित्यावलम्बनं कृत्वा संसाराय चैतन्यात्मकं ज्ञानं ददौ। जले स्थले, ओषधिषु वनस्पतिषु सर्वत्रैवेश्वरप्रतिमाऽस्ति, सा साक्षात्करणीयेति महत्त्वमेवास्ति संस्कृतसाहित्यस्य।

"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्"।

"इह चेदवेदीदथ सत्यमस्ति।
न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचिन्त्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति॥"

भारतेऽस्मिन्नार्याणामात्मनो जिज्ञासा एव प्रबला आसीत्। एतावता न खल्वेवं ज्ञातव्यं भवद्भिर्यत् संस्कृतसाहित्ये केवलं प्रकृतेः सत्यभूतस्यैव च पदार्थस्य वर्णितत्वात् पूर्वे भारतीयाः साहित्यकारा लौकिकत्वानभिज्ञाः सन्तः सांसारिकाणां किम———

कारं माकार्षुः। नास्ति भारतीयसाहित्ये ब्रह्मज्ञानेन सह संसारिकाणामपि पदार्थानां सौन्दर्याभिव्यञ्जकं वर्णनमिति।

भासकालिदासशूद्रकबाणभट्टादिभिर्महानुभावैः स्वीयस्वीय-निबन्धेषु व्यावहारिकं ज्ञानमतिसुन्दरमवर्णि। पतिगृहं प्रति गच्छन्तीं शकुन्तलां प्रति कण्वोक्तिरियम्—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तृविप्रकृतापि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥

व्यवहारस्य पदप्रदर्शिका विद्यते।

संस्कृतसाहित्यमेवास्मान् सार्वदेशिकं ज्ञानं शिक्षयितुं क्षमम्। संस्कृतमेवाध्येतुं ग्रीकदेशाद् बहवो महानुभावा भारते समाजग्मुः।

---

## सामुद्रिकशास्त्रम्

निखिलेषु लक्षणशास्त्रेषु सामुद्रिकशास्त्रं श्रेष्ठतया वरीवर्ति, यतोऽस्योपयोगित्वे विचार्यमाणे "सल्लक्षणो वरो लक्षणवतीं कन्यामुपयच्छेत,

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्,
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः"

इत्यादिवचनैः स्त्रीपुंसयोः सामुद्रिकलक्षणानां विवाहोपयोगात्,

"लाञ्छनैर्विविधाकारैर्लाञ्छितं यच्च दृश्यते।
चक्राङ्कितं हरेश्चापि शालग्रामस्य लक्षणम्।
यथायोग्यं विचार्यैव ग्रहीतव्यं प्रयत्नतः॥"

इत्यादिवचनैः शालग्रामपूजादावुपयोगात्, दोषवर्जितसल्लक्षण-गजाश्वदानेन महाफलोपयोगात्,

"सर्वलक्षणसंपन्नो यो भवेद् गज उत्तमः ।
संग्रामादिषु कार्येषु पार्थिवस्तं समारुहेत् ॥"
सर्वलक्षणसपूर्णमारुहेद् वाजिनं नृपः ।"

इत्यादिवचनैर्गजाश्वादिलक्षणानां राजकार्येऽप्युपयोगात् । हस्तरेखादिसूचनेन भाविशुभाशुभावगतेश्च, सामुद्रिकशास्त्रस्यातीवोपयोगित्वं सिध्यति ।

कियन्ति लक्षणानि स्त्रीपुंसयोः, कीदृग्लक्षणा हस्त्यश्वादयो भूपालै रक्षणीयाः, आयुःपरीक्षा, हस्तादिरेखाश्च, इत्यादि बहवो विषया विवेचनीयाः सन्ति ।

लक्षणकाण्डनामके ग्रन्थे[1] सविस्तरं सप्रमाणमुपयुक्ता विषया निरूपिताः सन्ति, ते च क्रमशोऽन्यतोऽपि विविधशास्त्रेभ्यो यथासमयं प्रयत्नतो विविच्य मुद्रणार्थं प्रेषयिष्यन्ते ।

---

१। एष ग्रन्थोऽमुद्रितोऽवत्य-योधपुरीयप्राचीनराजकीयपुस्तकप्रकाशनाम्नि पुस्तकालये विद्यते, परञ्चापूर्णोऽस्ति, केवलं २६५ पत्रात्मकमेव पुस्तकं वर्तते। एतत् क्वापि प्राचीन-पुस्तकालयेषु विद्वद्गृहेषु वा भवेच्चेत्तर्हि सूचनीयमिति प्रार्थ्यते ।

# समन्वयः

[ निबन्धकः—श्रीभूतनाथवेदान्तशास्त्री ]

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्म्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥"

आहुः केचन विद्वांसो निर्व्वाणोपायं ज्ञानमेव, अपरे प्रकृतिपुरुषयोर्विवेकख्यातिरेव मुक्तिरिति, केचन वा ईश्वरे परमानुरक्तिरेव मुक्तिदायिनीति, अन्ये कर्त्तुरेवास्य जगतः परमेश्वरस्य निमित्तरूपिणो ज्ञानादेव, क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरस्तत्प्रणिधानात् तज्जपात् तदर्थचिन्तनाद्वा द्रष्टुः पुरुषस्य स्वरूपावस्थितिरिति योगतत्त्वादिविदां राद्धान्तः । एवं परस्परविरोधवतां शास्त्राणां विभिन्नराद्धान्तानाकर्ण्य लोकैः संदिह्यते कथमप्रतिहतज्ञानता महर्षीणामिति, परमेतदेव शुभलक्षणं यत् प्रायशः सर्व्वेषामार्षतन्त्राणां कैवल्यमेकं लक्ष्यमित्यस्मिन् नास्ति कश्चन सन्देहलेशावसरः । किन्तु भवति खल्वस्मद्विधानामल्पमतीनां सदायं संशयो यत् कथमप्रतिहतज्ञानसम्पदम् अध्यात्मनिरतानां, समधिगतेश्वरतत्त्वानां भगवतां कपिलाक्षचरण-द्वैपायन-जैमिनि-कणभुजादीनामेतन्मतवैषम्यम् । कथं वा मुमुक्षुहितैषणाप्रणोदितधियोऽपि ते तदर्थं मार्गभेदं प्रदर्शितवन्तः । किं तर्हि आत्मविदो नास्माकं हितचिन्तका आसन्, परं केवलमस्माकं बुद्धिमोहनायैव विभिन्नमतवादान् लोकेषु प्रचारितवन्तः ? यदाह भगवान् बादरायणः;—"ईक्षतेर्नाशब्दमिति" । भाष्यकृद्भिः श्रीमद्भिः शङ्कराचार्य्यपादैश्च व्याख्यातम्—"यदुक्तं चेतनं प्रधानं जगत्-

कारणमिति कापिलं मतं तदग्राह्यम्। "तदैक्षत" इत्यादिश्रुतिभ्य ईक्षितृत्वश्रवणात्, ईक्षणपूर्व्विकेयं सृष्टिः। तदीक्षणन्तु चेतनधर्म्मो नाचेतनस्य प्रधानस्य तत् सम्भवति। अतः प्रसिद्धं ब्रह्मैव जगत्कारणं न वेदासम्मतमचेतनं प्रधानं जगतः कारणत्वेनाङ्गीकर्त्तव्यम्"।

भगवान् जैमिनि "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना-म्" इति सूत्रयित्वा सर्व्वेषां वेदानां क्रियापरत्वं दर्शयति। क्रिया-फलन्तु स्वर्गः। स्वर्ग एव चरमपुरुषार्थो जीवानाम्; तथाच "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्" इत्यादिवचनबलात् स्वर्ग एव परमपुरुषार्थ इति भगवतो जैमिनेर्मतम्।

सांख्याचार्य्यास्तु—

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥

इत्यत्र आनुश्रविकं कर्म्म लौकिककर्म्मवत् सुखदुःखात्मकं क्षयशीलं हिंसाद्यात्मकतया अविशुद्धञ्चेति व्याचक्षते, शास्त्रान्तरे च दृश्यते कर्म्मफलभुजां सुरलोकनिवासिनां पुनरावर्त्तनं "क्षीणे पुण्ये मर्त्त्यलोकं विशन्ति" इति स्मृतेः, "कर्म्मचितो लोकः क्षीयते" इत्यादि-श्रुतेश्च। अपि चास्य क्षयित्वं प्रतिपादयति श्रुतिरपरत्र—

यथा—

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति॥

"दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरा-पायादपवर्गः" इत्युवाच भगवान् गौतमः।

कौलास्तु वीरदिव्यपशुभावं कल्पयन्तः कौलाचारेणैव कैवल्य-मिति ब्रुवन्ति।

गौडीया वैष्णवास्तु—"गौराङ्गो भगवद्भक्तो न च पूर्णो न

चांशकः" इत्यस्य गौराङ्गो भगवतो भक्तो न, अंशः कोऽपि न, पूर्ण एव इत्येवं व्याख्याय तदुपासनासक्ता भवन्ति।

पाञ्चरात्रा भागवता मन्यन्ते, भगवानेको वासुदेवो जगदुपादानं निमित्तञ्च। तत्समाराधनध्यानज्ञानैर्भवबन्धनोच्छेदः। तस्माद् वासुदेवात् संकर्षणाख्यो जीवः। जीवात् प्रद्युम्नाख्यं मनः, मनसश्चानिरुद्धाख्यो ऽहङ्कारः, त एते वासुदेवादयश्चत्वारो व्यूहाः सर्व्वात्मका इति।

श्रीकण्ठाचार्य्येण शैवं दर्शनं प्रणयता शैवी भुक्तिर्विहिता।

वङ्गीयदार्शनिकाः सुधियस्तु द्वैपायनविरचितेषु ब्रह्मसूत्रेषु शाक्तं भावमारोप्य तत्र शाक्तं मतं प्रतिष्ठापितवन्तः। एवं तत्त्वमार्गेषु दृश्यन्ते बहवो विभिन्नमतवादाः। एष खलु महान् व्यतिकरस्तत्त्वमधिजिगमिषूणां मन्यते, भवति च झटिति स्खलनमतत्त्वेषु तत्त्वभ्रान्त्या सरलमतीनां जिज्ञासूनाम्। तत् किमत्र प्रतिविधेयम्?

एकस्मिन्नेव दर्शने एवं व्याख्याभेदस्तु मतिप्रकर्षं सूचयति बाहुल्येन भारतीयानामाचार्य्यवर्य्याणाम्, गीर्व्वाणवाणी कामधुगित्यपि च सूचयति, नात्र काचिद् विप्रतिपत्तिः। परमेष मतिप्रकर्षश्चेत् केषांचिन् मति-भ्रान्ति-करो भवेत्, तर्हि स न वा समाजस्य न वा सामाजिकानां न वा प्रवर्त्तयितुराचार्य्यस्य हिताय। अत एव सर्व्वक्षय-करेणानेन मतिप्रकर्षेण किम्, यो हि मतिप्रकर्षः सर्व्वत्राशुभमुत्पादयति।

पुरा भारतीयभूमिपतयो धर्म्मतत्त्वजिज्ञासवो लोकहितार्थं प्रायशो महतीं पण्डितगोष्ठीं समाहूय धर्म्मतत्त्वसमालोचनेनात्मनो प्रजानाञ्च महोपकृतिं साधयामासुः। तत्र वादमाश्रित्य पूर्व्वसूरिभिरीश्वरतत्त्वं निरूपितम्।

लोकेषु तन्मतं बाहुल्येन प्रकटितञ्चासीत्। एवं लोका धर्म्मतत्त्वं निर्व्वाणोपायं वा समधिगत्य तन्मार्गानुसरणे कृतप्रयत्ना आसन्।

परं "ते हि नो दिवसा गताः।" नेदानीं तादृशा भूमिपालका न वा तादृशो पण्डितगोष्ठी। विधर्म्मिणो यदृच्छाचारिणोऽधुना भूपालाः कथं वैदिकधर्म्मप्रवर्त्तने तद्रक्षणे वा यतेरन्। प्रजा अपि पाश्चात्य-मतानुवर्त्तिन्यो धर्म्मेषु उदासीना जायन्ते। कतिचित् पण्डिता अपि वैदिकं धर्म्मं विहाय प्रायशो लोककल्पितेषु मार्गेषु प्रवर्त्तन्ते, प्रवर्त्त-यन्ति चान्यानपि, व्याचक्षते च समाचरन्ति च बह्न्यवैदिकानि मतानि। तदस्यां महापदि सत्यमार्गनिरूपणं महत् कष्टं मन्ये।

पुरा अवैदिकं मतं प्रवर्त्तयन्तः प्रचारयन्तो वा जना राजदण्डेन दण्डिता भवेयुरित्येवं शास्त्रमाश्रित्य राजानः प्रजाः पालयामासुः। एवं राजभिः परिपालितेषु कथ देशेषु धर्म्मविप्लवा धर्म्मेषु कदर्थ-जातानि, साम्प्रदायिकेषु भण्डता धर्म्मध्वजिता च यदृच्छाचारिता च सामाजिकेषु वा जायेरन्।

यत्तु अदेयमपेयमग्राह्यं श्रुतिस्मृतिविगर्हितं मद्यं तद् यदि मुक्तिदायकं साधनासाधनं वा भवेत्, हन्त तर्हि क्व शास्त्राणां शास-यितृत्वं क्व च ब्राह्मणानां वा ब्राह्मण्यम्, अलं वा श्रौतेन स्मार्त्तेना-ध्ययनेनाध्यापनेन च, सर्व्वं निमज्जतु महाकालाम्बुधौ। चिरं स्मार्त्तेन मतेन दीक्षिता अपि पुरुषप्रवराः समाचरन्ति कलुषं कर्म्म एतदेवा-स्माकं समधिकक्लेशकरं सञ्जातम्।

केचन गौडीया वैष्णवनामधारिणो यथाविहितं धर्म्मध्वजा-मवलम्ब्य उद्धरन्ति पतितकुलम्, तेषामकपट कारुण्येन सारल्येन प्रेम्णा च वङ्गवासिनः सुप्लाविताः। कथयन्ति ते—

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा॥

सुष्ठु खलूक्तम्, साधुरेष उपायः। किन्तु हरेर्नामग्रहणमात्रेण सन्ध्यादिसर्व्वं कृत्यं त्यक्तव्यं चिरन्तनी वैदिकी क्रियापि हेया इत्येवं स्वेच्छाचारिता न न्याय्या।

नामसंकीर्त्तनं तच्छ्रवणादिकन्तु महोपकारसाधनं कलिकाल्मष-ग्रस्तानां जीवानां परं सदाचारोऽपि न परिहातव्योऽयमेवास्माक-माशयः।

अत्र श्रौतं स्मार्त्तञ्च मतानुसरणं सदाचारः। आधुनिकाचार्य्याणां मतञ्चेच्छ्रुतिस्मृत्योरविरोधि भवेत्तदा तदनुसरणे न कापि हानिः। परं यत्र तद्विपरीतमाधुनिकानां मतं तत्र तद् यत्नाद्धातव्यम्। यदाह भगवान् मनुः —

"वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥"

अपरञ्च—श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् हि मानवः।
इह शान्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम्॥

अपि च—योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्विजः।
स साधुभिर्वहिष्कार्य्यो नास्तिको वेदनिन्दकः॥

एवञ्च—वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्व्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम्॥

इत्यादिमानवीयवचनात् श्रुतिस्मृतिविरुद्धे मार्गे धर्म्मबुद्ध्या प्रवर्त्तमानानां ध्रुवं पतनमिति निश्चीयते। धर्म्मो हि—

यतोऽभ्युदयनिःश्रेयसयोः सिद्धिः स एव।

अत एव प्रमादाकुलितेषु लोकप्रणीतेषु न मतिर्नेतव्या। भ्रान्ता हि लोकबुद्धयः। तत आप्तवचनं सदैव अनुसरणीयम्। आप्तत्वेनैव श्रुति-स्मृत्योः प्रामाण्यम्। आप्तवचनानुसारिणो न प्रमादं प्राप्नुवन्ति, परन्तु ध्रुवं श्रेयोऽधिगच्छन्ति। यथाधुनिकविज्ञानविदां (सायन्सविदां) मतं नित्यं परिवर्त्तनशीलं दृश्यते। ते वदन्ति विज्ञानं क्रमशः परमुत्कर्षमधिगच्छति, नित्यमनुसन्धानादस्य अभिनवसिद्धान्त आविर्भवति, प्राचीनश्च सिद्धान्तः सङ्कोचमुपैति इति। हन्त मानवबुद्धि-प्रणोदितसिद्धान्तस्य कदापि न स्थिरता जायते, एष एवास्य दोषः।

यद्य स्थिरतया प्रतिभाति श्वस्तदेव भ्रान्तिपूर्णं भविष्यति। एवं क्रमेण ते नाधिगच्छन्ति स्थिरं सिद्धान्तम्। ऋषयस्त्वलौकिकशक्तिमन्तस्त्रिकाल-दर्शिनोऽध्यात्मविदश्चासन्। ज्ञानेन्द्रियया सर्व्वं सर्व्वदा ते पश्यन्ति स्म। आसन् केचन तेषु युक्तयोगिनः केचन वा युञ्जानाः। योगमहिम्ना सत्त्वात्मकतया च तानावरणात्मिका भ्रान्तिर्न समाश्रयितुं प्रबभूव। न चेत् कथमद्यापि तेषां मतानां चलत्वं नावलोक्यते। यस्य द्रव्यस्य यो गुणो या च शक्तिर्यश्च प्रभावो यद्वा वीर्य्यम् तत् सर्व्वमप्रतिहतधियो महर्षयः प्राक् सम्यक प्रोचुर्नाद्यापि तस्यापलापो दृश्यते। अध्यात्म-तत्त्वानामपि ऋषिप्रणीतानामेवं सर्व्वत्रास्खलितः सिद्धान्तः। गणितेष्वपि प्रत्यक्षीभवन्ति याथार्थ्यमृषिवाक्याणाम्। तत्र जडविज्ञानमधिकृत्याह भगवान् मनुः—

"अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति।

एते वृक्षादयोऽन्तःसंज्ञा भवन्ति, चित्सत्ता तु न व्यक्ता वृक्षादीना-मपि तु अव्यक्तचेतनास्ते सुखदुःखे समनुभवन्ति।

अस्माभिः सममेव जीवधर्म्मत्वमेतेषां विद्यत एव।

यथा वा मानवानां देहे पञ्चकोषावस्थितिः। एवमप्येतेषां, परन्तु स्थावरत्वमेषां वैशिष्ट्यम्। एवं सन्ति बहूनि जडविज्ञानानि श्रुतिस्मृति-पुराणादिषु। दिङ्मात्रं प्रदर्शितम्।

न खलु ते महर्षयो जडविज्ञानं नाधिचक्रुरिति वाच्यं, परन्तु कथं चैतन्यविज्ञानपारदर्शिनो जडेषु जडा इव अवतिष्ठेरन्। यद्विज्ञानेन सर्वमेतत् सुविज्ञातं भवति तदर्थमेव यतितव्यम्। यदाह श्रुतिः—

"उत तमादेशमप्राक्ष्यः। येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं भवति। कथं नु भगवः स आदेशो भवति। यथा सौम्यैकेन मृत्पिण्डेन ज्ञातेन सर्व्वं मृन्मयं सुविज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। एवं सौम्य स आदेशो भवति।" इत्यादि-श्रुतेर्जगत्कारणस्य तस्य परमात्मनो ज्ञानेन तद्व्यस्तं सर्व्वं सुविज्ञातं

भवति। यथा कारणरूपाया मृदो विज्ञानेन सर्व्वं कार्य्यरूपि घटादिकं ज्ञातं स्यादेवं जगत्कारणस्य ज्ञानेन तत्-कार्य्य-जातं सर्व्वं सुविदितं भवतीति भावः। परन्तु महर्षयः प्राक् जडतत्त्वं सर्व्वमनादृत्य जडाजडयोर्मूलं सच्चिदानन्दरूपिणं तमेव भान्तं सर्वज्ञं शरणं ययुः।

अत एव सुष्ठूक्तं न लोकप्रणीतेषु मार्गेषु मतिर्नेतव्या, अप्रतिहतेष्वार्षेषु सिद्धान्तेषु चलतां ध्रुवं श्रेय इति। यतः परोक्षेष्वाप्तवचनमेव बलवत्तरम्।

न च तर्हि—

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्व्वशः॥"

इत्यादिभगवद्वाक्यस्य का गतिरिति वाच्यम्, तत्र हि विभिन्नार्थेषु मतेषु अन्यतरत् समाश्रयञ्छ्रेयोऽधिगच्छति न तद्विपरीतं समाश्रित्य यदृच्छाचारेण वा। अन्यथा नास्तिकानामपि मुक्तिः प्रसज्येत। तत्रापि भगवता श्रीकृष्णेन—

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्॥

इत्यादिवचनादुपासनाया वैशिष्ट्यं प्रदर्शितम्। एवं गतिवैशिष्ट्यं लोककल्पितं बहुसाम्प्रदायिकत्वञ्चालोक्य परोक्षेषु शास्त्रमवश्यमाश्रयणीयम्।

ननु लुप्तानि खलु बहूनि वेदशास्त्राणि—अतो यन्मतं साम्प्रतमवैदिकमिव प्रतिभाति नैतद्वास्तवम्, लुप्तशास्त्राण्येव तस्य मूलमिति केचन ब्रुवन्ति। एवं सति यानि कान्यपि स्वकल्पितानि मतानि वैदिकानि भवेयुः पुनस्तानि समाचरन्तोलोका उत्सीदेयुरेवं महाननर्थः प्रसज्येत, बाहुल्येन यदृच्छाचारोऽपि जायेत सामाजिकेषु। अतः सर्व्वत्र लुप्तशास्त्राणां शरणता न प्रशस्ता। यत्तु मतं चिरप्रसिद्धमपि नाधुना वेदे दृश्यते, किन्तु भूरिशः स्मृत्यादौ शास्त्रे दृश्यते तत्र प्रत्यक्षश्रुतेरभावात्

श्रुतिरनुमातव्या न तु येषां केषाञ्चिन्मतानां लोककल्पितानामपि रक्षणाय श्रुतिरनुमेया ।

भवतु लोकप्रणीतानि मतान्यवैदिकानि न तत्र मतिर्नेतव्या परं महर्षीणामपि सिद्धान्तानां नैकमत्यमिति प्रागुक्तं तदत्र किं करणीयम् ?

अत्र कथ्यते—पुरा स्वाध्यायाध्ययनेन लोका निरता आसन् परं तस्यातिदुर्बोधतया लोकहितार्थं मन्वादयो नेतारः संहिताशास्त्राणि, लोकहितानि बहूनि शास्त्राणि च अपरे महर्षयः प्रणिन्युः । द्वैपायनोऽपि स्वल्पबुद्धीनां लोकानामनायासेन सर्व्वतत्त्वावगत्यर्थं वेदानुन्मथ्य पुराणानि प्रणयन् परं हितं साधयामास । अत एव श्रुतिराह "पुराणं पञ्चमो वेद" इति । तथा—तस्य निःश्वसितमेव ऋग्वेद-यजुर्व्वेद-सामवेदाथर्व्ववेदा इतिहासः पुराणमिति । तेष्वपि पुराणेषु शैव-वैष्णव-शाक्तादिभेदेनापाततोऽनैक्यं प्रतिभासते । अस्य कारणन्तु सृष्टिवैचित्र्यं सृष्टिवैचित्र्यान्मानवानां रुचिवैचित्र्यं तदेव शास्त्रानैक्ये हेतुः । यदुक्तं "भिन्नरुचिर्हि लोकः" । अत एव शिवमहिम्नःस्तोत्रे पुष्पदन्तेनोक्तं "रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।" साधकानां हितार्थाय ब्रह्मणो रूपकल्पनमिदमपि रुचिवैचित्र्यं सूचयति उपासकानाम् । दृश्यते हि लोकेषु च, केचन मांसप्रियाः केचन अम्लसात्म्या अपरे मधुरप्रियाः केचन वा तिक्तेनाप्यायन्ते केभ्यश्चिद्वा कटुकं स्वदतेतराम् । एवं सात्त्विक-राजसिक-तामसिक-भेदेनापि रुचिर्भिद्यते । तेन रुचिभेदादुपासनानामपि भेदः कल्पनीयः । एवं दर्शनशास्त्रेषु दृश्यते महदनैक्यम्, वस्तुतस्तु न यथार्थतोऽनैक्यमस्ति दर्शनकृन्मतानाम्, अनैक्याभासोऽयम्, यतो नानधिगतन्यायस्य बुद्धिः स्फुरति सम्यक् शास्त्रान्तरेषु न वा न्यायशास्त्रादृते सदसद्विचारणा जायते, न हि सदसद्विवेकरहितः शास्त्रमधिकर्त्तुमुत्सहते । अत एव बुद्धेः परां काष्ठामधिचिकीर्षद्भिस्तत्त्वान्वेषिभिर्न्यायोऽध्येतव्यः । यत "अधीतव्याकरणकाव्यकोषोऽनधिगतन्यायशास्त्रो बालः" इत्यत्र बालत्वापनोदनार्थं शास्त्रस्योपयोगित्वमस्त्येव ।

न्यायपरिमार्जितधियः सर्व्वशास्त्रेषु स्वेच्छाचारिणो भवन्ति। न्यायविद्भिर्योगः समाश्रयणीयः। योगे समधिगते सांख्यं समायत्तं स्यात् ततः परं प्रान्तभूमिर्वेदान्तः। एभिरेव दर्शनैश्चेतसि परिशुद्धे द्राग्वेदान्तसिद्धान्तः परिस्फुरति। तत्रादिभूमिर्मीमांसादर्शनं ( जैमिनेः ) गौतमीयं सूत्रं काणादतन्त्रञ्च द्वितीयभूमिस्तृतीयभूमिः सांख्ययोगौ तुरीयभूमिर्वेदान्तः। यथा—"शान्तं शिवमद्वैतं तुरीयं मन्यन्ते" इत्यादिश्रुतेः।

एवमरुन्धतीदर्शनन्यायेन मुक्तिरिति मुक्तिविदां परामर्शः। अत एव सर्व्वान्तर्यामिना परमेश्वरेण रुचीनामधिकारिणाञ्च सहजभेदं प्रकुर्व्वता परमर्षीणामन्तः प्रविश्यैवं मार्गभेदः प्रदर्शितः। नात्रास्माभिर्विचलितव्यमिति।

न खल्वेकस्मिन्नेव जन्मनि सर्व्वेषां तुरीयभूमिप्राप्तिः सम्भवति। यथा—"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" इति गीता। नवा सर्व्वे तुरीयभूमिप्राप्तौ साग्रहा भवन्ति। यथा च—

मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः॥

येषां तु नित्यानित्यवस्तु-विवेकादि-साधनं विद्यते स एवास्य तुरीयभूमिलाभेऽधिकारी।

वेदादिसम्मताश्चत्वार आश्रमाः सुप्रसिद्धाः। तेषु ये च धर्म्मा निरूपितास्ते सर्व्वेषामेव ब्राह्मणानाम् एकरूपास्तत्र नास्ति काचित् साम्प्रदायिकता। नवा नैयायिक-चतुर्थाश्रमिणामेवं विधेयम्, सांख्यविदां चतुर्थाश्रमिणामेवं विधेयम् इति प्रकारभेदः। सर्व्वैर्यतिभिर्ब्रह्मावगत्यर्थं यतितव्यमिति धर्म्मशास्त्राणां निष्कर्षः। तद्यथा—विष्णुः—

आध्यात्मिकं ब्रह्म जपन् प्राणायामांस्तथा चरन्।
विमुक्तः सर्व्वसङ्गेभ्यो योगी नित्यं चरेन्महीम्॥

आत्मनिष्ठः स्वयं युक्तस्त्यक्तसर्व्वपरिग्रहः।
चतुर्थोऽयं महानेषां ध्यान-भिक्षुरुदाहृतः॥

विष्णुस्मृतौ चतुर्थाध्यायः।

शङ्खोऽपि यतीनामपरं कृत्यं निरूप्य मुक्त्यर्थं ब्रह्मावगतिमपेक्षते। यथा—

अणोरणीयान् महतो महीयान् आत्मास्य जन्तोर्निहितो गुहायाम्।
तेजोमयं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः॥

यं तु ज्ञात्वा विमुच्यन्ते ये जनाः साधुवृत्तयः।
तदिदं परमं गुह्यमेतदक्षरमुत्तमम्॥
अशब्दरसमस्पर्शमरूपं गन्धवर्ज्जितम्।
निर्दुःखमसुखं शुद्धं तद्विष्णोः परमं पदम्॥
अजं निरञ्जनं शान्तमव्यक्तं ध्रुवमक्षरम्।
अनादिनिधनं ब्रह्म तद्विष्णोः परमं पदम्॥

शङ्खस्मृतौ ७मः अध्यायः।

आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मुमुक्षुभिर्यतिभिः।

मनुनापि भगवता प्रोक्तमेवमेव। यथा—

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम्।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम्॥
अनेन विधिना सर्व्वांस्त्यक्त्वा सङ्गाञ्छनैः शनैः।
सर्व्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते॥

अपिच—ध्यानिकं सर्व्वमेवैतत् तदेतदभिशब्दितम्।
न ह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुते॥
अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च।
आध्यात्मिकञ्च सततं वेदान्ताभिहितञ्च यत्॥

इदं शरणमज्ञानामिदमेव विजानताम् ।

इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥

अनेन क्रमयोगेण परिव्रजति यो द्विजः ।

स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ॥

पुनश्च—दशलक्षणकं धर्म्ममनुतिष्ठन् समाहितः ।

वेदान्तं विधिवच्छ्रुत्वा सन्न्यसेदनृणो द्विजः ॥

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां षष्ठाध्यायेऽन्वेष्टव्याः यतिधर्म्मनिरूपणप्रसङ्गे मनुना वेदान्तानुसरणेन आत्मान्वेष्टव्य इ स्पष्टमुक्तम् ।

"नावेदविद् मनुते तं महान्तम्" इत्यादिश्रुतेश्च, तुर्याश्रमिण वेदान्तानुसरणं विधेयमित्यखिलधर्म्मशास्त्राणामैकमत्यम् ।

भोगैश्वर्य्यप्रसक्तचेतसां मनुजानां झटिति वेदान्ततत्त्वोपलब्धे रसम्भवादत्रापि क्रमः कल्पनीयः । क्रमस्तु चतसृणां भूमीनां व्याख्याने प्राक् प्रदर्शितः । अपिच पूर्व्वाचार्य्यास्तु तदवगत्यै अधिकारिणमपेक्षन्ते न खलु सर्व्वे सर्व्वमधिकर्त्तुं समर्थास्तदर्थमध्यात्मशास्त्राणामयमादेशः यथा—

वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् ।

नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।

तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

। श्वेताश्वतरोपनिषत् । अपिच शान्त-दान्तोपरत-तितिक्षुसमाहिता-नामेवाधिकारोऽत्र । यथाह श्रुतिः—

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।

येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तं तत्त्वतो ब्रह्मविद्याम् ॥

अत एवोक्तं साधनचतुष्टयसम्पन्नः प्रमाता एवास्या अध्यात्मविद्याया अधिकारी नान्य इति ।

तद् यथा—अथातो ब्रह्मजिज्ञासा इत्यत्र शङ्कराचार्य्यपादैरुक्तम् नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागः शमदमादिसम्पन्मुमुक्षुत्वञ्च। यस्यैतत् साधनचतुष्टयं विद्यते तस्यैवाधिकृतिः परासु विद्यासु। अत्र कश्चिदाह कलौ न कमण्डलुविधारणमिति, परन्तु "यदहरेव विरजेत्तदहरेव प्रव्रजेद् गृहाद्वा वनाद्वा" इत्याद्युक्त्या सर्व्वस्मिन्नेव काले प्रव्रज्याया विधानसामर्थ्यात् तत् समीचीनं न वेति सुधीभिर्विचार्य्यम्।

न मया पक्षपातिनैवमुक्तं निरपेक्षाणां सर्व्वेषामपि दार्शनिकानामेतन्मतमनुमोदितव्यम्। का वा हानिरस्माकं ब्राह्मणानां वेदगौरवकथने। वेद एव विजयतामित्यस्माकमाशयः। अथवा अलङ्कृतिरियम् वेदपक्षपातिता विप्राणामस्माकम्। अलमतिविस्तरेण।

---

# सर्वप्रत्ययमाला

[ शङ्कराय्र्यविरचिता ]

पूर्वानुवृत्ता

## अष्टमोऽध्यायः ॥ ८ ॥

स्त्रीप्रत्ययान्तशब्दानां रूपमर्थं च वच्म्यहम्।
स्त्रीवाचकाः स्त्रियामेव शाला-मालादयोऽपि ये ॥ १ ॥
टाबन्ताः स्युः स्त्रियां नित्यम् एडका चटका तथा।
जाया-भार्याऽम्बिका-वृद्धा-स्थविरा-मूषिकादयः ॥ २ ॥
प्रथमे बयसि स्त्रीणां भवेन्ङीप्प्रत्ययो यथा।
कुमारी तरुणी गौरी सुन्दरीत्येवमादयः ॥ ३ ॥
नकारान्ता यथा शब्दा दन्तिनी वेदवादिनी। *
भवती गोमती यान्ती ददती दधती त्विति ॥ ४ ॥
वन्नन्तात् स्यात् प्रातिपदिकाद् धीवरी पीवरी तथा।
इत्वरी गत्वरी स्वर्गं द्रुश्वरी पारद्रुश्वरी ॥ ५ ॥

---

* अत्र किञ्चित् पतितमिति प्रतिभाति।

पत्नी स्याद्यज्ञसंयोगे ङीषन्तास्तेऽपि केचन ।
शर्व-रुद्र-मृडाचार्य-भवेन्द्र-वरुणेषु च ॥ ६ ॥
ङीष्प्रत्ययः स्यात् पुंयोगे भवत्यत्राऽऽनुगागमः ।
मृडानी वरुणान्याचार्यानीन्द्राणी भवान्यपि ॥ ७ ॥
हिमारण्यमहत्त्वे च हिमानी हिमसंहतिः ।
तथैव स्यादरण्यानी भवत्यत्राऽऽनुगागमः ॥ ८ ॥
ऊङन्तो भद्रबाहूः स्यान्मनुष्यार्थे विवक्षिते ।
ऊरूत्तरपदादूङ् स्यादौपम्येऽर्थे विवक्षिते ॥ ९ ॥
तथैव नागनासोरूरेवमाद्यवगम्यताम् ।
ङीनन्ताः शार्ङ्गरव्याद्यास्तिनन्तो युवतिस्त्विति ॥ १० ॥

इति श्रीशङ्करार्यविरचितायां सर्वप्रत्ययमालायां स्त्रीप्रत्ययान्तकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

अष्टादश तिङस्तत्र परस्मैपदसंज्ञकाः ।
पूर्वं नव नवानि स्युरात्मनेपदसंज्ञकाः ॥ १ ॥
त्वं युवां यूयमित्यर्थे मध्यमस्तैर्युतो न वा ।
अहमावां वयं चेति त्रयस्यार्थे तथोत्तमः ॥ २ ॥
अन्यत्र प्रथमो ज्ञेयो युष्मदस्मद्विवर्जिते ।
लकारार्थाभिधायिन्यो धातुस्थास्तिङ्विभक्तयः ।
कर्ता कर्म च भावश्च लकारार्थास्त्रयो मताः ॥ ३ ॥
कर्तर्येव भवेदत्र परस्मैपदसंज्ञकाः ।
कर्तारं कर्म भावं वा त्रयं वक्त्यात्मनेपदम् ॥ ४ ॥
क्रियां कुर्वन् भवेत् कर्ता कुर्वन्तं कारयन्नपि ।
भावः क्रिया स्याद्धात्वर्थः कर्म स्यात् क्रियया कृतम् ॥ ५ ॥

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| September, 1932. | १८५४ शकीये भाद्रे १५श-वर्षस्य ५म-संख्या | Vol. XV. No 5. |
|---|---|---|

## संस्कृताभ्यासशैली

[ निबन्धकः—श्रीविधुशेखर-शर्म्मशास्त्री ]

नात्र स्तोकोऽप्यवसरः संशयस्य यत् स्मरणपथमप्यतिक्रान्तात् कालात् प्रवर्तते भारते संस्कृतम्। सन्ति च भूयांसस्तद्विद्वांसो येषां न विद्यन्ते प्रतिस्पर्धिनः। तथापि मन्ये मनाक् संस्कारमर्हति नः पाठशैली। तत्र दिङ्मात्रमुदाह्रियते। पृच्छ्यतां कश्चिदतिनिपुणोऽपि वैयाकरणो दृशेर्धातोर्वर्तमाने प्रथमपुरुषस्यैकवचने रूपम्।

पश्यतीति स तत्क्षणमेव प्रतिवक्ष्यति। अपि नामेदं युक्तम्। कथं नु खलु दृशेर्दकारः पकारः स्यात्। नैतज्ज्ञातु सहस्रमपि नैरुक्तानां प्रतिपादयितुमीष्टे। इदं तु तत्त्वं यत् पश्यतीति न दृशेर्धातो रूपम्, अपि तु दर्शनार्थकस्यैव स्पशेः, यस्मात् स्पश इति स्पष्टमिति पस्पशेति च त्रीणि रूपाणि सुप्रतीतानि लौकिके संस्कृते। पस्पशे पस्पशान इत्यादीनि च वैदिके। सकारलोपो विस्तरभिया नेह व्याख्यायते। दृश्यतां तावत् स्पर्धः पस्पर्धे इति रूपम्।

नाम चन्द्रो हिमांशुः। मीयते हि तेन काल इति। प्रत्यक्षाभ्यामुदयास्त-मयनाभ्यां चन्द्रस्य सुकरो निर्णयः कालस्येति चन्द्रो मा इति प्राचीनैरुक्तम्। एवं चादौ चन्द्रमा उज्ज्वलश्चन्द्र इत्येवासीदर्थः। पश्चात्तु केवलं चन्द्र इत्येव। माश्चन्द्रः, तत्सम्बन्धाच् चैत्रादिर्मासो मासः।

वैयाकरणाः पठन्ति इष्ठादिषु प्रत्ययेषु श्रेष्ठः प्रशस्यात्, ज्येष्ठः प्रश-स्याद् वृद्धाच्च, कनिष्ठो यूनोऽल्पाच्च, स्थविष्ठः स्थूलात्, दविष्ठो दूरात्, क्षोदिष्ठः क्षुद्रात्, प्रेष्ठः प्रियात्, स्थेष्ठः स्थिरात्। एवमन्यदपि। सत्यप्यसाम्ये कथं नु खलु प्रशस्य-वृद्ध-युवादयः श्र-ज्य-कनाद्याकारान् प्राप्नुयुः। कथं वा स्थूल-दूर-क्षुद्र-प्रियादय-स्तांस्तानाकारान्। वस्तु-तस्तु इष्ठादयो न तद्धिताः प्रत्ययाः, अपि तु कृत एव। न चैते प्रशस्या-दिभ्यः प्रातिपदिकेभ्यः प्रयुज्यन्ते, अपि तु श्रि-प्रभृतिभ्यो धातुभ्य एव। तथाहि श्रेष्ठ इति श्रयतेः, ज्येष्ठ इति जिनातेः ( न ज्या ) कनिष्ठ इति कनेः ( अस्मादेव धातोः कन्येति ), स्थविष्ठः गत्यर्थस्य स्थू-धातोः ( अस्मादेव स्थविरादयः ), दविष्ठो द्रवतेः ( अस्मादेव द्रूनो दूरम् ), क्षोदिष्ठः क्षुदेः, प्रेष्ठः प्रीणातेर्वा प्रीयतेर्वा स्थेष्ठश्च तिष्ठतेः।

उच्च-नीचं प्रसिद्धम्। तत्राहुर्नो नैरुक्ताः। उच्चम् "उच्चिनोतेः ( 'अन्येभ्योऽपि दृश्यत' इति ड-प्रत्ययः ) उच्चैस्त्वमस्त्यत्र वा ( 'अर्श आदिभ्योऽच्' )। नीचं पुनरेवं ते व्युत्पादयन्ति—"निकृष्टाम् ईं लक्ष्मीं चिनोति।" किमत्रोच्यताम्!

अस्त्यवचमिति पदम्, यथा उच्चावच-शब्दे। अवचं नीचमित्य-नर्थान्तरम्। का पुनर्निरुक्तिरवचशब्दस्य। अवाग् अधो वा अञ्चतीति। अत्र अञ्चेः (अचेः) वा अकारलोपः। अत्र कारणमुपरिष्टान् मनाग् वक्ष्यते। अत्र तावन्मन्यतां यदीदृशेषु स्थानेष्वकारो लुप्यत इति। अथ यथा अव-पूर्वकाद् अञ्चतेरचतेर्वा अवचम्, ( स्मर्यताम् अवाक् अवाची दिक् ) एवं उत्पूर्वकात् तस्मादेव धातोः प्रथमं उदचम् ( स्मर्यताम्—उदच्, उदक् उदीची दिक् )। अथ पूर्ववद् धातोरकारलोपाद् उच्चम् इति। नि-पूर्वका-

दञ्चतेर्न्यक् प्रसिद्धम्। अ-प्रत्यये तु अवचमिव नीचम्। अयमत्र क्रमः। नि-अचम् इति स्थिते पूर्ववद् धातोरकारो लुप्यते, तेन निचम् इति जायते। इकारस्य दीर्घत्वं त्वित्थम्। नि-अचम् इति प्रथमावस्थायां तिस्रो मात्राः। अचस्याद्याकारलोपे तु तन्मात्रापि सुतरां लुप्यते। अत इकारस्य दीर्घीकरणेन लुप्तापि सा मात्रा केनाप्युपायेन रक्ष्यते (Compensatory lengthening)। एवं नीचमिति सिध्यति। उच्चशब्दे तु संयोगपूर्वो गुरुरिति उकारस्यात्र गुरुत्वेन तस्य लुप्तस्य अकारस्य सा खल्वेका मात्रा रक्ष्यत एवेति नास्योकारस्य दीर्घीकरणम्। उपमीयताम्—द्वीपम् (द्वि-अपम्), प्रतीपम् (प्रति-अपम्), अनूपम् (अनु-अपम्), प्रतीचा (प्रति-अचा)। एवमन्यत्रापि।

अस्ति, स्तः, सन्ति। अस्तेर्धातोरेतानि पदानि। अत्रान्तिमयोः पदयोरस्तेरलोपो दृश्यते, न त्वादिमस्य। अयं हेतुर्यदुदात्तः स्वरो बलीयाननुदात्तात्। बलीयानेव वर्तते प्रभवति च सर्वत्र। दुर्बलस्तु तत्समीपावस्थितः पराभूयते, पराभूतश्चाभिभूयते। प्रकृते अस्तीत्यत्र अकार उदात्तः। अतो बलीयान् परस्मात् स्वराद् इकारात्। स्त इत्यत्र तु प्रत्ययस्वरः अकार उदात्तः। धातुस्वरः अस्तेरकारस्तु अनुदात्त इति दुर्बलः। दौर्बल्याच्च लुप्यते। धातोः सकारः पुनस्तकार इव प्रत्ययस्वरमेवाश्रितः। न हि स्वरं विना गतिरस्ति व्यञ्जनस्य। प्रायेण ह्येकस्मिन् पद एक एव स्वर उदात्तो भवतीति स्मर्तव्यम्। सन्ति इत्यत्रापि अन्तीति प्रत्ययस्याकार उदात्तः। अतः स एव प्रबलः। दुर्बलस्तु धातुस्वरोऽकाररीत्येव स्थातुमशक्तो नश्यति। एवं सन्तीति पदं सिध्यति। एवमेव एतस्यैवास्तेर्धातोः शतृ-प्रत्यये सदिति पदम्। प्रत्ययस्वरस्याकारस्य बलीयस्त्वाद् दुर्बलो धातुस्वरोऽकारेऽसमर्थोऽवस्थातुम्।

हन्तीत्यत्र धातुस्वर उदात्तः प्रबलः; अत एवाविकलः। घ्नन्तीत्यत्र तु अन्तीति प्रत्ययस्याकार एवोदात्तः। ततश्च प्रबलः। धातुस्वरोऽकारस्तु दुर्बल इति पूर्ववल्लुप्यते। ततो हकार आत्मन आदिमेन रूपेण

घकारेण प्रकाशमानो नकारेण युज्यते। हन्तेर्धातोर्हकारो मूलतो यद् घकार आसीत् ( घन्-हन् ) तदस्य जघानेत्यादिपदैः सुस्पष्टं प्रतीयेत।

यथा घ्नन्तीत्यत्र स्वरहेतुको हनेरकारलोपः, एवं जघ्नतुः, जग्मतुरित्यादिष्वपि। अत्रापि अतुस्-प्रत्ययस्याकार उदात्तः। एवमेव तृतीयैकवचने राजन्-आ, नामन्-आ इत्यादिभ्यो राज्ञा नाम्नेत्यादीनि पदानि। अत्राद्य आकार उदात्त उपमीयताम् मन्मथः ( मनमथः ), कुमुद्वती ( कुमुदवती ), शाद्वलं ( शादवलम् ), नड्वलं ( नडवलम् ) इति।

चितेर्धातोः चेततीति, तुदेस्तु तुदतीति। आद्ये गुणः, अन्त्ये तु तदभावः। किमत्र कारणम्? इदमत्र कारणं यद् भ्वादिगणे धातुस्वर उदात्तः, तुदादौ तु विकरणस्वर इति।

वच इति, उक्तम् इति चोभयमपि वचेर्धातोः पदम्। आद्ये वकारोऽविकल एव, अन्त्ये तु तस्य सम्प्रसारणम्—वकार उकारत्वमापन्नः। अत्रापि स एव हेतुर्यद् आद्ये धातुस्वरः, अन्त्ये तु प्रत्ययस्वर उदात्त इति तस्य बलीयस्त्वाद् दुर्बलो धातुस्वरोऽवस्थान्तरमापन्नः।

एवं देवी-शब्दस्य प्रथमैकवचने देवी। ईकारान्तं पदम्। अस्यान्त्यः स्वर उदात्तः। सम्बुद्धौ तु समानेऽपि प्रथमान्तत्वे देवि। इकारान्तं पदम्। अत्र प्रथमः स्वर उदात्तः। अत एव प्रबलः। प्रबलेन च तेनाभिभूयमानो द्वितीयः स्वरः प्राग् दीर्घोऽपि पश्चाद् ह्रस्वः संवृत्तः।

कृतमतिविस्तरेण। मन्ये स्पष्टमेतावतैव यत् तत्त्वेनावगमाय संस्कृतस्य कीदृशं व्याकरणमपेक्ष्यते। न पुनरेतत् कृतमद्यापि केनचित्।

किञ्च। साम्प्रतं किल संस्कृतपाठशालासु प्राकृतमत्यन्तमुपेक्ष्यते। न त्वेतत् कथमपि युज्यते। माधुर्ये तावत्प्राकृतं संस्कृतादतितरामुत्कृष्यते। सचेतसामनुभव एवात्र परमं प्रमाणम्। राजशेखर आह—संस्कृतबन्धः परुषः। प्राकृतबन्धस्तु सुकुमारः। तावच्चैनयोरन्तरं यावत्पुरुषमहिलयोः। वाक्पतिरभिप्रैति—नवमर्थदर्शनं, सन्निवेशशिशिरा बन्धर्धय इत्येदखिलम् आ सृष्टिकालादविरलं प्राकृत एव। आस्तामेतद् यच्च

याद्वक् च। नैतदर्थं प्राकृतमध्येयमित्युच्यतेऽद्य। नापि वा जैनबौद्ध-शास्त्रतत्त्वावबोधार्थमध्येयं तदितीदानीं वक्तुमिष्यते। अस्त्येवैतत्सर्व-मित्यत्र न स्तोकोऽपि संशयः। अस्ति त्वपरं किमपि प्रयोजनं येन नार्हति प्राकृतमुपेक्षाम्। तच्चैतद् यदन्तरेण प्राकृतं बहुषु स्थानेषु संस्कृतं न शक्यतेऽवगन्तुं याथातथ्येन। स्तोकं किञ्चित् प्रदर्श्यते—

उदाहृतोऽधस्तात् पश्च-शब्दः। इहापि प्रथमं स एव चिन्त्यते। पुच्छो लाङ्गूलमिति सर्वे विदन्ति। छन्दस्यपि प्रसिद्धोऽयं शब्दः। का पुनरस्य निरुक्तिः। वैयाकुलीव दृश्यतेऽत्र नैरुक्तानाम्। तत्त्वन्त्विदं यत् प्रागुक्तात् पश्च-शब्दादेवैष उत्पन्नः प्राकृतप्रभावात्। श्च-कारस्य च्छ-कारत्व-प्रतिपत्तेः। यथा संस्कृते आश्चर्यं प्राकृते अच्छरियं, यथा वा संस्कृते पश्चिमं, प्राकृते पच्छिमं। "पुच्छः पश्चात्प्रदेशः स्याल् लाङ्गूले पुच्छ-मिष्यते" इति कोशः। स्पष्टमितो ज्ञायते यत् तथोत्पन्नः पुच्छः प्रथमतः पश्चात्प्रदेशे ततः क्रमेण पश्चात्प्रदेशस्थे लाङ्गूलेऽपि प्रवृत्त इति। स्यादेतत्। पश्चे पकारोत्तरमकारः पुच्छे तु पकारोत्तरमुकारः। किमेष भेदः। कथ-मेतत् सङ्गच्छतामिति। इत्थम्। पकार ओष्ठ्यः। अकारस्तु कण्ठ्यो-ऽपि तत्स्थितस्तेनाभिभूयमान ओष्ठ्यत्वमापद्यते। तादृशश्चोकारो जायते। यथा समानोऽपि ऋवर्णो मुमूर्षा, पूर्णमित्यादिषु ओष्ठ्यस्य वर्णस्य सन्नि-कर्षादुवर्णः, चिकीर्षेत्यादिषु च तालव्यवर्णयोगादिवर्णो जायते।

अस्ति संस्कृते पिच्छं शिखण्डार्थे। न त्वेतत् संस्कृतम् अपि तु प्राकृतम्। पक्षाद् ह्येतदुत्पन्नम्। क्षकारः प्राकृते बहुधा परिवर्तते। भवत्येष कचित् ख (क्ख)-कारः, क्वचिच् छ (च्छ)-कारः, क्वचिद्वा झ (ज्झ)-कारः। यथा सं० दक्षः, प्रा० दक्खो; सं० कुक्षिः, प्रा० कुच्छि; सं० क्षायं, प्रा० झायं। प्रकृते पक्षस्य द्वे रूपे प्राकृते। प्रथमं पच्छ इति द्वितीयं तु पक्ख इति। ततः क्रमेण प्रथमतः पिच्छम्। छकारस्य तालव्यतया आद्यस्य अकारस्येकारत्वम्। द्वितीयस्मात्तु पुङ्ख (पुङ्खो वा)। पकारस्य ओष्ठ्यत्वात् तत्स्थितस्याकारस्याप्योष्ठ्यत्वम्। ततश्च स

उकारो जायते। क्वचित्पूर्वेण परं, क्वचिद्वा परेण पूर्वमभिभूयते इति तथा परिवृत्तिः स्वरस्य। अयं पुङ्खशब्दः सायकमूलबद्धे विहङ्गपक्षे प्रसिद्धः। स्मर्यताम्—

सक्ताङ्गुलिः सायकपुङ्ख एव
चित्रार्पितारम्भ इवावतस्थे ॥

इति कालिदासः (रघु, २-३१)। चिन्त्यतां चेदानीमर्थः पुङ्खानुपुङ्खशब्दस्य। प्रयुक्तोऽयं श्रीमद्भागवते। प्रायः संयुक्तवर्णयोरेकस्य लोपे, क्वचिदलोप एव वा, पूर्वः स्वरः सानुनासिकः सानुस्वारो वा भवतीत्यस्ति काचित् प्रकृतिः प्राकृतेऽपि, संस्कृतेऽपि, अन्यत्रापि च। यथा कर्तकात् कण्टकम्। प्रथमं तावदत्र कर्तकं प्राकृते कट्टकं। तत एकस्य टकारस्य लोपे पूर्वनियमेन कण्टकम्। तदेतत् प्राकृतमपि प्रयुज्यते संस्कृते। एवं पूर्वत्रापि पक्षः पक्खो भवति। ततः ककारलोपेन पुङ्खम्। एवमेव लाञ्छनं लक्षणात्। सं० लक्षणं, प्रा० लच्छणं, च-लोपे लाञ्छनं। एवमेव गञ्जनं गर्जनात्। गञ्जिर्नाम नापरो धातुः। गर्जिरेव सः। अतो गञ्जनमिदं प्राकृतमपि प्रयुज्यते संस्कृते। दृश्यतां चान्यदपि। ऋक्षशब्दो भल्लूकार्थः प्रसिद्धः। अस्ति च तदर्थक एव अच्छोऽपि। अयमच्छशब्दः पूर्ववदेव ऋक्षशब्दस्यैव प्राकृतं रूपम्। एवं नदीकच्छादिषु कच्छशब्दः कक्षशब्दस्यैव प्राकृतं रूपम्।

न कश्चित् सन्दिग्धे यद् विकृतमेव विकटम्। नान्यत् किञ्चिद् विकटं नाम। तच्च मूर्धन्यस्य ऋकारस्य संसर्गेण तकारस्य टकारत्वप्राप्तेः। यथा संस्कृते कैवर्त्तः प्राकृते केवट्टो। अत्र मूर्धन्यस्य रकारस्य संसर्गात् तकारष्टकारो भूतः। एवं च प्राकृतमपि विकटं निगूढमिव छन्द आरभ्य प्रयुज्यते संस्कृते। एतस्य तु तत्त्वस्यानवबोधाद् विकट-प्रकटादिपदसिद्धये कटतिर्नाम कश्चिन्नूतन एव धातुश्चिन्तितः। एवं भटो वस्तुतो भृत एव उद्भटश्च उद्भृतः। स्पष्टैव चेह प्रकृतिः प्राकृतस्य। सत्यप्येवं तदनवगमात् तत्सिद्धये भटधातु-

रुद्भावितः। पततिरेव प्राकृतशक्त्या पटतिर्भवति। अत उत्पातयति उत्पाटयति चेत्येते अभिन्ने। तत्र पटतिः पततेर्वस्तुतः पृथगिति व्यर्थेयं कल्पना। पिनष्टेः पिष्टम्। पिष्टं प्राकृते पिट्ठं। ततः क्रमेण पीडमिति। तदेव नामधातुतां प्राप्तं पीडयतीत्यादिना रूपेण प्रकाशते। अलमतिबहुना। एकमेवेदमन्यत् किञ्चिच्चिन्त्यते। सुविदितः सर्वेषां मनोरथशब्दः। का पुनरस्य निरुक्तिः। शाब्दिकास्तावन्न एवमाहुः "मन एव रथोऽत्र। मनसो रथ इव वा।" शब्द एवेह केवलं चिन्तितस्तत्रभवद्भिः सर्वथा समुत्सृज्यार्थम्। दुरबोधोऽभिप्रायोऽस्य निर्वचनस्य। तत्त्वं त्विदं यन्मूलतोऽयं शब्दो मनोऽर्थः। स एव रकारोत्तरं स्वरयोगान्मनोरथ इति। चिन्त्यतामत्र वैदिकी लौकिकी च स्वरभक्तिः। प्राकृते भाषायां च दरिसणादि दरशनादि च पदम्। गृहार्थकं गेहं प्रसिद्धं छन्दस्यपि। न त्वेतत् संस्कृतम्, अपि तु प्राकृतम्। * ग्रेहं गेहम् इति ह्यस्योत्पत्तिक्रमः। ऋकारो हि क्वचिद् रेकारत्वेनोच्चार्यते। शिक्षयन्ति च यजुर्वेदीया कृष्णोऽसीति क्रेष्णोऽसीति पाठ्यमिति। प्राकृते पदादौ संयुक्तयोर्वर्णयोरन्यतरलोपः प्रसिद्धः।

दत्तमित्यभ्यस्ताद्ददातेः त-प्रत्यये रूपम्। तस्यैव आ-पूर्वकस्य आदत्तम् आत्तं चेति। अत्र द्वितीयस्य साधनाय शाब्दिकाः पठन्ति यत् स्वरान्तादुपसर्गाद् दा इत्यस्य धातोः तकारादेशो भवतीति ('अच्च उपसर्गात् तः' पा० ३-४-४३)। प्रक्रियेयं काचिच्छब्दमात्रनिष्पत्तये। न त्वियं तत्त्वमावेदयति। तत्पुनरेतत्। प्राकृतेऽनादौ वर्तमानानां क-ग-च-ज-त-द-प्रभृतीनां प्रायो लोपो भवतीति सुप्रसिद्धमेतत्। अत्रापि तेनैव नियमेन आदत्तमित्यस्य दकारलोपे प्रथमम् आअत्तं, तत आकारस्य अकारस्य च सन्धेः आत्तमिति। एवमेव प्रदत्तं प्रत्तम्, अवदत्तं अवत्तमित्यादि। उपमीयतां वैदिकं प्रउगं, यत् खलु मूलतः प्रयुगम्।

अस्ति संस्कृतेऽधीनार्थकम् आयत्तमिति पदम्। आयतते स्मेति वदन्तो वैयाकरणा यतेर्धातुत इदं व्युत्पादयितुमीहन्ते। वस्तुतस्तु

प्रागुक्तम् आदत्तमेव आयत्तम्। प्राकृतमिदं न संस्कृतम्। आदत्तं पूर्ववद् दकारलोपे प्रथमत आअत्तं। ततः अकारो यश्रुतिर्भवति। यथा वदनं प्राकृते वअणं वयणं च। उपमीयतां संस्कृते कः आस्ते इत्यत्र क आस्ते कयास्ते इत्यादि। ईदृशेष्वयं यकारो लघुतरेण प्रयत्नेनोच्चार्य इति शाकटायन आचार्यो मन्यते। नायं पूर्णो यकारः, अपि त्वपूर्णस्तत्सदृशो वा। अत एव प्रातिशाख्यकारा एनं य-लेश इत्याहुः। यलेशो नाम यकारस्य लेशो लवः कण इति। प्राकृतविदस्तु यश्रुतिरिति वर्णयन्ति। स खलु यकार इव श्रूयते, न तु वस्तुतो यकारः। पाणिनेस्तु समये पूर्ण एव यकारोऽश्रूयत इति प्रतीयते। यथा वास्तु इदं पुनः स्पष्टं यदीदृशेषु स्थानेषु द्वयोः स्वरयोर्मध्ये यकारः श्रूयते। सुकरं हि तेनोच्चारणं भवति। एतेनैव च नियमेन बहूनां पदानामुत्पत्तिः शक्यते व्याख्यातुमनायासेन। यथा देवशब्दस्य षष्ठी-सप्तमीद्विवचने देवयोः। अत्र देव-ओस् इति स्थिते मध्ये यश्रुतिर्भवतीति देवयोरिति सिध्यति। एवं गायति, लतायामित्यादिष्वपि यकारागमो व्याख्येयः।

दृश्यन्ते कदन्नम्, कदर्थः, कदुष्णम् इत्यादीन्यनेकानीदृशानि पदानि। वैयाकरणा आहुरत्र कु-शब्दस्य कदादेशो भवतीति। उक्तिमात्रमेतत्। न त्विह किमपि प्रमाणमस्ति। एवं कापुरुषः कापथ इत्यत्रापि कु-शब्दस्यैव कादेश इति मन्यन्ते। न चेहाप्यस्ति किमपि साधकम्। यथा यद्, तद्, एतद्, अन्यद् ( तुलः-अन्यदीयम् ) मद्, त्वद् इत्यादीनि दकारान्तानि सर्व्वनामपदानि तथा किंशब्दस्याप्यपरं रूपं कद् इति। यथा दकारान्तानामपि यदादिशब्दानां नपुंसके प्रथमां विनान्यासु विभक्तिषु लुप्तदकारमेव पदं ( यथा यः यौ ये, इत्यादि ) एवं किंशब्दस्यापि केवलं नपुंसके प्रथमायामेव किम् इति इमन्तं रूपम्, अन्यत्र तु कप्रकृतिकं रूपम्। कदर्थादिषु तु कत्प्रकृतिः स्पष्टा। कदन्नमित्यादिषु किंसखेत्यादिष्विव क्षेपो गम्यते। ततश्च न दुर्लभः कुत्सितार्थोऽपि। कापुरुष इत्यत्र प्रथमतः कत्पुरुषः। ततः प्राकृतप्रकृत्या कप्पुरुषः। ततश्चैकस्य पकारस्य

रुद्भावितः। पततिरेव प्राकृतशक्त्या पटतिर्भवति। अत उत्पातयति उत्पाटयति चेत्येते अभिन्ने। तत्र पटतिः पततेर्वस्तुतः पृथगिति व्यर्थेयं कल्पना। पिनष्टेः पिष्टम्। पिष्टं प्राकृते पिट्ठं। ततः क्रमेण पीडमिति। तदेव नामधातुतां प्राप्तं पीडयतीत्यादिना रूपेण प्रकाशते। अलमतिबहुना। एकमेवेदमन्यत् किञ्चिच्चिन्त्यते। सुविदितः सर्वेषां मनोरथशब्दः। का पुनरस्य निरुक्तिः। शाब्दिकास्तावन्न एवमाहुः "मन एव रथोऽत्र। मनसो रथ इव वा।" शब्द एवेह केवलं चिन्तितस्तत्रभवद्भिः सर्वथा समुत्सृज्यार्थम्। दुरबोधोऽभिप्रायोऽस्य निर्वचनस्य। तत्त्वं त्विदं यन्मूलतोऽयं शब्दो मनोऽर्थः। स एव रकारोत्तरं स्वरयोगान्मनोरथ इति। चिन्त्यतामत्र वैदिकी लौकिकी च स्वरभक्तिः। प्राकृते भाषायां च दरिसणादि दरशनादि च पदम्। गृहार्थकं गेहं प्रसिद्धं छन्दस्यपि। न त्वेतत् संस्कृतम्, अपि तु प्राकृतम्। * ग्रेहं गेहम् इति ह्यस्योत्पत्तिक्रमः। ऋकारो हि क्वचिद् रेकारत्वेनोच्चार्यते। शिक्षयन्ति च यजुर्वेदीया कृष्णोऽसीति क्रेष्णोऽसीति पाठ्यमिति। प्राकृते पदादौ संयुक्तयोर्वर्णयोरन्यतरलोपः प्रसिद्धः।

दत्तमित्यभ्यस्ताद्ददातेः त-प्रत्यये रूपम्। तस्यैव आ-पूर्वकस्य आदत्तम् आत्तं चेति। अत्र द्वितीयस्य साधनाय शाब्दिकाः पठन्ति यत् स्वरान्तादुपसर्गाद् दा इत्यस्य धातोः तकारादेशो भवतीति ('अच उपसर्गात् तः' पा० ३-४-४३)। प्रक्रियेयं काचिच्छब्दमात्रनिष्पत्तये। न त्वियं तत्त्वमावेदयति। तत्पुनरेतत्। प्राकृतेऽनादौ वर्तमानानां क-ग-च-ज-त-द-प्रभृतीनां प्रायो लोपो भवतीति सुप्रसिद्धमेतत्। अत्रापि तेनैव नियमेन आदत्तमित्यस्य दकारलोपे प्रथमम् आअत्तं, तत आकारस्य अकारस्य च सन्धेः आत्तमिति। एवमेव प्रदत्तं प्रत्तम्, अवदत्तं अवत्तमित्यादि। उपमीयतां वैदिकं प्रउगं, यत् खलु मूलतः प्रयुगम्।

अस्ति संस्कृतेऽधीनार्थकम् आयत्तमिति पदम्। आयतते स्मेति वदन्तो वैयाकरणा यतेर्धातुत इदं व्युत्पादयितुमीहन्ते। वस्तुतस्तु

प्रागुक्तम् आदत्तमेव आयत्तम्। प्राकृतमिदं न संस्कृतम्। आदत्तं पूर्व-वद् दकारलोपे प्रथमत आअत्तं। ततः अकारो यश्रुतिर्भवति। यथा वदनं प्राकृते वअणं वयणं च। उपमीयतां संस्कृते कः आस्ते इत्यत्र क आस्ते कयास्ते इत्यादि। ईदृशेष्वयं यकारो लघुतरेण प्रयत्नेनोच्चार्य इति शाकटायन आचार्यो मन्यते। नायं पूर्णो यकारः, अपि त्वपूर्णस्तत्सदृशो वा। अत एव प्रातिशाख्यकारा एनं य-लेश इत्याहुः। यलेशो नाम यकारस्य लेशो लवः कण इति। प्राकृतविदस्तु यश्रुतिरिति वर्णयन्ति। स खलु यकार इव श्रूयते, न तु वस्तुतो यकारः। पाणिनेस्तु समये पूर्ण एव यकारोऽश्रूयत इति प्रतीयते। यथा वास्तु इदं पुनः स्पष्टं यदी-दृशेषु स्थानेषु द्वयोः स्वरयोर्मध्ये यकारः श्रूयते। सुकरं हि तेनोच्चारणं भवति। एतेनैव च नियमेन बहूनां पदानामुत्पत्तिः शक्यते व्याख्यातु-मनायासेन। यथा देवशब्दस्य षष्ठी-सप्तमीद्विवचने देवयोः। अत्र देव-ओस् इति स्थिते मध्ये यश्रुतिर्भवतीति देवयोरिति सिध्यति। एवं गायति, लतायामित्यादिष्वपि यकारागमो व्याख्येयः।

दृश्यन्ते कदन्नम्, कदर्थः, कदुष्णम् इत्यादीन्यनेकानीदृशानि पदानि। वैयाकरणा आहुरत्र कु-शब्दस्य कदादेशो भवतीति। उक्तिमात्रमेतत्। न त्विह किमपि प्रमाणमस्ति। एवं कापुरुषः कापथ इत्यत्रापि कु-शब्दस्यैव कादेश इति मन्यन्ते। न चेहाप्यस्ति किमपि साधकम्। यथा यद्, तद्, एतद्, अन्यद् ( तुलः-अन्यदीयम् ) मद्, त्वद् इत्यादीनि दकारान्तानि सर्व्व-नामपदानि तथा किंशब्दस्याप्यपरं रूपं कद् इति। यथा दकारान्तानामपि यदादिशब्दानां नपुंसके प्रथमां विनान्यासु विभक्तिषु लुप्तदकारमेव पदं ( यथा यः यौ ये, इत्यादि ) एवं किंशब्दस्यापि केवलं नपुंसके प्रथ-मायामेव किम् इति इमन्तं रूपम्, अन्यत्र तु कप्रकृतिकं रूपम्। कदर्था-दिषु तु कत्प्रकृतिः स्पष्टा। कदन्नमित्यादिषु किंसखेत्यादिष्विव क्षेपो गम्यते। ततश्च न दुर्लभः कुत्सितार्थोऽपि। कापुरुष इत्यत्र प्रथमतः कत्पुरुषः। ततः प्राकृतप्रकृत्या कप्पुरुषः। ततश्चैकस्य पकारस्य

लोपेन हेतुना पूर्व्वस्वरस्य दीर्घीभावात् (उपमीयतां गुह्र—गूढ ) कापुरुषः। एवं कापथः। कत्पथः—कप्पथः—कापथः। कृतमतिविस्तरेण।

इदमन्यत् किञ्चिच्चिन्तनीयं संस्कृतानुशीलनकामैः। एकस्मिन् वाङ्मये वाङ्मयान्तरादादीयन्ते शब्दाः। तदेतत् संस्कृतेऽपि नान्यथा। संस्कृतमात्ररसिकानां तु प्रायेणेदं वृत्तं नारोहति चित्तम्। सर्व्वमेव हि ते संस्कृतमेव पश्यन्ति। अतः समर्प्य सलिलाञ्जलिं वस्तुतत्त्वाय प्रसह्य यथाकथञ्चिन्निरुक्तिमेव शब्दानामाविष्कर्तुं यतन्ते, न त्वर्थं किञ्चिद् विचारयन्ति। दिङ्मात्रं प्रदर्श्यते। तत्र ज्योतिषशास्त्रे यवनानां भाषातो होरादिशब्दानामागमः प्रसिद्धः। आह कालिदासः—

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुस्नेहात् समरविमुखो लाङ्गली याः सिषेवे। इति।

इह हाला सुरा। किमियं पुनर्हाला। हलिति। अत्राहास्माकीन एव कश्चिन्नैरुक्तः "हलत्यङ्गं। हल विलेखने। ज्वलादित्वान् णः। हल्यतेऽनया वेति।" केनचिन्नैरुक्तानुचरेण पुनस्तदेवेत्थं परिष्कृतम्— "हाला। हल्यते कृष्यत इव चित्तमनयेति।" वस्तुतस्तु हालेति देशीपदम्। स्पष्टमुक्तं वामनेन (अलङ्कारसूत्रम्, ५-१-१२)—"अतिप्रयुक्तं देशभाषापदम्। अतीव प्रयुक्तं देशभाषापदं प्रयोज्यम्। यथा "योषिदित्यभिललाष न हालाम्" (माघे १०-२१) इत्यत्र हालेति देशभाषापदम्। एवं कुटी, कुणिः (कुकरः), कुण्डं, कूलं, केयूरं, कोट्टं, खट्वा, वोटकः, चम्पकं, नीरं, पल्ली, मीनः, वलयं, वल्गु चेत्यादीनि पदानि द्राविडकमूलानीत्याहुः।

संस्कृतं सम्यगधिगन्तुकामा नार्हन्त्युपेक्षितुम् अत्रेस्तेति प्रसिद्धां पारसीकवाचमपि। सेयं पारसीकवाक् संस्कृतेन, विशेषेण तु वैदिकसंस्कृतेन तथातिगाढं सम्बद्धं यथा संस्कृतं प्राकृतेन। चित्तचमत्कारमातनोत्येष सम्बन्धः सचेतसाम्। अनुपदमेव चैतन्मनाग् व्यक्तीभविष्यति। अत एवैनयोर्वाचोरन्यतरस्याम् अधिगतायाम् अन्य-

तरा सुतरां सुगमा। अन्योन्यं चोपकुरुत एते। दिङ्मात्रमुदाह्रियते। अस्त्वस्मच्छब्दस्य चतुर्थ्येकवचने मह्यम् इति रूपं संस्कृते। अवेस्तायां तु मइब्यो। (अवेस्तायां भकारो नास्ति। तत्स्थाने बकारो भवति। अन्यथात्र मइभ्यो इत्यभविष्यत्।) एतेनावगम्यते संस्कृते मूलतो * मभ्यम् इत्येवासीत्। यथा तुभ्यम् (अवेस्तायां तइब्यो इति) इति युष्मच्छब्दस्य। अथ कालेन भकारस्य हकारभावाद् (यथा ग्रभिर्धातुर्भकारस्य हकारभावाद् ग्रहिर्जायते) मह्यं जातम्।

अशक्यमिह वक्तुं विस्तरशः। केवलं काचिद् गाथा प्रदर्श्यते। दीयते च तस्याः संस्कृतम्। तेनैव स्पष्टं प्रतीयेत यद् ध्वनितत्त्वनियमेन प्रायः सर्व्व एव शब्दास्तयोर्द्वयोर्वाचोरन्यतरस्यामवतारयितुं शक्यन्ते। यथा—

अवेस्ता

तेम् अमवन्तेम् यज़न्तेम्
सूरेम् दामोहु सेविश्तेम्
मिथ्रेम् यज़ै ज़ओथ्राब्यो।

तं शक्तिमन्तं यजनीयं शूरं जीवानां परमोपकारकं मित्रं हविर्भिर्यजे इति सुगमोऽर्थः। इदम् अस्या गाथायाः प्रत्यक्षरं

संस्कृतम्

तम् अमवन्तं यजतम्
शूरं धामसु शविष्ठम्
मित्रं यजै होत्राभ्यः॥

अथानुमन्यते भवद्भिर्ब्रूयां यदभवन्मे कदाचित्। दृश्यते, वत्सरनामानि हि वस्तुत ऋतुनामान्येवेति। अपो ददातीति अब्दो मेघः। तत्सम्बन्धाद् वर्षर्तुः सूच्यते। ततश्चायमब्दशब्दो वत्सरवाचकः। वर्षं वृष्टिर्वर्षणम्। तत्सम्बन्धादेव वर्षाः। ततश्च वर्षशब्दोऽपि वत्सरं बोधयति। शरच्छब्दः शरदृतुवाचकः स्पष्टः। सोऽपि प्रयुज्यते वत्सरार्थे ("जीवेम शरदः शतम्")। एवं हिमर्तुबोधको हिमशब्दोऽपि वत्सरार्थे दृश्यते वेदे

( "शतं हिमाः" )। एवं ग्रीष्मर्तुवाचकोऽपि स्यादेव कश्चिच्छब्दो यो वत्सरं बोधयेत्। अतितीव्रो निदाघो भारते। तन्नूनं तत्सूचकं वत्सर-नाम भवेदेव किञ्चित्। एवं चिन्तयतोऽपि मे दीर्घरात्रं न किञ्चित् प्रत्यभासत चेतसि। अथैकदा यदृच्छया कस्यचिदवेस्तापुस्तकस्य पत्राण्यावर्तयतो मेऽतर्कितमेव तत्र नेत्रपथमापतितो हम-शब्दः। स च तस्यां वाचि ग्रीष्मर्तौ प्रवृत्तः। तत्क्षणमेव मे प्रत्यभाद् यत् स खलु मयान्विष्यमाणः संस्कृतशब्दः समा इति ( "जिजीविषेच्छतं समाः" )। संस्कृते सम एव अवेस्तायां हम इति। सकारस्य हकारभावात्। यथा सं० सोमः, अ० हओमो। एवमनेकम्। अलमतिबहुना।

यदुक्तमधस्तात् तेन प्रतीयेत यदवेस्ता-प्राकृतादिकं चावश्यमध्येतव्यं संस्कृतविद्यार्थिभिरिति। उपाधिपरीक्षामुत्तितीर्षूणामवश्यपाठ्येषु विषयेषु तत्सर्वमपि किञ्चिद् युज्यते नियन्तुम्। सुकरं चैतत् तत्परीक्षाधिकारिभिः। विरच्यतां तादृक् किमपि मध्यमाकारं पुस्तकं यत्र पालिः प्राकृतं बौद्ध-संस्कृतम् अवेस्ता चेत्येतेषामनतिबहुला अपि व्युत्पादनक्षमाः केचन पाठाः संगृह्येरन्। प्राकृतं त्वत्र शक्यतेऽपि त्यक्तुम्। संस्कृतदृश्यकाव्येष्वेव तस्य भावात्। सम्भवति च तावतोऽप्यवधानेनाध्ययनात् समीहितसिद्धिरिति।

अन्यच्च। क्षयश्चेन्न प्रतिषिध्यते, क्षीणो वा न पुनः पूर्यते का प्रत्याशा वृद्धेः। मन्ये संस्कृतविद्यार्थिनामनेकैरेव न विज्ञायते यत् कियतां संस्कृतग्रन्थानां साम्प्रतं नामापि नोपलभ्यते संस्कृते। अनेकानि सहस्रा-ण्येते। नैषां संस्कृतमूलानि लभ्यन्ते। सन्ति तु ते सम्प्रत्यपि भोटवाचि चीनवाचि च। केचित्तु मङ्गोलानामपि वाचि। यथा वा तथा वा भवतु, बौद्धपुस्तकानि भारतात्प्रायोऽन्तर्हितानि। अतिबहून्येतानि, गम्भीरार्थानि च, विशेषेण तु यानि दर्शनविषयकाणि तर्कविषयकाणि च। नैषां ज्ञान-मन्तरेण सम्यग् ज्ञायते भारतम्। नूनं प्रसीदेच्चित्तं भूयसामिदमाकर्ण्य यत् काव्यालङ्कारेषु जीवानन्द-नागानन्द-मेघदूत-बुद्धचरित-काव्यादर्शादीनि व्याकरणेषु च चान्द्र-कातन्त्र-सारस्वत-पाणिनीयादीनि, अन्येषु च विषयेषु

एतादृशान्यनेकानि सुविदितानि पुस्तकानि भोटभाषायामवतारितानि। एवं चीनभाषायामप्यतिबहूनि। येषां संस्कृतं मूलमुपलभ्यते तेषामपि सुपरिशोधनाय भोटचीनपाठा आवश्यकाः, परीक्षितं ह्येतद्बहुशः। यं खलु मूलपाठं बहुभिरपि पुस्तकैर्निपुणोऽपि संस्कारको न शक्नोति संस्कर्तुम्, एकेनापि तु भोटपाठेन लीलयैव स तथा कर्तुं शक्यते। सत्यप्युपाये न चेत्ते नष्टा ग्रन्थाः पुनरुद्ध्रियन्ते का नाम समुन्नतिः संस्कृतस्य। के वा कुर्युरेतत्। के वा प्रकृष्यन्तेतरामत्र विना भारतीयेभ्यः। एते ते भारतीया एव विद्वांसो ये तेषु तेषु कालेषु तथातिदुर्गमैरपि मार्गैः समुल्लङ्घ्यापि महाशैलान् समुत्तीर्यापि च महाम्भोधीन् भोटांश्च चीनांश्चोपसृत्य भूत्वा च निष्णातास्तयोर्वाचोः सह तत्रत्यैस्तांस्तान् संस्कृतग्रन्थान् तयोर्वाचो-रवातारयन्। न च न तत्रत्या अपि स्वयं तत्कृत्यमकुर्वन्नित्यवश्यं मनसि कर्तव्यम्। एवं च तदानीं चेत् तदभवत् किमिदानीं न भवेत्।

चीनवाक् प्रायेण मूलस्य संस्कृतस्य भावार्थमनुसरति, भोटवाक् तु प्राधान्येनाक्षरमेव। अत एवास्माकं नष्टोद्धरणकर्मणि चीनपाठाद् भोटपाठ एव श्रेयान्। मनागुदाह्रियते। स्मर्यतां पूर्वं मया मनोरथ-शब्दार्थो विचारितः। प्रदर्शितं च यदस्मदीयानां नैरुक्तानां मते तन्निरुक्तिर्मनसो रथ इति। भोटावतारकास्तु* तस्य युक्तायुक्तत्वमविचार्यैव यथादृष्ट-मेवावातारयन्—यिद् क्यि षिङ र्त। अत्रायमर्थः। यिद्=मनः। क्यि=षष्ठी विभक्तिः। अत एव यिदं क्यि=मनसः। षिङं र्त=रथः। यिद् क्यि षिङ र्त=मनसो रथः, समासे मनोरथः।† एवमन्यत्रापि। अत एव यः पुरुषः संस्कृते भोटवाचि च सम्यग् व्युत्पन्नो निष्णातश्चानु-शीलनीये विषये सुकरस्तेन भोटपाठतः पुनरुद्धारः संस्कृतस्य। चीनपाठो-

---

* संस्कृतग्रन्थस्य भोटवाच्यवतारणं द्वाभ्याम् अक्रियत। तत्रैको भारतीयः, अपरस्तु तत्रत्य एव।

† षिङ=काष्ठं, र्त=अश्वः, षिङ र्त=काष्ठमयोऽश्वः इति योगार्थः। स च रथे रूढः। ततश्च ज्ञायते रथो नाम भोटपुरुषाणां मते काष्ठमयोऽश्व इति।

ऽप्यत्र बहूपकरोतीति कृतं कथनेन। आरब्धमेवैतत् कृत्यं भारते। तत्त्वतिशनैः। तदप्यल्पकैरेव। प्रवृत्यतामत्र विद्यार्थिभिः। कर्तव्यमेतत्।

आसीत् किल स कालो यत्र अत्रत्यं वा तत्रत्यं वा सर्वमपि ज्ञेयं तत्त्वं संस्कृत एवोपनिबद्धम्। ततश्चाधीतसंस्कृतः कामयमानः प्राभवत्त-दधिगन्तुम्। संस्कृतग्रन्थविरचनादुत्तरं तु प्रभूतानि तत्त्वानि प्रादुर्भूतानि। न च तान्यनवगच्छतः पुरुषस्य लोके स्थितिः सुखाय सम्पद्यते। अवश्यं तु स्थातव्यं जीवितव्यं च तेन। संस्कृतं च साम्प्रतं न केवलं भारतीयै-रधीयते। अभारतीयेष्वपि राष्ट्रेषु प्रचरत्येतत् प्रकामम् ( प्रचरतादेतत् कामम् )। न च तत्र तत्र तेषां तेषां पुरुषाणां तानि तानि मतान्युपेक्ष्यैव युक्तमवस्थातुम्। अवश्यमुपादेयं यद् युक्तमुपादातु, हेयं च यद् युक्तं हातुम्। अन्यथा न सिद्धिः समीहितस्य। तदेन्मनसि निधाय क्रियतां यत्कर्तव्यम्। अन्विष्यतां पन्थाः। प्रस्थीयतां तेन। लभ्यतां च फलमविकलं संस्कृताध्ययनस्य। *

---

## उपनिषत्कथा

[ निबन्धकः—म०म० श्रीदुर्गाचरण-सांख्यवेदान्ततीर्थः ]

( छान्दोग्ये उपकोसलविद्या )

अथैवं कार्य्यदर्शी महर्षिर्जाबालः शिष्यस्य सौभाग्यसोपानमवगम्य समुच्छ्वसदानन्दनिर्भरमानसः शनैरिदमब्रवीत्—"लोकान् वाव किल सोम्य, तेऽवोचन्, अहं तु ते तद्वक्ष्यामि—यथा पुष्करपलाशे आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म्म न श्लिष्यत इति"।

अयमाशयः—हे सोम्य उपकोसल! प्रत्यक्षदैवता अग्नयो दयापरवशाः सन्तस्तुभ्यं यत् प्रावोचन्, त्वमपि ब्रह्मविद्येति कृत्वा यदग्रहीः, तत् किल सुदुर्लभमपि न सम्यक्तया गृहाण; प्रतीकमेतत् खलु त्वदीप्सिताया ब्रह्मविद्यायाः। पृथिव्यादीन् लोकानेवाधिकृत्य ब्रह्मतत्त्वमग्निभिस्तुभ्य-

* संस्कृतसाहित्यपरिषदो मासिकाधिवेशने पठितोऽयं समीचीनतमो निबन्धः। अवाश्माकं यदि शेषतो वक्तव्यं तद्वारान्तरे वच्यते।—स, सा, प, स०।

मुक्तम्, न तु साक्षात् साकल्येन वा। अतः साम्प्रतमधिगताधिकारं शुद्धसत्त्वं त्वां त्वदभिवाञ्छितमेव तद् ब्रह्मतत्त्वमुपदिशामि, यस्याधिगमाद् मानवो मुक्तमोहः कृतकृत्यो भवेत्। यथा खलु पुष्करपलाशं पयसि विवर्द्धमानमपि पयसा न श्लिष्यते—नैवार्द्रीक्रियते, तथैव खलु मयोच्यमानब्रह्मविद् पुरुषोऽपि यथेष्टमनुष्ठितेनापि पापकर्म्मणा नैव सम्बध्यते, नैव तत्कर्म्मफलभाग् भवति। तत्रभवान् भगवान् श्रीकृष्णोऽपि "ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुन" इत्यादिभिर्वचनजातैरात्मज्ञानस्य परं महिमानमाह। अन्येऽपि विदिताखिलतत्त्वाः प्रख्यातमाहात्म्या महर्षयः सहर्षमेवमेवैतदावेदयन्ति। हे सौम्य, तदिममनन्यसामान्यं ज्ञानमहिमानमनुस्मरन् मे वितीर्णकर्णमुपदेशवर्णमाकर्णय। एवमाभाष्य कृताभिमुख्याय "ब्रवीतु मे भगवानिति" दत्तावधानाय तस्मै स परमात्मतत्त्वं प्रवक्तुमुपचक्रमे।

हे सोम्य, बहुशः कृतायासैरासेवितगुरुचरणैरावृत्ताखिलकरणैर्ब्रह्मचर्य्यादिसाधनशरणैः प्रशान्तमानसैर्विवेकिभिः "य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच, एतदमृतमभयमेतद् ब्रह्मेति।"

अयमभिसन्धिः—मनुष्याणां यदिदमक्षिस्थानं, तद्धि स्वतः स्वच्छतया निर्लेपतया च स्वत एव परमं पवित्रम्, कश्चित् 'यद्यप्यस्मिन् (अक्षिणि) सर्पिर्वोदकं वा सिञ्चति, वर्त्मनी एव गच्छति।" कदाचित् सिच्यमानमपि घृतं वा जलं वा अक्षिणि स्थितिपदं नैव लभते, ततो हि प्रस्खलत्प्रायं सत् अक्षिकोणमेवाश्रयते, ततस्तस्य निराबाधा शुद्धिरवगम्यते। विमले सलिले चन्द्रमरीचय इव विधूतरजोमले हि भाजने विकाशमापद्यन्ते परमात्मप्रतिबिम्बानि; ततश्च समुचितमेतदक्षिस्थानं परमात्मप्रकाशस्य। अस्मिंश्च चक्षुषि यः पुरुषो दृश्यते विवेकिभिः, एष आत्मेति मन्तव्यम्। नचैष छायापुरुषो नापि प्रतिबिम्बमात्रम्, अपि तु एतदेव मरणरहिततया अमृतम्, अमृतत्वाच्च सर्वभयविनिर्मुक्तमभयं ब्रह्मेति वेदितव्यम्, यदधिगमात् संसारिणो जीवा दुरपनेयं मायापाशमपास्य जन्मजरामरणदुःखक्षुण्णात् संसारादुत्तीर्णाः परं निर्वाणमापन्नाः कृतकृत्या भवन्ति, न पुनरावर्त्तन्ते इति।

———

# सुबन्धुकृतवासवदत्ताकथासारः

[ निबन्धकः—श्रीउपेन्द्रनाथ-विद्याभूषणशास्त्री ]

अभूत् पुरा सर्वस्वामिगुणोपेतो भूपतिः कश्चन चिन्तामणिर्नाम। तस्य च नरनाथस्य पारिजात इव आश्रितनन्दनो नानागुणग्रामः पुत्रो बभूव कन्दर्पकेतुर्नाम विविधविद्शेषलावण्यमयश्च। अथ कदाचित् असौ कुमारः अवसन्नायां यामवत्याम् अष्टादशवर्षदेशीयां कन्यकां काञ्चन निधानमिव कौतुकस्य, विजयपताकामिव मकरध्वजस्य, सङ्केतभूमिमिव लावण्यस्य, विहारस्थलीमिव सौन्दर्य्यस्य, प्रभवस्थानमिव कान्तेः, अदर्शत् स्वप्ने। अथ तां प्रीतिविस्तारितेन चक्षुषा पिबन् जनितेर्ष्ययेव निद्रया चिरसेवितया स मुमुचे। ततः प्रबुद्धो युवराजो विषसरसीव दुर्जनवचसीव निमग्नमात्मानमवधारयितुं न शशाक। तत्रैव शय्यातले निलीनो निषिद्धाशेषपरिजनो दत्तकवाटः परिहृत-ताम्बूलादि-सकलोपभोगो दिवसम् अनयत् तम्। तथैव निशामपि स्वप्नसमागमेच्छया कथमपि निनाय।

अथ मकरन्दो नाम कुमारस्य प्रियवयस्यः कथमपि लब्धप्रवेशदर्शनः कन्दर्पसायकप्रहारपरवशं कन्दर्पकेतुमवोचत्। "सखे, किम् इदम् असाम्प्रतम् असाधुजनोचितमाश्रितोऽसि मार्गम्? तवैतच्चरितम् आलोक्य वितर्कदोलासु निवसन्ति सन्तः। खलाः पुनराचरन्ति त्वदनुचितमनिष्टाचारम्। अनिष्टोद्भावनरसोत्तरं हि भवति खलहृदयम्। को नामास्य तत्त्वनिरूपणे समर्थः? अबीजाद् एव जायन्ते, अकाण्डाद् एव प्ररोहन्ति खलव्यसनाङ्कुराः। असतां हृदि प्रविष्टो दोषलवः करालायते। सतां तु हृदयं न प्रविशत्येव। यदि कथमपि प्रविशति तदा पारद इव क्षणमपि न तिष्ठति। मृगा इव विनोदबिन्दोर्वशगा न भवन्ति साधवः। सुखं जना हि भवादृशाः शरत्-समया इव हरन्ति मित्र-

मण्डलस्य। न च सचेतना उपदिशन्ति विसदृशम्। तद् इदम् असाम्प्रतमाचरितम्। गृहाण साधुजनोचितमध्वानम्। साधवो हि दिङ्-मोहाद् उत्पथ-प्रवृत्ता अपि पुनर्गृहीतसत्पथा भवन्ति।" इत्यादि वदति तस्मिन् प्रियसखे मकरन्दे कथमपि स्मर-शरप्रहारपरवशः कुमारः कन्दर्पकेतुरुवाच परिमिताक्षरम्। "वयस्य, नायमुपदेश-कालः। पच्यन्त इव मेऽङ्गानि। क्वथ्यन्त इव इन्द्रियाणि। भिद्यन्त इव मर्माणि। निःसरन्तीव प्राणाः। उन्मूल्यन्त इव विवेकाः। नष्टेव स्मृतिः। तदलमधुना कथयाऽनया। यदि त्वं सहपांसुक्रीडा-समदुःख-सुखोऽसि तत् समं मयागम्यतामित्युक्त्वा परिजनालक्षित एव तेन सहैव निर्जगाम पुरात्।

ततो गत्वा बहुनल्पमानम् अध्वानं क्रमशो विन्ध्यगिरिमुपेत्य तद्-टवीमध्ये कस्यचन जम्बूतरोः पादच्छायायां विशश्रमतुः कुमारौ। अत्रान्तरे चरमाचलशिखरमारुरोह भगवान् मरीचिमाली। ततो मकरन्दः फलमूलान्यादाय कथमपि तमभिनन्दिताहारम् अकार्षीत्, स्वयम् अपि तदुपभुक्तशेषमकरोद् अशनम्। अथ तामेव प्रियतमां हृदय-फलके सङ्कल्पतूलिकया लिखिताम् इव निरूपयन् निस्पन्दकरणग्रामः कुमारः कन्दर्पकेतुः सख्या विरचिते पल्लवशयने सुष्वाप। अथ याम-मात्रावखण्डितायां यामवत्यां जम्बूतरुशिखरे मिथः कलहायमानयोः शुक-शारिकयोः कलकलमाकर्ण्य वयस्यं मकरन्दमुवाच कुमारः कन्दर्प-केतुः—"सखे, शृणुवस्तावद् आलापमनयोः" इति। ततो जम्बू-निकुञ्जस्थिता काचित् शारिका चिराद् आगतं शुकं प्रकोपतरलाक्षरम् उवाच—"कितव, शारिकान्तरम् अन्विष्यागतोऽसि। कथमन्यथा रात्रिरियती तव" इति। अथ शुकोऽवादीत् ताम्—"भद्रे, मुञ्च कोपम्। अपूर्व्वा श्रुता मया बृहत्-कथा, प्रत्यक्षीकृता च, तेनायं कालाति-पातः" इति। अथ समुपजातकुतूहलया शारिकया असकृत्, अनुबध्य-मानः स शुकः कथयितुमारेभे कथाम्।

अस्ति भागीरथीतीरे कुसुमपुरं नाम नगरम्। तत्र धर्म्मात्मा महावीरो नानागुणशेखरः शृङ्गारशेखरो नाम राजा प्रतिवसति। तस्य च राज्ञो महिषी पार्व्वतीव सुकुमारा चन्दनलेखालंकृता अनङ्गवती नाम। तयोश्च मध्यमोपान्ते वयसि वर्त्तमानयोः कथमपि दैववशाज् जाता त्रिभुवनलोभनीयाकृतिः कन्या वासवदत्ता नाम। अथ सा त्रिभुवनैकसुन्दरी राजकुमारी पवन इव सुमनोहरे परिणाममुपयात्यपि यौवने परिणयपराङ्मुखी तस्थौ। तत एकदा समायाते वसन्ते महीपतिः स्वसुतायाः जगन्मोहिन्याः स्वयंवरार्थम् अशेषधरणीधरकुमाराणामकरोन् मेलनम्। ततः सुमनोऽलंकृतं मञ्चमारूढा कुमारी क्षणेन समवलोक्य तान् राजकुमारान् अनेकशो विरक्तहृदया तस्मात् कर्णीरथाद् अवततार।

अथ तस्यामेव रजन्याम् अदर्शत् स्वप्ने कुमारी कञ्चित् कुमारम् आदिकन्दं शृङ्गारपादपस्य, प्रथमबीजं विद्यालतानाम्, मूलगृहं शीलसम्पदः, त्रिभुवनरमणीयाकृतिं युवानम्। 'स च चिन्तामणिनामधेयस्य राजर्षेरात्मजः कन्दर्पकेतुर्नाम पुरुषशिरोमणिरिति स्वप्न एव विदितवती कुमारी तत्परिचयम्। अनंन्तरम्—"अहो प्रजापते रूपनिर्म्माणकौशलम्। मन्ये स्वस्यैव नैपुण्यस्य एकत्र दर्शनोत्सुकमनसा वेधसा जगत्त्रयसमवायिरूपपरमाणून् आदाय विरचितोऽयम् इति, अन्यथा कथम् इवास्य कान्तिविशेष ईदृशो भवति। वृथैव दमयन्ती नलस्य कृते वनवासवैशसमवाप। मुधैव दुष्यन्तस्य कृते दुर्वाससः शापम् अनुबभूव शकुन्तला। निरर्थकम् एव मदनमञ्जरी नरवाहनदत्तं चकमे। निष्प्रयोजनम् एव ऋद्धिः गन्धर्व-यक्षेषु कुबेरमाससाद। अहेतुकम् एव पुलोम-तनया देवेन्द्रासक्तचित्ता बभूव।" इति बहुविधं चिन्तयन्ती मदनदावाग्निशिखाकवलितेव वसन्तकालाग्निगृहीतेव उन्मादपातालगृहं प्रविष्टेव शून्यकरणग्रामेव वर्त्तमाना हृदये विलिखितम् इव, उत्कीर्णम् इव, उप्तम् इव, मर्मान्तरस्थितम् इव, प्राणपरीतम् इव, अन्तरात्मानम् अधिष्ठितम् इव, रुधिराशये द्रवीभूतम् इव, पललसंविभक्तम् इव, कन्दर्पकेतुं

मन्यमाना, उन्मत्तेव, अन्धेव, बधिरेव, मूकेव, निरस्तेन्द्रियग्रामेव, मूर्च्छा-गृहीतेव, ग्रहग्रस्तेव, यौवनसागरतरलतरङ्गपरम्परापरिगतेव, कन्दर्प-कुसुमबाणैः कीलितेव, शृङ्गारभावनाविषरसघूर्णितेव मलयानिलापहृत-जीवितेव भवन्ती, "हा प्रियसखि अनङ्गलेखे, वितर हृदये मे पाणिपद्मम्, दुःसहो विरह-सन्तापः। मुग्धे मदनमञ्जरि, सिञ्च चन्दनवारिणा इमानि अङ्गानि। सरले वसन्तसेने, संवृणु केशपाशम्। तरले तरङ्गवति, विकिर कैतकधूलिम् अङ्गेषु। वामे मदनमालिनि, कलय वलयं शैवाल-कलापेन। चपले चित्रलेखे, विलिख चित्रपटे चित्तचोरं जनम्। भामिनि विलासवति, विक्षिप मुक्ताचूर्ण-निकरम् अवयवेषु। सुकान्ते कान्तिमति, मन्दं मन्दम् अपनय बाष्पबिन्दून्। यूथिकालंकृते यूथिके, नलिनीदल-तालवृन्तेन सञ्चारय आर्द्रवातान्। एहि, भगवति निद्रे, अनुगृहाण माम्। धिगिन्द्रियाण्यपराणि, किम् इति लोचनमयान्येव न कृतानि विधिना अङ्गानि। भगवन् कुसुमायुध, अयं मे तवाञ्जलिः, अनुकूलो भव भाववति मादृशे जने। मलयानिल सुरतमहोत्सवदीक्षागुरो, वह यथेष्टम्, अपगता मम प्राणाः।" इति बहुविधं भाषमाणा कुमारी वासवदत्ता सखीजनेन समं सम्मुमूर्च्छ।

अनन्तरं परिजनप्रयत्नोच्छ्वसितजीविता राजनन्दिनी तदीयरूपनाम-धामानि विचिन्तयन्ती दिक्षु विलिखितम् इव, नभसि उत्कीर्णम् इव, चित्रपटे पुरोदर्शितम् इव, इतस्ततो विलोकयन्ती इव तं, न्यतिष्ठत। ततः प्रियसखीभिः समं समालोच्य तमालिका नाम तस्याः शारिका कन्दर्प-केतुभावम् आकलयितुं प्रेषिता। सापि मया सार्द्धं प्रस्थितागता चात्रैव तरोरधस्तात् तिष्ठति।" इत्युक्त्वा विरराम स शुकः।

अथ श्रुत्वा शुक-विवृतिं सहर्षं समुत्थाय कुमारो मकरन्द आहूय तां तमालिकां विदितवृत्तान्ताम् अकरोत्। सा तु तस्यै कृतप्रणामा तां पत्रिकाम् उपानयत्। अथ मकरन्द आदाय पत्रिकां विस्रस्य स्वयम् एव ताम् अवाचयत्—

प्रत्यक्षदृष्टभावाप्यस्थिरहृदया हि कामिनी भवति ।
स्वप्नानुभूतभावा द्रढयति न प्रत्ययं युवतिः ॥

तदाकर्ण्य कुमारः कन्दर्पकेतुः सुधासागरनिमग्नम् इव सर्वानन्दानाम् उपरि वर्त्तमानम् इव मन्यमान आत्मानम् उत्थाय मन्दं मन्दं प्रसारित-बाहुयुगल आलिलिङ्ग तमालिकाम् । अथ तयैव च सार्द्धं समासीनः—'किं करोति, किं वदति, कथम् आस्ते' इत्यादि सकलं वासवदत्तावृत्तान्तम् अपृच्छत् । तं च दिवसम् अतिवाह्य तत्रैव तस्मात् प्रदेशात् तया सह ससुहृत् कन्दर्पकेतुः प्रतस्थे । अत्रान्तरे भगवान् अपि मरीचिमाली वृत्तान्तम् इमं कथयितुम् इव मध्यमं लोकम् अवततार । ततः क्रमेण अस्तं गते भगवति भास्करे समायातायां च रजन्यां दुग्धार्णवनिमग्नम् इव स्फाटिकगृहप्रविष्टम् इव श्वेतद्वीपनिविष्टम् इव जगत् आमुमुदे । ततः प्रवाति सायन्तने तनीयसि निशानिश्वासनिभे तापहारिणि नभस्वति तमालिकामकरन्दसहायो वासवदत्तानगरमयासीत् कन्दर्पकेतुः । अथ स प्रविश्य कटकैकदेशे विनिर्मितम् अभ्रङ्कषशिखरेण सुधाधवलेन सालवलयेन परिगतम्, अनिलोल्लासिताभिः पताकाभिः शोभमानम्, काचकलसाकृतिम् उद्वहन्तीभिः शिखण्डिसंहतिभिः उद्भासितैः प्रासादैः शोभितम्, अरण्यम् इव विविधसालोपशोभितम्, कुलगृहम् इव सकलविभ्र-माणाम्, सङ्केतस्थानम् इव सौन्दर्य्यस्य वासवदत्ताभवनं भवनन्दनप्रभावो ददर्श । ततः शृण्वन् प्रणयपेशला विविधा आलापकथाः प्रमदाजनानां प्रविश्य च तद्भवनम् अकरोत् मनसि कुमारः—"अहो भुवनातिशायि सौन्दर्य्यम् । अहो शृङ्गारकलाकेलिकौशलम् । असावपि कनकशलाका-विनिर्मितयन्त्रपञ्जरसंयतः क्रीडाशुकः" इत्यादि परिचिन्तयन् गच्छन्, भ्राजमानतनुमध्याम्, उपनिषदम् इव सदानन्दाम्, अनुपमाम्, अश्वतर-कन्याम् इव मदालसां ददर्श राजकुमारीं वासवदत्ताम् ।

अथ तां विस्फारितेन चक्षुषा पिबतः कन्दर्पकेतोर्जहार चेतनां मूर्च्छा । तमनुपश्यन्ती वासवदत्ता मुमूर्च्छ । अथ मकरन्दसखीजनप्रयत्नात्

प्राप्तसंज्ञौ तौ एकम् आसनम् अलञ्चक्रतुः। ततो वासवदत्तायाः प्राणेभ्योऽपि गरीयसी सर्व्वविस्रम्भपात्रं कलावती नाम सखी कुमारम् उवाच कन्दर्पकेतुम्—"वयस्य, नायं विस्रम्भकथानाम् अवसरः। अतो लघुतरम् एवाभिधीयते। त्वत्कृते यानया यातनानुभूता, सा यदि नभः पत्रायते, . सागरो मसीपात्रायते, ब्रह्मा लिपिकरायते, भुजगपतिर्वा कथकायते, तदा किमपि कथमपि अनेकैर्युगसहस्रैः कथ्यते अभिलिख्यते वा। त्वया च उज्झितं स्वं राज्यम्। किं बहुना—आत्मास्याः सङ्कटे समारोपितः, यैषा अस्मत्-स्वामिदुहिता प्रभातायां शर्व्वर्य्यां पित्रा यौवनातिक्रमदोषशङ्किना हठेन विद्याधरचक्रवर्त्तिनो विजयकेतोः पुत्राय पुष्पकेतवे पाणिग्रहणेन दातव्या इति निश्चिता। अनया च आर्य्यया संमन्त्र्य अस्माभिः सह समालोचितम्—'अद्य यदि तं जनम् आदाय नागच्छति तमालिका, अवश्यमेव तदा आश्रयाश आश्रयितव्यः'—इति। सुकृतवशात् समागतो महाभागः। तदत्र यत् साम्प्रतं तत्र भवान् एव प्रमाणम् इति कथयित्वा विरराम।

अथ कन्दर्पकेतुरपि भीतभीत इव प्रणयानन्दामृतसागरलहरीभिः आप्लुत इव, संमन्त्र्य वासवदत्तया, मकरन्दं वार्त्तान्वेषणाय तत्रैव नगरे नियुज्य, भुजगेनेव सदागत्यभिमुखेन, सरित्पतिनेव शुक्तिशोभितेन, वज्रेणेव इन्द्रायुधेन, मनोजवनाम्ना तुरगेण तया सह नगरात् निरगात्। ततः क्रमेण गव्यूतिमात्रमध्वानं गत्वा रौद्रतरेण श्मशानवाटेन निर्गत्य निमेषमात्राद् एव अनेकशतयोजनम् अध्वानं गत्वा विन्ध्याटवीं विवेश। अत्रान्तरे तयोर्निद्राम् आदाय जगाम निशा। ततः क्रमेण सर्व्वरात्रजागरणपरवशाहारशून्यशरीरतया निश्चेतनः कन्दर्पकेतुः अनेकयोजनशताध्वभ्रमणखिन्न एवंविधयापि वासवदत्तया सह लतागृहे मन्दमारुतान्दोलित-कुसुमपरिमल-मनोहरे तत्कालसुलभया निद्रया गृहीतो निस्पन्दकरणग्रामः सुष्वाप।

अथ उपवासादिना तृषातुरे निद्रापरिश्रान्ते राजकुमारे प्रथमप्रबद्धा

राजनन्दिनी वासवदत्ता फलाद्यन्वेषणाय वने नल्वमात्रम् अगच्छत्। तथा गच्छन्तीं च तां चारकथितोदन्तो दूरात् किरातसेनापतिः सह तरु-गुल्मान्तरितेन स्वबलेन धावति स्म। ततोऽन्योऽपि तादृश एव किरात-नायकस्तथाभूतया सेनया समन्वितो मृगयां गतस्तदाकर्ण्य धावति स्म। अथैकामिषलुब्धयोरिव शकुनयोस्तयोर्भीषणम् अभूत् युद्धम्। ततो विध्वस्तध्वजपटं पतत्पताकं तत् समस्तम् उभयं मिथो जगाम निहननं किरातबलम्। ततश्च यस्याश्रमः, तेन मुनिना कुसुमादिकम् आदाय प्रत्यागतेन योगदृशा प्रतिपन्नवृत्तान्तेन 'त्वत्कृते भग्नो ममायम् आश्रमः' इति रोषाविष्टेन "शिलामयी पुत्रिका भव" इति शप्ता वासवदत्ता। ततः क्षणेन च 'अहो इयं वराकी बहु दुःखम् अनुभवति' इत्यनुग्रहात् स तापसो याच्यमानः 'पतिहस्तस्पर्शावधिको मे शापः' इत्यवोचत्। ततो मुनिशापाच्छिलामयी जाता वासवदत्ता।

अथ सर्वाशाप्रसाधके मध्यं नभःस्थलम् आरूढे पतङ्गमण्डले प्रबुद्धः कन्दर्पकेतुः प्रियया विनाकृतम् अवलोक्य लतागृहम्, उत्थाय च इतस्ततो दत्तदृष्टिः क्षणं विटपिषु, क्षणं लतास्तरेषु, क्षणम् अधः कूपेषु, क्षणम् ऊर्द्ध्वं तरुशिखरेषु, क्षणं शुष्कपर्णराशिषु, क्षणम आकाशतले, क्षणं दिक्षु क्षणं विदिक्षु च, भ्रमन् अनवरतविरहानल-दह्यमानहृदयो विललाप। "हा प्रिये वासवदत्ते देहि मे दर्शनम्। कृतं परिहासेन। अन्तर्हितासि। त्वत्कृते यानि दुःखान्यनुभूतानि तेषां त्वमेव प्रमाणम्। हा प्रियसख मकरन्द, पश्येदं दैव-दुर्विल-सितम्। किं पूर्व्वं मया कृतम् अनवद्यातं कर्म्म। अहो विपाको नियतेः! अहो दुःस्वप्नानां दुर्निमित्तानां च फलम्! सर्व्वथा न किञ्चित् अगोचरो भवितव्यतानाम्। किं न सम्यक् आगमिता विद्याः। किं यथावत् अनाराधिता गुरवः? किं न कृतं शरणागतेषु अभयम्?" इति बहु विलपन् मरणेच्छुः काननं दक्षिणेन निर्गत्य क्रमशो महासागरकच्छो-पान्तेन कतिपयदूरमध्वानं गत्वा जलनिधिमपश्यत। अचिन्तयत

च—"अहो मे कृतापकारेणापि विधिना कृता प्रत्युपकृतिः, यद् अयं लोचनगोचरतां गतो वारिधिः। तद् अत्र त्यजामि देहम्। यद्यपि न विहित आत्मत्यागोऽनातुरस्य, तथापि कार्य्यः। न खलु सर्व्वः सर्व्वं कार्य्यमेव करोत्यसारे संसारे। किं नाम कृतं केन? तथा हि—पुरूरवा ब्राह्मणधनतृष्णया विननाश। नहुषः परकलत्रदोहली भुजङ्गताम् अयासीत्। ययातिः कृतब्राह्मणीपाणिग्रहणः पपात। सुद्युम्नः स्त्रीमय एवाभवत्। पुरुकुत्सः कुत्सित एवाभूत्। कुवलयाश्वो जगाम अश्वतरकन्यकाम् अपि। नलः कलिनाभिभूतः। संवरणो मित्रदुहितरि विक्लवताम् अगात्। युधिष्ठिरः समरशिरसि सत्यम् उत्ससर्ज। तद् इत्थम् अस्ति न कोऽपि जगति निष्कलङ्कः। तद् अहम् अपि देहम् उत्सृजामि" इत्येवं विचिन्त्य पुलिनतलम् आससाद। ततः कृतस्नानादिकृत्यो जलनिधिजलम् अवतरितुम् आरेभे शरीरत्यागाय। अथ समुदचरद् वक्ष्यमाणा सरस्वती गगनतलात्—'आर्य्य कन्दर्पकेतो, पुनरपि तव प्रियया अचिरेण भविष्यति ते सङ्गतिः। तद् विरम मरणव्यवसायात्' इति। सोऽपि तद् उपश्रुत्य विरराम मरणारम्भात्। ततः प्रियासमागमाशया शरीरस्थितिहेतुम् अशनं चिकीर्षुः कच्छोपान्तवनम् अगमत्। अथ तत इतः परिभ्रमन् फलमूलादिना वने वर्त्तयन् कालम् अनेकं निनाय।

एकदा तु कतिपयमासापगमे काकलीगायन इव समृद्धनिम्नगानदः, सायन्तनसमय इव नर्त्तितनीलकण्ठः, विन्ध्य इव घनश्यामः, समाजगाम वर्षासमयः। ततो मेघकुम्भसलिलैः पृथिवीनायिकां स्नपयित्वा प्रावृट्-चेटिकायां गतायाम्, स्वच्छम् अम्बरं दर्शयन्ती शरच्चेटिका समाजगाम। अथैकदा विकस्वरकमले बन्धूकबान्धवे शरत्समयारम्भे विजृम्भमाणे कन्दर्पकेतुः इतस्ततः परिभ्रमन् काञ्चित् शिलामयीं पुत्रिकाम् आलोक्य 'मम प्रियानुकारिणी' इति करेण पस्पर्श ताम्। अथ सा स्पृष्टमात्रैव शिलाभावम् उत्सृज्य प्रपेदे वासवदत्तास्वरूपम्। ताम् अव-

लोक्य कुमारः कन्दर्पकेतुः सुधासागरमग्न इव सुदृढम् आलिङ्ग्य 'प्रिये वासवदत्ते किमेतत्' इति पप्रच्छ। सा च दीर्घम् उष्णं च निश्वस्य प्रत्युवाच—"आर्य्यपुत्र, अपुण्याया मन्दभाग्याया मम कृते महाभागो भवान् उत्सृष्टराज्य एकाकी परिभ्रमन् प्राकृतजन इव अवाङ्मनसगोचरं दुःखम् अनुबभूव। उपवासादिना तृषातुरे भवति सुप्तिश्रान्ते प्रथम-प्रबुद्धाहं भवतः फलमूलादिकम् आहरिष्यामि इति विचिन्त्य फलाद्यन्वेषणाय वने नल्वमात्रम् अगच्छम्। ततः क्षणेन तरुगुल्मान्तरितं सेना-निवेशम् आलोक्य 'किमयं ममाकर्षणाय समायातस्तातव्यूहः? आहो-स्विद् आर्य्यपुत्रव्यूहः?' इति चिन्तयन्तीं मा चारकथितोदन्तो दूरात् किरातसेनापतिः धावति स्म। ततोऽन्यः किरातनायकस्तादृश एव तथाभूतया सेनया समन्वितो मृगयां गतो दृष्ट्वा मां धावति स्म। अथैका-मिषलुब्धयोर्गृध्रयोरिव तयोर्बभूव युद्धं तुमुलम्। अथ विध्वस्त-ध्वजपटं पतत्-पताकं व्यूहचारिभटकम्पितखड्गधेनुकं तत् समस्तम् उभयं मिथो जगाम हननं सैन्यम्। ततो यस्याश्रमः, तेन मुनिना पुष्पा-दिकमादाय प्रत्यागतेन योगदृशा प्रतिपन्नवृत्तान्तेन 'त्वत्कृते ममायम् आश्रमो भग्नः' इति कुपितेन 'शिलामयी पुत्रिका भव' इति शप्तासम् अहम्। ततः क्षणेनैव 'इयं वराकी बहु दुःखम् अनुभवति' इति अनुग्रहात् आर्य्यपुत्रकरुणया च स मुनिर्याच्यमानो भवद्धस्तस्पर्शावधिकं शाप-मकरोत्।"

अथ कन्दर्पकेतुः श्रुतवृत्तान्तेन समागतेन वयस्येन मकरन्देन तया प्रियतमया वासवदत्तया च समं स्वपुरं गत्वा हृदयाभिलषितानि सुरलोक-दुर्लभानि सुखानि ताभ्यामनुभवन् कालमनेकं निनाय।

---

# अध्यापकमहोदयः

१

आसीदधिकपञ्चाशेभ्यो वर्षेभ्यः पूर्व्वं वर्द्धमानपुरात् षोडशसु क्रोशेषु पारेदामोदरं नन्दिपुरगोस्वामिगञ्जाभिधानमनन्तरवर्त्ति वर्द्धिष्णु ग्रामद्वितयम्। ग्रामयोश्चानयोः सीमरेखयोरुपरि प्राचीनो विशालश्चैको न्यग्रोधपादपो विराजते स्म। नेदानीं ते नगरे नो वा स पादपः परिलक्ष्यते— दामोदरस्य जलोच्छ्वासेन सर्व्वं तत् परिप्लावितम्।

मासोऽयं फाल्गुनः। व्यतीतश्च प्रथमः प्रहरः। गोस्वामिगञ्जस्य प्रधानप्रजा ग्रामस्य च रक्षकस्थानीयः कायस्थकुलोद्भवः श्रीमान् हीरालालदासदत्तमहोदयस्ताम्रकूटसेवनयन्त्रपाणिर्धूमं पिबन्नासीत्। तस्य च प्रातिवेशिकौ श्यामापदमुखोपाध्यायः केनाराममल्लिकश्च (एतावपि प्रजासु मुख्यौ) समीपोपविष्टावेषमः साधारणान्नपूर्णापूजोत्सवः कया रीत्या सम्पादनीय इति मन्त्रयमाणौ स्थितौ। भूम्यनन्तरे नन्दिपुरेऽपि प्रतिवर्षं सर्वैः सम्भूय द्रविणप्रदानेन महताडम्बरेण अन्नपूर्णापूजानुष्ठीयते। एवं किल जनाः कथयन्ति यद् वर्षेऽस्मिन् पूर्वेषु संवत्सरेष्विव यात्राः सर्वा एव अनुष्ठास्यन्ते, अधिकन्तु कलिकातायाः कस्यैचित् सङ्गीतज्ञायै सत्यङ्कारोऽपि प्रदत्तः। प्रदेशेष्वेषु टप्सङ्गीतमश्रुतचरमेव। जनवादोऽयं याथार्थ्यम् अवगाहते चेत् गोस्वामिगञ्जेनापि न केवलं यात्रैवानेया, टप्सङ्गीतज्ञापि समानेया, तैः कस्यै तावत् टप्सङ्गीतज्ञायै सत्यङ्कारः प्रदत्तस्तद्विज्ञानार्थं चारा अपि नियुक्ताः। तस्या नाम्नि परमार्थतः परिज्ञाते कलिकातां गत्वा ततोऽपि प्रथिततरा काचन टप्गायिका अन्वेषणीया, तस्यै च प्रख्यातायै गायिकायै गानार्थं सत्यङ्कारः प्रदेयः तदर्थं यावान् अर्थोऽपेक्षिष्यते तावानेव व्ययीकरिष्यते। यतः कस्मिन्नपि विषये पुरुषत्रितयं यावत् कदापि गोस्वामिगञ्जो नन्दिपुरस्य सन्निधे परा-

भवं नाङ्गीचकार नाप्यद्यत्वेऽङ्गीकरिष्यतीत्यत्रैकमत्यमेव सर्व्वेषां गोस्वामिगञ्जनिवासिनाम्। आगामिनीं सम्भूयपूजामधिकृत्यैवं गभीरं निगूढं च मन्त्रयमाणेषु ग्रामीणधुरीणेषु त्रिषु रामचरणमण्डलः कृच्छ्रेण श्वसंस्तत्र सम्प्राप्तः, हस्तस्थं च लगुडं प्रसभं निक्षिप्य धबिति भूमावुपाविशत्। तस्य चेष्टितादिकं सन्दृश्य हीरुदत्तः सभयमपृच्छत्, भो मण्डलपोतक ! किमित्येवमुपविष्टं त्वया ? किं तावदापतितम् ?

स्फुटितप्रायेक्षणो रामचरणो महतायासेन श्वासक्रियां सम्पादयन्नुवाच--किं तावदापतितमिति पृच्छति भवान् ? किं वा नापतितम् ? हु-हु-हा किमिति व्यतीते कार्त्तिके मासि यदाहं ज्वरविकारेण समाक्रान्तस्तदैव न प्रस्थितः प्रेतपुरीम् ? किमित्येतत्प्रदर्शनायैव मम जीवितं परिरक्षितं रे हतविधे !

श्यामापदः केनारामश्च तीव्रतरदुश्चिन्ताभिभूतौ रामचरणं निरीक्षमाणौ स्थितौ। दत्तजोऽवदत्, किं नाम संवृत्तम् ? किं नाम संवृत्तम् ? सर्व्वं प्रकाशं कथय। कुत इदानीमागम्यते ?

दीर्घश्वासविकृतस्वरेण रामचरणोऽवदत्, नन्दिपुरात्। अहो अहो अन्ते तावत् नन्दिपुरात् पराभव आपतितः। हा धिग् ललाटम्। एवमुक्त्वा प्रसभं स्वललाटं करेणाजघ्ने रामचरणः। दत्तजोऽपृच्छत् किमिति ? किमिति ? किं वा कृतं नन्दिपुरवासिभिः ?

"उच्यते। तदर्थमेवागतोऽस्मि। प्रचण्डेऽस्मिन्नातपे क्रोशपरिमितं पन्थानं धावन्नेवागतोऽस्मि। ऊर्द्धशोषं शुष्कः कण्ठः, न च विनिर्गच्छति वदनकुहरतो वाणी। घटीपरिमितं पानीयम्—"

दत्तजाज्ञयाविलम्बितमेव कलसपूर्णं पानीयं पानपात्रञ्चैकं समानीतम्। रामचरणोऽप्युत्थाय प्राङ्गणस्य प्रान्ते समुपविश्य सलिलेन तेन प्राक्षालयत् पाणिपादवदनं, किञ्चिच्च जलं पपौ। ततश्च प्रोञ्छन् पाणी वदनं च समीपमुपगम्य विषादातिरेकेणावनतवदनः स्थितः।

हीरुदत्तोऽवदत्—ब्रूहीदानीं किं तावत् संवृत्तम्। मा खल्वतः परमपि सन्देह्य मारय।

रामचरणेनोक्तम्, किं संवृत्तमिति? यदसवत्य तदव सवृत्तम्। यत् खलु विशालेषु नगरेष्वपि न घटते तत् खलु नन्दिपुरे संघटितम्, ग्रामेऽस्मिन् यत् खलु केनापि स्वप्नेऽपि न सम्भावितं तदेव संवृत्तम्। तैर्हुस्कुलं प्रतिष्ठापितम्।

एतदाकर्ण्य त्रिभिरेव युगपत् पृष्टम्—तत् पुनः किम्? हुस्कुल इति को वा पदार्थः?

रामचरणोऽवदत् मयैव वा किं पूर्व्वं परिज्ञातं किं नाम हुस्कुल् इति? अद्यैव नु श्रुतं मया इञ्जिरिपाठार्था पाठशाला हुस्कुल् इत्यभिधीयते इति।

दत्तजेनोक्तम्—आम्! तैर्विद्यालयः स्थापितो ननु?

अथ किम्! अथ किम्! स एव स्थापितः! म्याष्टारश्चैकः समानीतः। इञ्जिरिपाठशालायाः शिक्षकः किल म्याष्टार इति व्यपदिश्यते। दाशुघोषस्यालिन्दे हुस्कुल स्थापितः, तत्र दशैकादशाश्छात्रा म्याष्टारेणेञ्जिरिं पाठ्यमानाः स्वयमेव प्रत्यक्षीकृता मया।

हीरुदत्तो दीर्घं विनिश्वस्य कपोलतलन्यस्तहस्तश्चिन्तयन् स्थितः। व्यतीतायां कस्याञ्चन कालकलायामपृच्छत्, अपि नाम श्रुतं त्वया कुत आगतो म्याष्टार इति?

सर्व्वैव प्रवृत्तिरुपलब्धा मया। वर्द्धमानादागतः, जात्या ब्राह्मणः, नाम्ना च हाराणचक्रवर्त्ती। पञ्चदश रूपका मासिकी वृत्तिः। वासस्थानमाहार्य्यादिकमपि च प्रदेये। सर्वैव प्रवृत्तिरुपलब्धा मया।

अवसरेऽस्मिन् बहिः कश्चन कोलाहलोऽश्रूयत। मुहूर्त्ताच्चोर्ध्वं श्रेणिशो जनाः सिंहद्वारेण प्रविशन्तोऽदृश्यन्त। पथागच्छता रामचरणेन नन्दिपुरतो गोस्वामिगञ्जस्याभूतपूर्व्वा पराभववार्त्ता सर्व्वत्रैव प्रचारिता। सर्व्वैः समागत्य तारस्वरेणोच्चावचैर्व्वनिभिरुक्तम्—हा धिक् हा धिग् नन्दिपुरत ईदृशमवमाननम्। इदानीं केन वोपायेनास्माभिरपि स्कुल संस्थाप्येत?

हीरुदत्तस्तत्रालिन्दे दण्डायमानः सञ्चाल्य हस्तावबोचत्—अपि मन्यध्वे भ्रातरः पुरुषत्रितयादनन्तरमद्य गोस्वामिगञ्जो नन्दिपुरात् पराभवं स्वीकुर्य्यात् ? न खल्वनपेतेषु प्राणेष्वेतत् सम्भवेत्। अस्माभिरपि स्थापयिष्यते विद्यालयः। कीदृशो वा विद्यालयोऽमीभिः स्थापितः ? अस्माभिस्तु ततोऽप्यतीव रममणीयतरो विद्यालयः स्थापयिष्यते। शान्ताः स्त यूयं गृहं च गच्छत। अद्यैव भोजनत ऊर्द्ध्वं विनिर्गच्छामि। कलिकातागमनार्थं लौहवर्त्म सन्नद्धमिदानीं गमनमतीव सुकरं संवृत्तम्। कलिकातां गत्वा ततोऽप्युत्कृष्टतरोऽध्यापको मयानेष्यते। तैः पञ्चदशमुद्रावृत्त्या आनीतोऽध्यापकः, अस्माभिः पञ्चविंशतिमुद्राः प्रदास्यन्ते। मया तथाविधः शिक्षक आनेष्यते यस्तेषामध्यापकमप्यध्यापयितुं प्रभवेत्। अद्य प्रभृति सप्ताहाभ्यन्तर एव ममास्मिन् मण्डपे विद्यालयं प्रतिष्ठापयिष्यामि—प्रतिष्ठापयिष्यामि—प्रतिष्ठापयिष्यामि—त्रिः सत्यं कृतम्। इदानीं गच्छत यूयं गृहान्, निर्व्वर्त्तयत च स्नानाहारादिकम्।

"जयति गोस्वामिगञ्जः, जयति गोस्वामिगञ्जः, जयति हीरुदत्तः" इति सोल्लासं चीत्कुर्वन्तस्तेऽपि जनाः प्रस्थिताः।

## २

कलिकातातोऽध्यापकं नियोज्य हीरुदत्तश्चतुर्थे दिवसे ग्रामं प्रत्यावृत्तः।

शिक्षकस्य नाम तावद्व्रजगोपालमित्रः, वयस्त्रिंशद्वर्षाणि, खर्व्वोऽयमाकृत्या कृशश्च कायेन, भाषणञ्चास्यातीव मधुरम्। आङ्गलभाषायां लेखने वाग्मितायां छात्राणां चाध्यापनेऽस्य विलक्षणं सामर्थ्यमित्यपि श्रूयते। तथा खल्वनुशीलितानेनाङ्गलभाषा यथा जनैः संलपन्नप्यन्तरान्तराङ्गलशब्दान् प्रयुङ्क्ते अज्ञानाञ्च सौकर्यार्थं पुनरपि तान् बङ्गभाषया बोधयति। एवं किल तेनोच्यते, पूर्वं किल पितुर्जीवितकाले कदाचित् कलिकातायां भ्रमौस्तस्यास्तद्देशो विचरन्नसौ युरोपीयमेकं साक्षात्कृतवान्। ततश्च प्रवृत्ता तयोः सङ्कथा। स युरोपीयोऽसौ तस्याङ्गलभाषामयीं वाचो-

युक्तिं समाकर्ण्य वङ्गाधिपस्य ( लाटसाहेवस्य ) सविधे तदुपवर्णितवान् । वङ्गाधिपोऽपि माष्टारमहोदयमाहूय तस्मै डेपुटी कलेक्टर ( Deputy Collector ) पदं प्रदातुमैच्छत् । परं तदानीं जीवति स्म तस्य पिता, स्वजनानां वृत्तिकल्पनं तदायत्तमेवासीत्, अस्य तु लेशतोऽपि तद्गता चिन्ता नासीदिति सप्रश्रयं प्रत्याख्यातं तत् पदं तेन । अद्य तावदर्थाभाव-ग्रस्तस्य तस्य पञ्चविंशतिरूपकवृत्तिः श्ववृत्तिरपि स्वीकार्य्यत्वमापतिता । अवितथं किलोच्यते 'पुरुषस्य भाग्यमि'ति । अध्यापकमहोदयस्य वद्नारविन्दादीदृशानि वचनान्युपश्रुत्य प्रत्यक्षीकृत्य च तस्य आङ्ग्लोचिताचारादिकं ग्रामीणाः सर्वे प्रमुग्धा एव संवृत्ताः ।

यथा हीरुदत्तेन प्रतिज्ञातं तथैव परेद्यव्येव विद्यालयः स्थापितः । आसन्नविंशांश्च छात्रान् गृहीत्वा शिक्षकमहोदय उपक्रान्तवानध्यापनम् । कलिकातातस्तेन शिलाफलक-लेखनी-मरेमहोदयप्रणीतपाठ्यपुस्तकानि च सुबहूनि ( दत्तजस्यैव व्ययेन ) क्रीत्वानीतानि, छात्राणामुत्साहसन्धुक्षणार्थं च तानि तेभ्यो विनैव मूल्यं वितीर्णानि ।

गोस्वामिगञ्जवासिभिः साकं नन्दिपुरनिवासिनां रथ्यायां वा विपण्यां वा यत्र कुत्रचित् साक्षात्कारः समजनि तत्रैव ग्रामयोरुभयोः शिक्षकमधिकृत्य प्रावर्त्ततालोचनम् । गोस्वामिगञ्जोऽवदत्, वर्द्धमानस्य माष्टारोऽपि माष्टारः ! किं वा जानाति सः ? किमिव वा सोऽध्यापयेत् ? नन्दिपुरोऽवदत्, भवतु नामास्माकं शिक्षकस्य वर्द्धमानोऽभिजनः, तेन तु कलिकातायामेव विहितं विद्यार्जनम् । किमासीत् तेषां पाठकाले वर्द्धमान आङ्लविद्यालयः ? तदानीं कलिकातां गत्वैवाङ्गलभाषाध्ययनमावश्यकमासीत् ।

यथाकालं ग्रामयोरुभयोः प्रारब्धः पूजोत्सवः । उभावेव ग्रामावुभयोरेव ग्रामयोरधिवासिनः प्रतिमादर्शनार्थं प्रसादभक्षणार्थं यात्रावलोकनार्थं सङ्गीतश्रवणार्थं च निमन्त्रितवन्तौ । प्रसङ्गे चामुष्मिन् शिक्षकयोरुभयोः सञ्जातः साक्षात्कारः, उभौ च पूर्वत एव परस्परं परिचिताविंत्यपि सभायां प्रकाश्यतां गतम् ।

पूजावसाने च गोस्वामिगञ्जो वार्त्तामेकामुपश्रुत्य भृशमुद्विविजे। नन्दिपुरस्य माष्टारेण किलोक्तम्—अहो ! सोऽयं वेजा तेषां माष्टारः सम्पन्नो ननु। न खलु मया परिज्ञातमिदं पूर्वम्। स तावन्महामूर्खः। बाल्ये हि कलिकातायां विद्यालये समश्रेणीभुक्तावेवास्वावाम्। आङ्गल-भाषाया द्वितीय-पुस्तकपठनावसर एव तेन परित्यक्ता पाठशाला। तत ऊर्द्ध्वं नैवाधीतानेनाङ्गलभाषा। कलिकातायां बडबाजारपल्ल्यां कस्यचन वणिज आयव्ययादिलेखनकर्मणि नियुक्तोऽयमासीत्। मासिकी वृत्ति-श्चास्य सप्त रूपकाः। व्यतीतेऽपि वर्षे कलिकातायामनेन सह साक्षात्-कारो मे सञ्जातः। तदानीमपि तदेव कर्म कुर्वन्नासीत्।

गोस्वामिगञ्जवासिनो व्रजमाष्टारमुपगम्यापृच्छन्—किमिदं शृणुमो वयम् ? इति।

समाकर्ण्यैव प्रश्नमिममुच्चैरहसद् व्रजमाष्टारः। अवदच्च अवितथं खलूच्यते कलिकाल इति। द्वितीयपुस्तकपठनकाले मया परित्यक्ता पाठशालाहोस्विदमुनैव परित्यक्ता ? अपि न ज्ञायते युष्माभिः किं तदानीं संवृत्तमिति ? शिक्षकः श्रेण्यां प्रतिदिनमेव प्रश्नानपृच्छच्छात्रान्, स तु कदापि नैव प्रबभूव तानुत्तरयितुम्। अथैकदाध्यापकस्तं कोश्चेनम् (प्रश्नम्) एकमपृच्छत्, स यथापूर्वं नैवालमासीत् आन्सारं कर्त्तुम् (उत्तरं प्रदातुम्)। पृष्टमात्रेणैव मया प्रदत्तं यथार्थं प्रत्युत्तरम्। ततश्च शिक्षकेणाहमेवमुक्तः, कर्णे ताडयैनमिति। मया मर्दित एव कर्णे तस्य मुखमक्षिणी च ताम्राणि सञ्जातानि। उक्तञ्च तेन, अहं तावद् ब्राह्मण-तनयः। कायस्थेन नामानेन दत्तो मे कर्णे हस्तः। अहो स्पर्द्धा ! एवमव-मानितेन तेनैव परित्यक्ता पाठशाला। अहं ततः परमपि पञ्चवाणि वर्षाणि तत्रैव विद्यालयेऽधीत्य सर्वथा नायकत्वमुपगतस्ततो विनिर्गतः।"

ततश्च गोस्वामिगञ्जवासिनो नन्दिपुरेणाभिव्यक्तायाः किंवदन्त्या अस्याः प्रतिवादमकुर्वन्। अन्ततश्च हाराणमाष्टारेणोक्तं—विद्यालये यस्य खलु शिक्षकस्य सविधेऽस्माभिरधीतं जीवत्येव तत्रभवानद्यापि। ततो युष्मासु-

प्रधानं पुरुषद्वयं मया साकम् आगच्छतु तत्समीपम्, तं च पृष्ट्वा परीक्ष्यताम् कस्य तावद् वचनं सत्यं कस्य चानृतम् इति।

एतच्छ्रुत्वा व्रजमाष्टारेणोच्चैर्विहस्योक्तम्, अहो! स किलैवं वदति! तत् सर्व्वमामूलं फल्सो—मिथ्या। तस्य किल शिक्षकस्य समीपं नीत्वा स्ववचनस्य याथार्थ्यं प्रतिपादयिष्यति! स किमद्यापि जीवति? परारि किल स हेभेनं—स्वर्गलोकं प्रस्थितः। तस्य श्राद्धोत्सवे अहम् इन्भाइट्—निमन्त्रित आसम्, सम्यक् स्मर्य्यते मया। स किल मय्यतिमात्रं स्निह्यति स्म। यत् सत्यं सन्इकोयेल् —पुत्रनिर्विशेषम्। अद्यापि तस्य पुत्राः आर्य्य वेजो इति शृण्वन्तः इग्नोरेण्ट—अज्ञाना भवन्ति।

शिक्षकयोरुभयोः परस्परं प्रति तीव्रापवादप्रयोगस्येदम् एव फलं सम्पन्नं यदुभावेव ग्रामौ स्वस्वशिक्षकस्यानितरसाधारणं पाण्डित्यं प्रति संशयालू सञ्जातौ। अन्ततश्चैतदेव निर्णीतं यत् कस्मिन्नपि साधारणे स्थले उभयोर्विद्याविचारो भवतु, द्रष्टव्यं तावत् कोऽवापरं पराजेतुं प्रभवेत्।

ग्रामद्वयस्य मुख्यैः संमन्त्र्य निर्द्धारितं यद् ग्रामयोः सीमरेखावस्थितो यो न्यग्रोधपादपो वर्त्तते तस्यैवाधस्ताद् विचारसभा भविष्यतीति। परं ग्रामयोरुभयोरपि जनाः सर्वथा अनभिज्ञा आङ्ग्लभाषायाम्। अतो यथा जयपराजयविषये लेशतोऽपि संशयो न स्यात्तदर्थं कस्यापि सरलाया विचारप्रणाल्या निर्धारणमावश्यकीभूतम्। उभयोरेव ग्रामयोः सम्मत्या स्थिरीकृतं शिक्षकयोः प्रत्येकमपरं कस्याप्याङ्ग्लशब्दस्यार्थं पृच्छेत्, तेन च तस्यार्थो वक्तव्यः। यदुभावेव प्रभवेयातामर्थं बोधयितुं तर्हि तुल्यावेव तौ। यद्येकोऽपरं पराजयेत तर्हि स एव लभेत विजयपताकाम्।

विचारदिनं तावदागामिनी वैशाखी पूर्णिमा इति निर्धारितम्। स्थानम्—पूर्वोक्तवटवृक्षमूलम्। समयः—सूर्य्यास्तमयकालः।

३

निर्द्धारितदिवसे सूर्य्यास्तगमनात् पूर्वं गोस्वामिगञ्जमुख्या मार्दङ्गिक-पाणविकादिविविधवाद्यकरैरनुगम्यमाना व्रजमाष्टारेण साकं तत्पादपाभिमुखं प्रस्थिताः। तेषु चैकेन विशालं वाद्यशृङ्गमेकं गृहीत्वा गतम्—भगवतः कारुण्येन तेषां चेज्जयस्तर्हि वाद्यवादनपुरःसरं स्वीयमानन्दं प्रकटय्य प्रत्यावर्त्तनीयम् इति। पथि गच्छद्भिश्च व्रजमाष्टारस्य पार्श्ववर्त्तिभिरुक्तम्—"ननु म्याष्टार, कच्चित् प्रभविष्यसि सम्मानमस्माकं परिरक्षितुम्? विशेषतो विचिन्त्यातिमात्रं कठिनं किमपि स्थिरीकुरु यथा ह्लाराणः कथमपि तस्यार्थं वदितुं नालं स्यात्।" व्रजमहोदयेनोक्तम् "किमिति चिन्त्यते भवद्भिः। दृश्यतां तावत् किं मया विधीयते। तथाविधं कोश्चेनं (प्रश्नम) प्रक्ष्यामि यस्य श्रवणमात्रत एव ह्लाराणमाष्टारः प्रतिपत्तिमूढः स्यात्—दूरे तावद् वार्त्ताविबोधस्य।" दत्तजोऽवदत् "अङ्ग भ्रातः, अद्य चेदस्माकं सम्मानमक्षुण्णं परिरक्षितुं प्रभवसि तर्हि पञ्चभिर्मुद्राभिस्तव वेतनं वर्द्धयिष्यामि" इति। यद्यपि केनापि विस्पष्टं नोक्तं, तथापि सुविज्ञातमिदं व्रजमाष्टारेण यदद्य चेत् तस्य पराजयः सङ्घटेत तर्हि श्वोभूतेऽवश्यमेव तेन ग्राममिमं परित्यज्यान्यत्र गन्तव्यमिति।

सवितुरस्तगमनात् किञ्चित् पूर्व्वं गोस्वामिगञ्जीयाः सम्प्राप्ता न्यग्रोध-पादपमूलम्। कटकुथादीनां वाहकैः पूर्व्वत एव तत् सर्व्वं समानीय स्वग्रामसीमरेखासन्निधावास्तीर्णम्। विदूरे शलभश्रेणय इव नन्दिपुर-निवासिनः समागच्छन्तो दृष्टाः। तैरपि साकं कटकुथादीनि मृदङ्ग-पणवादीनि समागच्छन्ति।

क्रमेण च नन्दिपुरः समागत्य स्वसीम्नः समीपे कुथादि समास्तीर्य्य समुपविष्टः। ग्रामयोरुभयोर्नेतृस्थानीयाः पुरत उपविष्टाः, अन्तरा च द्वित्रकिष्कुपरिमिता स्थली।

इदानीं कस्तावदध्यापकः प्रथममर्थं पृच्छेदित्येव विचारपदवीमवातरत्। उभावेव ग्रामौ प्राथमिकप्रश्नेऽस्माकमेवाधिकारः इति निरबान्धाम्। एकतरोऽपि पक्षः स्वाधिकारं परित्यक्तुं नैच्छत्। अन्ततश्च वृद्धैर्मीमांसितम्, हीरुदत्तमहोदयस्तावद् यष्टिमेकां विघूर्ण्योत्क्षिपतु, यद्ग्रामाभिमुखशिराः सा यष्टिर्निपतेत् तस्यैव ग्रामस्य प्रथमप्रश्नेऽधिकार इति।

मदीया यष्टिर्गृह्यताम्, मदीया यष्टिर्गृह्यताम्, इत्यहमहमिकया ग्रामयोरुभयोर्बहुभिरेव पुरः प्रधावितम्। या च यष्टिर्हस्ताभ्यासेऽधिगता तामेव गृहीत्वा हीरुदत्तो बलवद्विघूर्ण्योदक्षिपत्।

क्रमेण च यष्टिरवतीर्य्य भूमौ न्यपतत्। सर्वैश्च दृष्टम्—तस्य शिरस्तावन्नन्दिपुराभिमुखे वर्त्तत एव।

तद्दृष्ट्वा नन्दिपुरेणोल्लासेन सिंहनादः कृतः, गोस्वामिगञ्जीयानां च मुखानि म्लानिमभजन्। सर्व एव साग्रहं विचारफलं प्रतीक्षाञ्चक्रिरे।

ततश्च नन्दिपुरीयो हाराणाध्यापकः स्फीतवक्षाः पुरत आगत्य स्थितः। व्रजमाष्टारोऽप्यासनादुत्थितवान्, तस्य वक्षो दुरदुरायते स्म, परं प्रयत्नातिरेकेण संस्तम्भितवानसौ सर्वां विक्रियाम्।

तदा हाराणाध्यापकेनोक्तम्, भवतु, उच्यतां तावत् "Horns of a dilemma" इत्यस्य को वार्थः ?

दिष्ट्या तावद् व्रजशिक्षकस्य विज्ञातमासीत् कूटप्रश्नस्यास्योत्तरम्। स हि वक्षः स्फीततरं कृत्वा हासविभूषितोष्ठोऽवदत् "उभयतःपाशा रज्जुः।' सम्यग् न वा ?"

"अहो पारितं पारितमस्मदीयेनाध्यापकेन पारितम्" इत्युक्त्वा गोस्वामिगञ्जेन प्रारब्धस्तुमुलः कोलाहलः। दलपतयस्तु कथं कथमपि तान् निवारितवन्तः। अधुना व्रजमहोदयस्य प्रश्नस्य वारः समागतः।

व्रजमहोदयः स्वासनं परित्यज्योत्थायावदत्—श्रूयतां हाराणमहोदय। न खल्वहं विषमं किमपि त्वां प्रष्टुमिच्छामि, प्रत्युतातिमात्रं सरलमेव किञ्चित् पृच्छामि। ज्ञातमेव भवता यत् प्रदेशेऽस्मिन् त्वमहञ्च द्वावेवाङ्ग्ल-

भाषाभिज्ञौ, विषमस्य कस्यचिच्छब्दस्यार्थं पृष्ट्वा त्वां मूर्खं प्रतिपादयितुं नेच्छामि। एतेन कदाचिद् गोस्वामिगञ्जो मह्यं कुप्येत्, तथापि स्वयमाङ्ग्लभाषाभिज्ञो भूत्वापरस्याङ्ग्लभाषाविदः प्रकाश्यसभायां कथं नामावमानं विदध्याम्। भवतु, अश्रुतमस्यैकस्य शब्दस्यार्थः पृच्छयते, सम्यग उच्चैः प्रत्युत्तरं दीयतां यथा ग्रामयोरुभयोः सर्व एव समाकर्णयेयुः। भवतु, उच्यतां तावदस्यार्थः—अवश्यमेव विज्ञायते त्वया—उच्यतां तावदेतस्यार्थः—"I do not know इति।"

हाराणाध्यापकेनोच्चैरुक्तम्—"नाहं जाने" इति। श्रवणसरणिमापतितमात्र एवास्मिन् वाक्ये विवर्णभावं प्रपेदिरे नन्दिपुरीयाणां सर्वेषां मुखानि। तस्मिन्नेव मुहूर्त्ते गोस्वामिगञ्जीया युगपदुत्थाय महता वेगेन नृत्यन्त उच्चैरारटितवन्तः—अहो न जानाति, नन्दिपुरो न जानाति, पराभूतो नन्दिपुर इति।

हाराणमाथुरोऽतीव विपन्न इव किमपि वक्तुं प्रायतत, परं तदात्व एव गोस्वामिगञ्जस्य मृदङ्गपटहपणवशृङ्गादीनि युगपज्जगर्जुः। सुदूरं किलापास्ता तद्वचनस्य परश्रुतिगोचरत्वसम्भावना।

गोस्वामिगञ्जनिवासिनः कतिचन बलिष्ठाः सहर्षं नृत्यन्तः पुरत आगच्छन्। तेषां चैकेन व्रजशिक्षकं स्कन्धं समारोप्य ग्रामाभिमुखं प्रस्थितम्। सर्वे च तं परिवृत्य नृत्यन्तो वाद्यभाण्डैः साकं ग्रामं प्रत्यागताः।

अन्येद्युः श्रुतम्, हाराणमहोदयेन परित्यज्य नन्दिपुरमन्यत्र गतमिति। निरुद्धा च तत्रत्या पाठशाला। गोस्वामिगञ्जीयव्रजशिक्षकश्चाप्रतिहतप्रभावेणाध्यापनं ग्रामस्थानां च सर्वेषामपत्यनिर्विशेषं दुग्धनवनीतादिभोजनं कुर्वन्नास्त।

---

# भासस्य सुभाषितानि

( पञ्चरात्रतः )

१। शुष्केणैकेन वृक्षेण वनं पुष्पितपादपम् ।
कुलं चारित्रहीनेन पुरुषेणेव दह्यते ॥ १।१२ ॥

२। एते वातोद्धता वंशा दह्यमाना मखाग्निना ।
भाग्यानीव मनुष्याणामुन्नमन्ति नमन्ति च ॥ १।१३ ॥

३। लतया सक्तया स्कन्धे शुष्कया वेष्टितस्तरुः ।
निविष्टो दुष्कुले साधुः स्त्रीदोषेणेव दह्यते ॥ १।१४ ॥

४। हन्त सत्पुरुषरोष इव प्रशान्तो भगवान् हुताशनः—
एतदग्नेर्बलं नष्टमिन्धनानां परिक्षयात् ।
दानशक्तिरिवार्यस्य विभवानां परिक्षयात् ॥ १।१७ ॥

५। अतीत्य बन्धूनवलङ्घ्य मित्राण्याचार्यमागच्छति शिष्यदोषः ।
बालं ह्यपत्यं गुरवे प्रदातुर्नैवापराधोऽस्ति पितुर्न मातुः ॥१।२१॥

६। बाणाधीना क्षत्रियाणां समृद्धिः पुत्रापेक्षी वञ्च्यते तन्निधाता ।
विप्रोत्सङ्गे वित्तमावर्ज्य सर्वं राज्ञा देयं चापमात्रं सुतेभ्यः ॥१।२४॥

७। नोत्सहन्ते महात्मानो ह्यात्मानमपस्तोतुम् ।

८। अन्यत् प्रस्तुतम् अन्यदापतितम् ।

९। एष इदानीं मार्गेणारब्धः । सान्त्वं हि नाम दुर्विनीतानामौषधम् ।

१०। भेदाः परस्परगता हि महाकुलानां
धर्माधिकारवचनेषु शमीभवन्ति ॥ १।४१ ॥

११। ऊषरेष्वपि सस्यं स्याद् यत्र राजा युधिष्ठिरः ॥ १।४६ ॥

१२। अच्छलो धर्मः ।

१३। कथं पण्डित ! कुलेषु भ्रान्तानां बालचापलम् ।
नाभिजानन्ति वत्सानां शृङ्गस्थानानि गोवृषाः ॥१।५३॥

१४। एकोदकत्वं खलु नाम लोके मनस्विनां कम्पयते मनांसि ॥२।१॥

१५। अकाले स्वस्थवाक्यं मन्युमुत्पादयति।

१६। ताडितस्य हि योधस्य श्लाघनीयेन कर्मणा।
अकालान्तरिता पूजा नाशयत्येव वेदनाम् ॥ २।२८ ॥

१७। अकारणं रूपमकारणं कुलं महत्सु नीचेषु च कर्म शोभते ॥२।३३

१८। नीचैरप्यभिभाष्यन्ते नामभिः क्षत्रियान्वयाः।

१९। सहजौ मे प्रहरणं भुजौ पीनांसकोमलौ।
तावाश्रित्य प्रयुध्येयं दुर्बलैर्गृह्यते धनुः ॥ २।५५ ॥

२०। मिथ्याप्रशंसा खलु नाम कष्टा येषां तु मिथ्यावचनेषु भक्तिः।
अहं हि युद्धाश्रयमुच्यमानो वाचानुवर्त्ती हृदयेन लज्जे ॥२।६०॥

२१। सति च कुलविरोधे नापराध्यन्ति बालाः ॥ ३।४ ॥

२२। रूपेण स्त्रियः कथ्यन्ते, पराक्रमेण तु पुरुषाः।

२३। नास्त्यन्ये बलवाल्लोँके सर्वमिष्टेषु कथ्यते ॥ ३।१३ ॥

---

## कुण्डलीविचारः

१८१८।६।६।३३।३३।२०

जाताहः

| | | |
|---|---|---|
| १ | ४ | १८ |
| १९ | ३० | १५ |
| ५४ | २४ | २८ |
| २४ | १० | २९ |
| २९ | १ | १० |

| | | |
|---|---|---|
| लं० च५<br>गुलिक<br>म ५ होरा | | रा २३ |
| | | |
| के १०<br>शु ११<br>बु १२ | र १५<br>श १६ वक्र | गु १७ |

पराहः

| | | |
|---|---|---|
| २ | ५ | १९ |
| २० | ३३ | १४ |
| ५७ | ५१ | ३९ |
| ७ | २ | १२ |
| २७ | ३ | ११ |

विक्रमाधिपस्य शशिनस्तुङ्गराशौ लग्ने सिंहनवांशेऽवस्थित्या, तत्र च लग्नाधिपशुक्रस्य पूर्णेक्षणतो जातकोऽयं पराक्रान्तः, अहार्य्यनिश्चयः,

सरलान्तःकरणश्च। तथा गृहे कर्त्तृत्वमस्य भविता, सर्वत्रानुगतजन-सम्बन्धश्च। यदि किञ्चिद् मनसि लग्नं स्यात् तदा तत् परिहर्तुमशक्य-मिव, प्रभुभावश्चास्य साहजिकः, न हि कश्चिदस्य पराक्रमहानिं कर्त्तुं प्रभवेत्। तथा स्वप्रभावेणापि प्राप्तं भाग्यफलं वर्धयितुं क्षमः स्यात्।

सहजषष्ठाधिपयोः परस्परदृष्ट्या लग्नषष्ठाधिपयोः स्वाभाविकशत्रुता-वशाच्च सहोदरामूलतः, तत्पतिमूलतः, भ्रातृमूलतश्च सदा दुःखानि चिन्तनीयानि, तथा सहजाधिपस्याष्टमे कुजदृष्ट्या सहजाष्टमे च राहोः स्थित्या अष्टोत्तर्य्यां बुधदशायां विंशोत्तर्य्यां राहुदशायाञ्च युगपदुप-स्थितायां सत्यां पञ्चविंशतिवर्षमध्ये सहजानां बहुशो दुःखं हानिर्वा। सहोदरैका चावशिष्टा इति दृश्यते।

धनपञ्चमाधिपस्य बुधस्य तुङ्गर्क्षे कन्यायां स्थित्या द्वादशांशकुण्डल्यां तत्र लग्नस्थित्या तद्दशमे मिथुने तादृशबुधस्य स्थित्या सहजाधिपस्य च तुङ्गराशौ स्थित्या, अष्टोत्तर्य्यां बुधदशायां सहजधनसम्बन्धः सूचितः व्ययहेतुकश्च। एवमपि धने सगुलिकस्य होरालग्नसहितस्य कुजस्य स्थित्या तत्र च कर्म्मस्थराहोः पूर्णदृष्ट्या चारवशात् तत्र राहुसम्बन्धेन तथा तत्सम्बन्धिग्रहस्य गुरोर्दशायां व्यवसायद्वारेण वञ्चितो वा स्याद्द्वादमूलतो वा स्यात् सञ्चितधनहानिः। एवमपि तादृशकुजस्य सप्तम-व्ययाधिपत्वात् तद्दशावसानकाले शुक्रान्तरे विवाहः सूचितः। लग्नाधिप-शुक्रस्य लग्नात् सप्तमे स्थित्या पत्नीं सुखयितुमिच्छन्नपि अशक्यतया-न्तरान्तरा मर्म्माहतो भविता। तथा चत्वारिंशद्वर्षमध्ये बुधदशावसान-समये सन्तानमूलतः पत्नीवियोगजं दुःखं चिन्तनीयं भवति स्वस्यापि च रक्तपातोदरामयादिका पीडा। भवति चेत् संसारसुखविच्युतिस्तदा धर्म्म्ये कर्मणि वित्तनियोगः सम्भवेत्, अन्यथा तदनन्तरं रुग्णायाः पुनः पुनः क्लिष्टायाः साहचर्य्येण शनिदशायां संसारसुखहानिः सन्ततिजन्म-निवृत्तिश्च।

तादृशकुजस्याष्टमदृष्ट्या तत्र चाष्टमाधिपदृष्ट्या कुजदशावसानकाले

जननीतो दुःखम्, स्वस्यापि रक्तपातादिकं चिन्तनीयम्। एवमपि चारेण धनुषि मिथुने वा राहोः शनैश्चरस्य तथा तयोर्यौगपद्येन वा कुजस्यापि तत्काले एव तादृशि सम्बन्धे समुत्पन्ने मातृतो भ्रातृतश्चानुरूपः क्लेशः सम्भाव्यः। सुखराशौ सिंहे निधनाधिपस्य गुरोः स्थितेस्तस्य केतुसाहचर्य्याद् राहुदृष्ट्या च चारेण गुरोः स्थितिदृष्टिसम्बन्धवशात् सहजाया दुःखम्। एवं राहुचारकाले गुरोः पूर्णदृष्टिस्थितिसम्बन्धेन तथा जाताया मूलतो जामात्रादिमूलतश्च दुःखं कदापि विशेषेण। एवमपि तदा ज्येष्ठस्यापि भ्रातुर्दुःखम्, तत्सन्ततेर्वा तथा दशमस्थराहोस्तादृशे सिंहे जन्मनि पूर्णदृष्ट्या चारवशात् पुनः सम्बन्धे पितुर्ज्येष्ठसोदरस्य वा उदरामयादितो दुःखं चिन्त्यं भवति।

पञ्चमे बुधस्य तुङ्गराशौ स्थित्या तत्र कुजस्य पूर्णेक्षणतस्तद्दशायां विद्याशिक्षायां बाधा दृश्यते, पश्चाद् बुधदशायामन्यदा च विद्यालोचना-प्रवृत्तिः सार्व्वकालिकी, एवं विद्वान् इति ख्यातिरपि बुधदशायां भविता। तथा शिल्पविद्यायामर्थनीतौ च योग्यता दृश्यते, भक्तिश्चास्य विशेषेण विष्णुदेवतायाम्, एवं मीमांसक इति ख्यातिर्भवति। पुत्रहेतोः पुनः पुनर्दुःखञ्च भवति जातकस्य, कदाचिद्बुधदशावसाने द्वाचत्वारिंशवर्षे यावद् वञ्चनामूलतो धनविशेषनाशः। आकस्मिकी दुःखसन्ततिस्तथा सन्ततिदुःखञ्च सूच्येते। षष्ठे रविशनैश्चरयोरेकत्र स्थित्या कर्म्मसु दुःखं शनिदशायां कर्म्मच्युतिश्च, किन्तु चारवशात् शनेरुपस्थित्या पितृधनाधिकारः सूचितः। एवं शनिदशायां संसार-सुखहानिरपि चिन्तनीया भवति। रवेः सुखाधिपत्वात् सुखराशौ केतुगुर्व्वोरवस्थित्या सांसारिकं सुखं सर्व्वदा दुःखसंयुक्तमनुभवनीयं भवति। ततश्च ऊनत्रिंशतो वर्षत्रयं यावद् बहुधा दुःखं भविष्यति, एवं रिपौ पापद्वयस्य स्थित्या शत्रूणां विशेषेण हानिः, राजदण्डश्च भवति। तथा लग्नाधिपतेः सप्तमस्थितस्य शुक्रस्य व्यये तयोः स्थित्या पत्नीमूलतः, शत्रुमूलतः, ज्ञातिमूलतश्च व्ययविशेषः कायजदुःखविशेषश्च शुक्रबुधयो

रविबुधयोर्वा दशान्तरे भविता। फलान्येतानि च तुलायां वृश्चिकर्क्षे शनिचारवशात् शनिमहादशायां रविशुक्रकुजानामन्तर्भावे च द्रष्टव्यानि।

सप्तमे कुजर्क्षे शुक्रस्थित्या पत्नी चास्य सुन्दरी सुनयना च, तथा तदधिपस्य कुजस्य धनराशाववस्थित्या धनभाग्यहेतुर्भविष्यति। यद्यपि सप्तमे लग्नेशस्थित्या पत्नीमनुकूलयितुं चेष्टेत तथापि तृप्तिं जनयितुमशक्तो भवेत्।

अष्टमे गुरुक्षेत्रे गुरोः पूर्णेक्षणतस्तथा कुजशनिभ्यां पूर्णदृष्ट्या च विंशोत्तर्य्यां गुरुदशायां शन्यन्तरे गुरुजनेषु, कुजदशायां शन्यन्तरे भ्रातृभगिनीमूलतो दुःखम्, स्वस्यापि उदरभङ्गादिकृतं ज्वरादिकृतं दुःखम्, शनिदशायां गुरुकुजयोरन्तरे बहुधा दुःखम्, पत्नीमूलतः पुत्रस्थानमूलतश्च तत्। तथा गुरुदशायां कुजान्तरे आत्मनो दुःखातिरेको व्याधितोऽपि विचिन्त्यः। एवमष्टमे शुभक्षेत्रे गुरुदृष्ट्या ग्रहणीरोगतस्तीर्थभूमौ ज्ञानतो देहत्यागो भविष्यति, तथा त्रयाणां मृत्युगृहसम्बन्धवशाद् गुलिकहोराभ्यां धनगृहतः कुजस्याष्टमगृहदृष्ट्या च, कुजदशायां धनहेतोर्विषादिमूलत आघातमूलतोऽपि दुःखं चिन्त्यं, विशेषेण चिन्त्यं भवति—सुतस्य पतनतो दुःखम्, गुरुदशायां कुजान्तरे पत्नीगर्भच्युतिर्वा। सा च अन्यसुतदुःखसहकृता।

धर्म्मकर्म्माधिपशनैश्चरस्य विशेषबलवतो रिपुगृहसम्पर्काद् बहुशः पितृशत्रुहानिः पितुः प्रतिष्ठा, अधिकारविशेषश्च सूचितः। स्वस्यापि च पितृपुण्यप्रभावेण बहुशत्रूणां ज्ञातीनाञ्च विशेषेण हानिः सूचिता। किन्तु वार्द्धक्ये दुःखं भवति। भाग्याधिपस्य शनेर्बलाधिक्यात्तद्दशायाम् अभिनिवेशो भवेत् किन्तु चरराशौ रिपौ स्थित्या असाफल्यमपि विभाव्यम्। कर्म्मणि मूलत्रिकोणे राहोरवस्थित्या बहूनां कर्म्मणामनुष्ठातृत्वं कर्म्मक्षेत्रे प्रभुत्वं स्थैर्य्यञ्च सूच्यते, तथा स्वदेशमपेक्ष्य विदेशे ख्यातिः प्रतिपन्ना, कर्म्मक्षेत्रे म्लेच्छसहकृतत्वञ्च। केतुयुक्तस्य गुरोः कर्म्मदृष्ट्या तद्दशायां केतूनामन्तरे गुरुजनेषु क्लेशः पितृधनस्य हानिः स्वस्याप्युदरामयादिजा पीडा, बुद्धिवैपरीत्यम्, अकारणवादमूलतो राजद्वारे व्ययाधिक्यम। तदानीं

सर्व्वथा क्लिष्टश्च भविता। व्ययाधिपकुजस्य धनस्थित्या धनान्यधिकृत्य बहूनि दुःखानि चिन्त्यानि, एवं सन्ततिमूलतः पत्नीमूलतश्च क्लिष्टः व्यथितश्च भविता, तथा तादृशकुजस्वभावात् धनहेतुको वादो वृथातर्कप्रवणता च भवति। जातकस्य पौर्व्वदेहिकं कर्म्म चात्र द्वादशाधिपाब्धस्थानतः पत्नीपुत्रभ्रातृषु चिन्तनीयम्।

अथ कारककुण्डलीफलविचारः

कारकांशे मिथुने शनैश्चरस्थित्या कण्डूत्या स्फोटकादिभ्यश्च कायपीडा तथा शनिदशायां वातपीडादुःखं दीर्घकालिकं भवति। कर्म्मणि तपसि वा दृढाभिनिविष्टत्वं पितृपक्षानुसारिता चास्य भवति। तत्र नवांशकुण्डल्यां लग्ने मेषराशौ केतुग्रहस्थित्या पञ्चविंशतिवर्षमध्ये सहजसुखहानिः सूचिता। तथा तत्र पञ्चमे शशिशशिजगुरूणां रविक्षेत्रे एकत्रावस्थानाद्द् बुधगुरुदशायाम्, ग्रन्थलेखकत्वं ततश्च यशोलाभः सुलेखक इति ख्यातिरपि भवति। सहजे शनैश्चरस्थित्या तत्र रविदृष्ट्या शनिदशायां भ्रातृसम्बन्धशून्यो भविता, तथा तादृशशनिसम्पर्केण पञ्चमस्थग्रहाणां प्रभावेण च पुत्राल्पता भ्रात्रादिपुत्रेण पुत्रिता वा। चरकारकग्रहाणां कुण्डल्याम् आत्मकारकात् पञ्चमे राहुकुजयोः स्थित्या तदधिपस्य शुक्रस्य नीचनवांशे सुखराशौ स्थित्या पुत्रात् सुखहानिः। लग्नकुण्डल्यां पञ्चमे स्थितं बुधं प्रति कुजदृष्ट्या एवं चन्द्रतः पञ्चमेऽपि तथात्वात् पुनरपि गुरोः पञ्चमे तथैव कुजशनैश्चरयोः पूर्णदृष्ट्या जातपुत्राणां हानिरनुत्पत्तिर्वा भवति इति पुत्रभावफलम्।

पत्नीकारककुजस्य शुक्रर्क्षे राहुसम्बन्धेन तस्य च कुजस्य स्थिरभ्रातृकारकत्वेन भ्रातृपत्नीहानिः कुजाक्रान्तराशौ शनिचारेण। एवं यदा यदा आत्मकारकाश्रितमिथुने शनिचारस्तदा दूरभ्रमणादिकम्, पत्नीकारकाश्रिततुलायां राहुचारेण विवाहसम्बन्धसूचना, शनिचारेण पत्नीदुःखं पुत्रमूलकं सहजदुःखमपि। धनुषि शनिचारे पुत्रहानिः।

भज इत्येष वै धातुः सेवायां परिकीर्त्तितः ।

तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी ॥ इति । ]

अथ भज इति वर्णद्वयस्यैव नास्ति पूज्यता सेवार्थत्वं कथमिति नाशङ्कनीयम् ।

भकारं शृणु चार्व्वङ्गि स्वयं परमकुण्डली ।

महामोक्षप्रदं वर्णं तरुणादित्यसम्प्रभम् ॥

पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा ॥ इति ।

जकारं परमेशानि या स्वयं मध्यकुण्डली ।

शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम् ॥

पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ।

त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ॥

इति च स्वरूपनिर्णायक-कामधेनुतन्त्रीये देवमयतादिदर्शनादिति ।

भक्तिस्तावदयमेव ममाराध्य इति विशुद्धाभिसन्धानमिति । विशुद्धत्वञ्च धर्म्माधर्म्मोत्पत्तिविनाशहेतुत्वमिति । तच्चोत्पत्तिघटितत्वेन गुरुत्वात्, विशुद्धत्वं नामादृष्टाद्वारकदृष्टफलाभावत्वम्, अभिसन्धिरभिप्रायः । अदृष्टं धर्म्मो न द्वारं व्यापारो यस्य एवं यद् दृष्टफलं तस्याभावत्वमिति फलितार्थः । अत्रापि विशुद्धलक्षणे अभावघटितत्वेन गरीयस्त्वात्, उपास्यत्वेन निश्चयात्मकं ज्ञानमिति भक्तिलक्षणम् । कापिलेये च—

देवानां गुणलिङ्गानामानुश्रविककर्म्मणाम् ।

तत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु सा ।

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ॥ इति ।

अत एव नरसिंहपुराणे—

पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रतलभ्येषु सदैव सत्सु ।

भक्त्यैकलभ्ये पुरुषे पुराणे मुक्तौ किमर्थं क्रियते प्रयत्नः ॥

श्रेयः स्मृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये ।

तेषामसौ क्लेशल एव शिष्यते नान्यद्यथास्थूलतुषावघातिनाम् ॥ इति ।

अयम्भावः—यथाल्पप्रमाणं धान्यं विहाय ये अन्तःकरणहीनान् स्थूल-धान्याभासानवघ्नन्ति तेषां न किञ्चित् फलं, एवं भक्तिं तुच्छीकृत्य ये केवलबोधाय प्रयतन्ते तेषामपि किमपि फलं नाविर्भवति। अत एव गीतोपनिषदि—"अमानित्वमदम्भित्वम्" इत्यादिज्ञानयोगमार्गमुपक्रम्य मध्ये "मयि चानन्ययोगेन भक्तिरव्यभिचारिणी" इत्युक्त्वा, प्रान्ते तत्त्वज्ञानार्थ-दर्शनं समाप्य "एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा" इत्युक्तम् ॥

सा च भक्तिरागममतेऽष्टधा—

देवतायाश्च मन्त्रे च तथा मन्त्रप्रदे गुरौ।
भक्तिरष्टविधा यस्य तस्य कृष्णः प्रसीदति ॥

इति गौतमीयतन्त्रवचनावलोकनात्। तथा च—

तद्भक्तजनवात्सल्यं पूजायाश्चानुमोदनम्।
सुमना अर्चयेन्नित्यं तदर्थे दम्भवर्ज्जनम् ॥
तत्कथाश्रवणे रागस्तदर्थे चाङ्गविक्रिया।
तदनुस्मरणं नित्यं यस्तन्नाम्नोपजीवति ॥
भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते।
स मुनिः सत्यवादी च कीर्त्तिमान् स भवेन्नरः ॥ इति।

श्रीभागवतमते सा नवधा यथा,—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥

इति। अनया तावन्नवधा भक्त्या नवभक्तानां सिद्धिलाभोऽपि दृश्यते। यथा—

श्रीकृष्णश्रवणे परीक्षिदभवद् द्वैपायनिः कीर्तने
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने।
अक्रूरस्तुतिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्ज्जुनः
सर्व्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषा परा ॥ इति।

पद्मपुराणमते कार्त्तिकमाहात्म्ये "श्रवणं कीर्त्तनं पूजे"त्यादि, तत्रैवोत्तरखण्डे शिवपार्व्वतीसंवादे "आद्यन्तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरे"रित्यादि, "दर्शनं भगवन्मूर्त्ते"रित्यादि च बहुधा भक्तिलक्षणं परिलक्ष्यते ।

सा च भक्तिर्द्विधा उत्तमात्यन्तिकीभेदात् । उत्तमा भक्तिश्च—

अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा इति ॥

आत्यन्तिकी भक्तिश्च तृतीयस्कन्धे—

अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ।
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ।
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ॥ इति ।

उत्तमा भक्तिश्च षोढा—क्लेशघ्नी-शुभदा-मोक्षलघुताकृत्-सुदुर्ल्लभा-सान्द्रानन्दविशेषात्म-श्रीकृष्णाकर्षणीभेदात् । क्लेशाश्च अविद्यास्मितारागद्वेषाभिनिवेशास्तान् प्रातिलोम्येन घ्नती भक्तिः क्लेशघ्नीति यावत् । पौराणिकास्तु प्रत्यवायतद्वीजाविद्याभेदात् त्रिधा क्लेशमनूद्यास्मितादीनां यथायोग्यमेतेष्वन्तर्भावमाहुः । शुभदात्वञ्च—

शुभानि प्रीणनं सर्व्वजगतामनुरक्तता ।
सद्गुणाः सुखमित्यादीन्याख्यातानि मनीषिभिः ॥ इति ।

मोक्षलघुताकृत्त्वं—समन्ततः पुरुषार्थनिरपेक्षत्वे सति हृद्गतभगवद्रतित्वमिति । सुदुर्ल्लभात्वम्—

साधनौघैरनासङ्गैरलभ्या सुचिरादपि ।
हरिणा चाश्वदेयेति द्विधा सा स्यात् सुदुर्ल्लभा ॥ इति ।

सान्द्रानन्द-विशेषात्मत्वम्—

ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः ।
नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि ॥ इति ।

श्रीकृष्णाकर्षणीत्वम्—

कृत्वा हरिं प्रेमभाजं प्रियवर्गसमन्वितम्।
भक्तिर्वशीकरोतीति श्रीकृष्णाकर्षणी च सा॥ इति।

साधन-भाव-प्रेम-भेदादात्यन्तिकी भक्तिरपि त्रिधा। साधन-भक्तिर्यथा—

कृतिसाध्या भवेत् साध्यभावा सा साधनाभिधा।
नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यतेति॥ भावभक्तित्वं—

शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक्।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते॥ इति।

प्रेमभक्तिश्च—

सम्यङ् मसृणितस्वान्तो ममत्वातिशयाङ्कितः।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते॥ इति।

परिशेषतश्चतुर्व्विधेषु पुरुषार्थेषु मोक्षस्य परमपुरुषार्थत्वान्मोक्षसाधक-ज्ञानोदयं प्रति भक्तेस्तु परमोपयोगितया सर्व्वैरेव वर्णाश्रमिभिर्विशेषतो मुमुक्षुभिर्भक्तौ चित्तार्पणं समीचीनमिति शम्।

---

# उपाख्यानद्वितयम्

[ निबन्धकः—श्रीउपेन्द्रनाथविद्याभूषणशास्त्री ]

## श्यावाश्वोपाख्यानम्

आसीत् पुरा रथवीतिर्नाम राजर्षिः सर्वस्वामिगुणोपेतः। अथैकदा यक्ष्यमाणोऽसौ भूपतिर्महर्षिम् अत्रिमभिगम्य प्रसाद्य प्राञ्जलिः स्थित्वा च महर्षेस्तनुजम् अर्चनालसं नाम आर्त्त्विज्याय अवृणीत। स च महर्षिः

पद्मपुराणमते कार्त्तिकमाहात्म्ये "श्रवणं कीर्त्तनं पूजे"त्यादि, तत्रैवोत्तरखण्डे शिवपार्व्वतीसंवादे "आद्यन्तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरे"रित्यादि, "दर्शनं भगवन्मूर्त्ते"रित्यादि च बहुधा भक्तिलक्षणं परिलक्ष्यते।

सा च भक्तिर्द्विधा उत्तमात्यन्तिकीभेदात्। उत्तमा भक्तिश्च—

अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम्।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा इति॥

आत्यन्तिकी भक्तिश्च तृतीयस्कन्धे—

अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे।
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत॥
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः।
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः॥ इति।

उत्तमा भक्तिश्च षोढा—क्लेशघ्नी-शुभदा-मोक्षलघुताकृत्-सुदुर्ल्लभा-सान्द्रानन्दविशेषात्म-श्रीकृष्णाकर्षणीभेदात्। क्लेशाश्च अविद्यास्मितारागद्वेषाभिनिवेशास्तान् प्रातिलोम्येन घ्नती भक्तिः क्लेशघ्नीति यावत्। पौराणिकास्तु प्रत्यवायतद्बीजाविद्याभेदात् त्रिधा क्लेशमनूद्यास्मितादीनां यथायोग्यमेतेष्वन्तर्भावमाहुः। शुभदात्वञ्च—

शुभानि प्रीणनं सर्व्वजगतामनुरक्तता।
सद्गुणाः सुखमित्यादीन्याख्यातानि मनीषिभिः॥ इति।

मोक्षलघुताकृत्त्वं—समन्ततः पुरुषार्थनिरपेक्षत्वे सति हृद्गतभगवद्वृत्तित्वमिति। सुदुर्ल्लभात्वम्—

साधनौघैरनासङ्गैरलभ्या सुचिरादपि।
हरिणा चाश्वदेयेति द्विधा सा स्यात् सुदुर्ल्लभा॥ इति।

सान्द्रानन्द-विशेषात्मत्वम्—

ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः।
नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि॥ इति।

श्रीकृष्णाकर्षणीत्वम्—

कृत्वा हरिं प्रेमभाजं प्रियवर्गसमन्वितम् ।
भक्तिर्वशीकरोतीति श्रीकृष्णाकर्षणी च सा ॥ इति ।

साधन-भाव-प्रेम-भेदाद्वात्यन्तिकी भक्तिरपि त्रिधा। साधन-भक्तिर्यथा—

कृतिसाध्या भवेत् साध्यभावा सा साधनाभिधा ।
नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यतेति ॥ भावभक्तित्वं—

शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक् ।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते ॥ इति ।

प्रेमभक्तिश्च—

सम्यङ् मसृणितस्वान्तो ममत्वातिशयाङ्कितः ।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते ॥ इति ।

परिशेषतश्चतुर्व्विधेषु पुरुषार्थेषु मोक्षस्य परमपुरुषार्थत्वान्मोक्षसाधक-ज्ञानोदयं प्रति भक्तेस्तु परमोपयोगितया सर्व्वैरेव वर्णाश्रमिभिर्विशेषतो मुमुक्षुभिर्भक्तौ चित्तार्पणं समीचीनमिति शम् ।

---

# उपाख्यानद्वितयम्

[ निबन्धकः—श्रीउपेन्द्रनाथविद्याभूषणशास्त्री ]

## श्यावाश्वोपाख्यानम्

आसीत् पुरा रथवीतिर्नाम राजर्षिः सर्वस्वामिगुणोपेतः। अथैकदा यक्ष्यमाणोऽसौ भूपतिर्महर्षिम् अत्रिमभिगम्य प्रसाद्य प्राञ्जलिः स्थित्वा च महर्षेस्तनुजम् अर्चनालसं नाम आर्त्त्विज्याय अवृणीत। स च महर्षिः

सपुत्रस्तं राजानम् अभ्यगच्छत् तस्य यज्ञसिद्धये। श्यावाश्वो नाम महर्षेरर्चनालसः पुत्रो जनकेन साङ्गोपाङ्गान् सर्वान् वेदान् अध्यापितो नानाक्रियाविधिज्ञश्च बभूव। आसीच्चासौ यथा सुदर्शनस्तथा नानागुणभूषितश्च।

अथ वितते यज्ञे स महर्षिर्ददर्श राजनन्दिनीं यशस्विनीम्। आलोक्यैव ताम् अनवद्याङ्गीम् "एषा मे स्नुषा स्यात्" इति तस्याजायत मनसि। श्यावाश्वस्यापि तदा बभूव चित्तं समासक्तं तस्यां वरवर्णिन्याम्। ततोऽसौ याज्यं राजानम् अवोचत्—"राजन्, संयुज्यस्व कुमारीं मम तनुजेन सह यौनबन्धनेन" इति। ततः श्यावाश्वाय दित्सुः सुतां नृपः पप्रच्छ स्वां महिषीम्—"प्रिये, ददानि कुमारीं श्यावाश्वाय महर्षितनुजाय नानाविद्याविनोदिने प्रार्थिने, तत् कथय किम् अभिमतं ते" इति। महिषी प्रत्युक्तवती—"आर्य्यपुत्र, राजर्षिकुलजाहम्। नास्माकं जामाता कदाचिद् अनृषिर्भवेत्। नैष ऋषितनुजः श्यावाश्वो दृष्टवान् मन्त्रान्। ऋषये प्रदीयतां कन्या यशस्विनी" इति। ततो जायया सह संमन्त्र्य राजा तं प्रत्युवाच महर्षिम्—'भगवन्, अनृषिर्नैव नो जामाता भवितुम् अर्हति' इति।

अथो वृत्ते यज्ञे नृपेण प्रत्याख्यातो न्यवर्त्तत ऋषिः। श्यावाश्वस्य तु राजकन्याया नैव न्यवर्त्तत मनः। ततस्तौ पितापुत्रौ अभिजग्मतुः पार्थिवौ पुरुमीढं तरन्तं च तरन्तमहिषीं च शशीयसीम्। अथ तौ पार्थिवौ तरन्त-पुरुमीढौ स्वयं चक्रतुः पूजां तयोः पितापुत्रयोः। तरन्तानुमता महिषी शशीयस्यपि प्राददाद् बहु वसु गा अश्वांश्च श्यावाश्वाय गुणिने ऋषिकुमाराय।

ततो गत्वा स्वाश्रमपदं तौ पितापुत्रौ अभ्यवादयेतां दीप्ततेजसं महर्षिम् अत्रिम्। आसीच्च श्यावाश्वस्य मनसि—'अहो! वञ्चितोऽहं लाभात् सर्व्वाङ्गशोभनाया राजकुमार्य्या मन्त्रस्यादर्शनात्। अप्यहं चेन् मन्त्रदर्शी स्याम्, महती भवेन् मे प्रीतिः" इति। एवं चिन्तयतस्तस्य प्रादुरासीद् मरुद्गणः। ददर्श चासौ पार्श्वे संस्थितान् स्तुत्यरूपान् समानवयसो रुक्मवक्षसो मरुतः।

अथ तांस्तुल्यवयसो देवान् आलोक्य पुरुषविग्रहान् परं विस्मयाविष्टोऽसौ श्यावाश्वोऽपृच्छत्—'के यूयं स्थ इति ?' पश्चाद् असौ तान् अबुध्यत रुद्रसूनून् मरुतो देवान्। ऋग्भिश्च तुष्टाव तान्। यन् मरुतो दृष्ट्वैव न तुष्टाव, यच्च के यूयम् इति च प्राह, तम् आत्मनो विपुलम् अतिक्रमं मेने श्यावाश्वः।

अथ तया स्तुत्या प्रीतास्ते मरुतो गच्छन्तो ददुस्तस्मै तच् श्रेष्ठं रुक्मम् अवमुच्य स्ववक्षोभ्यः। ततः प्रयातेषु मरुत्सु महायशाः श्यावाश्वो मनसा अगच्छद् रथवीतेर्दुहितरं तां यशस्विनीम्। स ऋषिरात्मानं रथवीतये प्रवक्ष्यन् दौत्ये न्ययोजयद् रात्रिम्। आर्षेण च नेत्रेण संप्रेक्ष्य रथवीतिम् अपश्यन्तीं रात्रिम् अब्रवीत्—'रम्ये हिमवतः पृष्ठे तिष्ठत्येष' इति।

ततो देव्या रात्र्या प्रणोदित ऋषेर्नियोगम् आज्ञाय कन्यामादाय रथवीतिरुपेयाय महर्षिम् अर्चनालसम्। उपसंगृह्य च तस्य चरणयुगलं कृताञ्जलिर्भूत्वा "रथवीतिरेष दार्भ्यः" इति स्वनाम शशंस। "भगवन्, मया सङ्गतिमिच्छन् त्वं यत् पुरा प्रत्याख्यातस्तत् क्षमस्व। नमस्तेऽस्तु भगवन्, मास्म मे क्रुध्य। भो भगवन्, ऋषेस्तनुजः स्वयमपि ऋषिः, पिता च ऋषेरसि। इमां मे तनुजां स्नुषां प्रतिगृहाण" इति स राजा अब्रवीत्। ततः पाद्यार्घ्यमधुपर्कैः स्वयं पूजयित्वा शुल्काश्वशतं दत्त्वा प्रतिययौ गृहान्।

## २। नागार्जुनाख्यानम्

अस्ति चिरायुर्नाम नगरम्। पुरा तत्र चिरायुर्नाम सर्वसम्पदां केतनं कश्चिद् भूपतिः प्रतिवसति स्म। बोधिसत्त्वांशसम्भवो दयालुर्दानशीलो विज्ञानसुपण्डितो नागार्जुनो नाम तस्य सचिवो बभूव। स च मन्त्रिमुख्यो रसायनविद्याबलेन राजानमात्मानञ्च चिरायुषमकरोत्।

अथ कदाचित् तस्य सिद्ध-रसायनस्य मन्त्रिप्रवरस्य सर्वेषु तनुजेषु

प्रेष्ठो बालोऽपि पञ्चत्वं गतः। ततः शोकसन्तप्तो मन्त्रिवरो मर्त्यानां मृत्यूपशान्तये रसायनविद्याबलेन जीवग्राममममृतं कर्त्तुमुदयच्छत। अथ शिष्यस्य कस्यापि भेषजस्य मेलनाय यावद् असौ कालयोगम् उचितं प्रतीक्षाञ्चक्रे तावद् देवेन्द्रेण निखिलं तच्चिकीर्षितमवगम्य सर्वैः सुरैश्च मन्त्रयित्वा स्ववैद्यौ भ्रातरौ दस्रौ समाहूय कार्य्यम् उपदिश्य च भूलोके प्रहितौ।

अथ तौ भुवमवतीर्य नागार्जुनस्य गेहमेत्य तेन च विशिष्टाभ्यर्थनापूर्वकं पूजितौ दस्रनासत्यौ तं सम्बोध्य देवेश-सन्देशं निवेदयामासतुः—'भो महाभाग रसायनपण्डित, विधातुर्नियममुल्लङ्घ्य मरणधर्म्मणो नरान् अमरत्वं नेतुमुद्यतः सुहृदनुचितमाचरति भवान्। एवं कृते किं वैलक्षण्यं स्यादुभयोर्देवमानवयोः? याज्ययाजकयोश्च असद्भावेन विनश्येज्जगत्। तदलमनेनामृतकरणप्रयासेन। नो चेत् कुपिता अमरा अभिशप्स्यन्ति भवन्तम्। यस्य च प्राणाधिकप्रेष्ठस्य तनुजस्य शोकाभिभूतः कर्म्मण्यस्मिन् प्रवृत्तो भवान्, स खलु भाग्यवान् अनन्तसुखास्पदं स्वर्लोकं गतः' इति। एवमुक्त्वा विरतौ दृष्ट्वा अश्विनौ नागार्जुनः सविषादमचिन्तयत्—'अहो महान् समुपस्थितो मे समस्यासमयः। यद्यहमकरिष्यम् अवज्ञां देववचसि तदा देवभिषजौ महाभिज्ञौ समुपनीतौ अश्विनौ साम्प्रतम् उभावेव मामयोजयिष्यताम् अभिशापेन महता। एतस्माच्च महोद्योगाद् विरतौ मनोरथसिद्धेर्बाधो दारुणः। पुत्रस्तु स्वेन कर्म्मबलेनैव स्वर्गं गतः। तदलं शोकेन। आस्ताम् एषा तावद् अमृतसिद्धिः।" इत्यालोच्य कुमारौ प्रत्यवादीत्—"भवतोरादेशेन गृहीतं मे देवेशशासनम्। एषा मया संहृता सुधाक्रिया। युवां नागमिष्यतं चेत् तदा पञ्चाहेन सिद्धेऽमृते अकरिष्यत मया अजरामरा कृत्स्ना धरा।" इत्युक्त्वा पश्यतोस्तयोः स निचखान तत्र धरण्यां सिद्धप्रायं तदमृतम्। ततो यथाविधि सत्कृत्य व्यसर्जयत् तौ सुरभिषजौ नागार्जुनः।

अथ नरपतिना यौवराज्ये ऽभिषिक्तः कुमारो जीवहराभिधानो धन-

परां नाम स्वां जननीमभिवादयितुम् अगात्। माता च तनुजं प्राप्तयौवराज्यं सहर्षमालोक्य प्रोवाच—"वत्स, यौवराज्यं लब्ध्वा मा नन्द। कुलक्रमागता ते प्राप्तिरेषा, न तु त्वयोपलब्धा। अनेके ते सोदराः सुचिरमुपभुज्य यौवराज्यं कालग्रासं गताः कोऽपि तेषु कदापि नालभत राजत्वम्। तद् विडम्बनमेव वो यौवराज्यमिदम्। अतिक्रान्तस्ते जनकः साम्प्रतम् अष्टशताब्दीं नागार्जुनविद्याप्रभावेण। अतोऽपि कति कालान् जीविष्यति को वदेत्।" ततो विषण्णं सुतं पुनराह जननी—"वत्स, यदि वाञ्छसि राज्यं तत्त्वतः, तदा अवलम्बस्व उपायमिमम्। अमात्यो वो नागार्जुनः प्रत्यहम् आह्निकं समाप्य यदा गच्छति भोजनाय तदा यो यत् काङ्क्षति तस्मै तत् समर्प्य उपविशति भोजनाय। तद् यदि त्वमस्मिन् समये तत्रोपस्थाय तं भिक्षेथास्तदीयं शिरः, तदासौ सत्यपाशसंयतस्तत्क्षणमेव ते शिरो दत्वा त्यक्ष्यति जीवितम्। राजापि त्यक्ष्यति प्राणान् तत्प्राणप्रतिममन्त्रिशोकात्, आश्रयिष्यति वा काननं निबिडं निर्वेदात्। अतः परं त्वमेव अभिषिक्तो भविष्यसि राज्ये" इति।

ततो युवराजो मातुर्वचनं बहु समादृत्य राज्यलोभेन तादृशे भयावहे कार्य्ये प्रवृत्तो विसस्मार बन्धुस्नेहमपि। तस्थौ चापरेद्युर्नागार्जुनगृहम् आगत्य प्रतीक्षमाणस्तस्य भोजनवेलाम्। अथ समायाते भोजनकाले वदान्यवरो नागार्जुनोऽपृच्छत् "कोऽत्रोपस्थितः" इति। युवराजोऽपि तदैव समागत्य तदन्तिकमभ्यार्थयत तच्छिरः। सोऽपि कुमारस्य तादृशीं प्रार्थनामाकर्ण्य सविस्मयमवादीत्—"किं करिष्यसि त्वं वत्स, मांसास्थिकेशमयेनानेन मे शिरसा? अथवा किं तेन श्रुतेन, यदि प्रयोजनं तदा छित्वा गृहाण" इत्युक्त्वा स्वां शिरोधरामुपानयत् स च्छेदाय।

अथ रसायन-प्रयोग-सुदृढायां शिरोधरायां चिरं प्रहरतो युवराजस्य चूर्णिता बहवः खड्गाः, न तु खण्डितः कण्ठः। क्रमेण वार्त्तामिमाम् आकर्ण्य भूपतिस्तत्क्षणमेव मन्त्रिभवनमेत्य न्यवारयत् कुमारं तस्माद् व्यापारात्। नागार्जुनस्तु राजानमब्रवीत्—"देव! जातिस्मरोऽहम्।

समतिक्रान्तानि मे जन्मानि नवाधिका नवतिरेवम् अर्थिने ददतः स्वं शिरः। तद् यास्यति प्रतिष्ठां जननेऽस्मिन् शततमे मे शिरोदानव्रतम्। तद् मास्म वोत्त्रः किञ्चित्। न कोऽप्यर्थी मत्तो याति विमुखः। तदिदानीम् अर्पयामि स्वशिरो युवराजाय श्रेयोऽर्थिने। त्वन्मुखावलोकनायैव विलम्ब एव विहितो मया। न पुनर्वारयतु मां महाराजः।" इत्युक्त्वा महीपतिम् आलिङ्ग्य कोषतश्चूर्णम् आदाय व्यलिम्पत् तेन कृपाणं युवराजस्य, अवदच्च "प्रहरतु साम्प्रतं मयि कुमारः" इति। तत एकेनैव प्रहारेण चिच्छेद कुमारो महापुरुषस्य शिरः। छिन्ने च नागार्जुनस्य शिरसि महान् अन्तःपुरे उत्थितो रोदनध्वनिः। तदाकर्ण्य 'हा मन्त्रिन्' इत्युक्त्वा प्राणांस्त्यक्तुमुद्यते राजनि सहसा प्रावर्त्तत आकाश-सरस्वती—"राजन्, मा कृथा अकार्य्यम्। अशोच्य एष ते सखा नागार्जुनः, यतोऽयम् अपुनर्जन्मा प्राप्तो गतिं भगवद्-बुद्धदेवसमाम्" इति। श्रुत्वैतद् राजा विरम्य मरणव्यवसायात् प्राप्य च परं निर्वेदम् आशिश्राय वनम्। तत्र च तपसागमत् परां गतिम्।

ततो जीवहरः प्रापद् राज्यम्। अथ गच्छति काले नागार्जुनतनयाः पितृघातिनं जीवहरं सिंहासनस्थं प्रेषयामासुर्यमसदनम्। पुत्रं च गतासुं विदित्वा तन्माता अत्याक्षीद् मानवीं लीलाम्।

## पावक-पतङ्गौ

असाधुदर्शी खलु तत्रभवान् भर्तृहरिर्येनोक्तम्—

अजानन् माहात्म्यं पततु शलभस्तीव्रदहने
स मीनोऽप्यज्ञानाद् बडिशयुतमश्नातु पिशितम्।
विजानन्तोऽप्येतद् वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा॥

ाधुदर्शी च कविकुलचूडामणिः शेक्सपीयरो (Shakespeare)

येनाग्रपश्चाद्विवेकित्वमेव (looking before and after) मनुजस्य विशिष्टं लक्षणं विहितम्। यतः, पशवः सर्वथैव मनुष्येभ्यो ज्ञानप्रकर्षेणातिरिच्यन्त इत्यत्र नास्ति लेशतोऽपि संशयावसरः।

स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलस्य कः।
जन्त्वादयः कुलायादिकरणे केन शिक्षिताः॥

इति श्रीमद्भर्त्तृहरिप्रश्नद्वितयस्य 'न कोऽपि' 'न केनापि' इत्युत्तरद्वयम्। पुंस्कोकिला हि समुपागते मधुमासे प्रियापरितोषणाय स्वयमेव स्वरं स्वकीयं मधुरिमातिशयसुभगं सम्पादयन्ति, जन्त्वादयश्च सञ्जातायां सन्तानसम्भावनायां स्वबुद्ध्यैव निर्म्मिमते नीडानीत्यवश्यमेवाभ्युपगन्तव्यं प्रमाणपरतन्त्रैः। श्रूयतां तावदत्र प्राचीनमितिवृत्तम्—

कश्चिच्छलभः सुचिरं वह्निं प्रदक्षिणीकुर्वन् सहसा विरराम परिक्रमणात्, अचिन्तयच्च, "अहो सुविदितमेवैतन्मम यदनलो बलादनिच्छन्तमपि समाकर्षति शलभम्। अग्नेः खलु पतङ्गविषये कापि सम्मोहनी शक्तिर्वर्तते यया शलभाः सर्वे समाकृष्टस्वान्ता भृशावशात्मानस्तदभिमुखमेव धावन्ति, स्मृतिशेषतां चानुभवन्ति। ममापि मन एतद्दर्शनसमकालमेव समुत्कण्ठतेऽस्य समाश्लेषाय। परं यदि क्षणिकसुखाय समालिङ्ग्येत मया कृष्णवर्त्मा, तर्हि तदात्व एव निःसंशयं शुष्केन्धनदाहं दह्येत मे शरीरम्, प्रतिपलमुपचीयमानं यशश्च ग्रीष्मसरिद्विलायं विलीयेत, मदेकशरणा मूर्त्तिमतीव पातिव्रती प्रिया मेऽशरणा विपद्येत, सन्ततयश्च निराश्रया मातापित्रोरेव गतिमनुप्रपद्येरन्, पितरोऽपि प्रजातन्तुव्यवच्छेदादन्तस्तापेन दन्दह्येरन्। सुचिरं मनसि लालिता दुरधिरोहिण्याशापि फलोन्मुखतामापन्नैव विनाशमुपगच्छेत्। एवम् अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढ एव प्रतिभास्यामि। अत एव सुदूरं परिहर्तव्यो मया पावकः" इत्येवं विचिन्त्याऽसौ सपदि साभिनिवेशं प्रविवेश वह्निकुण्डम्।

१८३८।४।२१।४०।५५

| | | |
|---|---|---|
| ल० १६० | बृ १ च २ | |
| मा ७ के ८ श ८ शु ८ | | रा २१ |
| र १२ बु १४ हो २७ | म १५ | |

र—४।२२।५५
च—०।१८।६
म—३।१२।६
बु—५।२५।४३
बृ—०।१।२६ (व)
शु—३।१३।५८

श—३।५।११
रा—८।३।३०
के—२।३।३०
गुलिक—३।०।४४
लग्न—१।१५।४९

वृषलग्ने जातस्य जातकस्य यामार्धाधिपतिदण्डपतिभ्यां वेधाभावात् पताकीवेधतो रिष्टिर्नास्ति, किन्तु तृतीयाधिपचन्द्रस्य निधनाधिपगुरुणा वेधात् तृतीये वर्षे सहजाया उत्पत्तितो जननीदुःखं लग्नेन सह रवेर्वेधात् चतुर्थे वर्षे पितृदुःखं च चिन्तनीयम् ।

वृषलग्ने जातस्य जातकस्य लग्नात् सहजर्क्षे शनिकेतुभ्यामन्वितस्य लग्नपतेर्भार्गवस्यावस्थित्या वर्षत्रितयमध्ये चतुर्विंशतिमासमध्ये वा सहजाजन्म, मर्मसंश्रयश्च । तथा सहजाजन्मतः सहजस्य पितुश्चादौ व्याध्यादिभिर्दुःखं पश्चात् वर्षत्रयादूर्ध्वं वा पितुर्भाग्यविशेषोदयः । तथादौ वादे व्ययविशेषः पितुः प्रतिपत्तौ बाधा च, पश्चाद्वादे जयश्च कल्पनीयः, तादृशलग्नाधिपस्य षष्ठाधिपत्वात् कर्माधिपसंसर्गात् मान्दिकेतुभिः सह सम्बन्धाच्च । तथा केतुशुक्रशनैश्चराणामेकर्क्षे वधतारायां सम्बन्धवशात्, मान्दिना सह तेषां सहजगृहसम्बन्धाच्च सार्द्धैकादशवर्षवयोमध्ये शुक्र-

दशावसानकाले सहजाया उद्वाहाद्युत्सवः, विवाहात परतस्तत्पतिकुले दुःखञ्च। एवं सहजापतिसम्बन्धवशात् कार्य्यक्षेत्रे समुन्नतिः, अथवा जातकस्य सम्बन्धवशात् सहजापतेः कल्याणं धनार्जनं गौरवञ्च कल्पनीयम्। एवं कस्या अपि सहजाया बालवैधव्यदुःखं भवति, स्वस्य च मातामहश्वशुरादिभ्योऽर्थसिद्धिर्भविता, तन्मूलतो वादश्च। तथा शुक्रदशावसाने मातामहादीनां विपत्तिः। लग्नाधिपस्य विक्रमर्क्षे भाग्याधिपतिना समवस्थानात् स्वप्रयत्नेन भाग्यविशेषोपचयः।

धनाधिपबुधस्य तुङ्गर्क्षे पञ्चमेऽवस्थित्या तथा तत्र भाग्यकर्माधिपस्य शनैश्चरस्य पूर्णदृष्ट्या भाग्यगस्य राहोः पूर्णदृष्ट्या च जातको विशेषतो धनवान् भविष्यति। तादृशबुधस्य तुङ्गर्क्षेऽवस्थित्या द्वात्रिंशद्वर्षतस्तदूर्ध्वं वा अष्टोत्तर्य्यां बुधदशायां भाग्योपचयः, स च दैववशात् आकस्मिको वा। तदा लोकप्रतिपत्तिश्च धनमूला बुद्धिवृत्तेः प्रसारश्च, सपिण्डानां सजातीयानां च प्रतिपालकत्वेन लोकख्यातिश्च।

सहजर्क्षे शुक्रकेतुशनैश्चराणां वधतारायामवस्थित्या भाग्यकर्मगसंसर्गाच्च सहजाप्यस्य भाग्यवती, तन्मूलतश्चास्य धनभाग्योपचयः, अस्य सम्बन्धात् तस्या वा भाग्यप्राप्तिर्भविता। काचिच्च सहजा पतिदुःखतः क्लिष्टा भविता। तच्च दुःखं सप्तविंशवर्षादूर्ध्वं विंशोत्तर्य्यां कुजदशायामथवा द्वात्रिंशद्वर्षमध्येऽष्टोत्तर्य्यां कुजदशायां ज्ञेयम्। तथा तादृशकुजदशाद्वितये जातकस्य सहजैर्वादः स्यात्, अथवा सहजामूलतो वादः स्यात्। एवं भ्रातृभ्यः पृथगन्नता च कल्पनीया। तथा तादृशकुजदशायां पत्नीसहोदराणामपि दुःखविशेषः। सहजाधिपस्य च शशिनो निधनाधिपतिना तथा वक्रिणा गुरुणा सह व्ययराशौ समवस्थानात् तादृशचन्द्रगुर्वोर्दशान्तर्दशायां सहजाया आकस्मिकी विपत्तिर्वियोगो वा भविता। एवं राह्वन्तर्दशायां तत्रोत्सवः, कुजान्तरेऽप्युत्सवे व्ययः। चन्द्रकुजयोश्चन्द्रगुर्वोर्वान्तरे सहजायास्तत्पतेर्वा अतिसारादिका पीडा भवति, तथा तत्सुतादीनामपि। चन्द्रदशा हि सहजायास्तत्सुतादीनाञ्च दुःखप्रदा। तृतीये केतुशुक्राभ्या-

मन्विताभ्यां मन्दमान्दिभ्यां गलपृष्ठयोः स्फोटकादिकं भवति, दन्तकर्णमूलयोश्च। फलकालस्तु शुक्रचन्द्रयोः शनिशशिनोः शशिशनैश्चरयोर्वा अन्तर्दशा। तत्र शुक्रदशा कर्णदन्तादिषु दुःखप्रदा, चन्द्रदशा गलपृष्ठोदरेषु। कुजकेतुभिः सहजादुःखमुदरभङ्गातिसारादिभिस्तथा शुक्रकेतुभिः स्वस्य, स्वसृजन्ममूलतो जनन्याश्च।

सुखाधिपस्य रवेः स्वर्क्षे सम्पत्तारायामवस्थित्या अष्टोत्तर्य्यां रविदशायां पितुः सम्पदामुपचयः स च चतुर्थवर्षतः कल्पनीयः। किन्तु जातकस्य जन्मतो वर्षत्रितयाभ्यन्तरे पितुः क्लेशविशेषो गौरवहानिरर्थनाशश्च व्यवसायमूलतोऽनागमो वा धनानां व्याधितो व्ययविशेषश्च। यद्यपि विंशोत्तर्य्यां रविदशा सम्पत्प्रतिपत्तिप्रदा, तथापि तत्र शनिशुक्रकेतूनामन्तरा उत्सवादिषु व्याधिविशेषेण च जनकस्य व्ययविशेषः, शुक्रान्तरे च कस्यापि व्यवसायविशेषस्य परीहारो भवति। गुर्वन्तरे पितुर्वा विपत्तिः। एवं सिंहर्क्षे शुक्रशनिकेतूनां व्यस्तानां चारतोऽपि, समस्तानां तु चारेण विशेषतः पितुर्धनव्ययो व्याधिमूलतो व्यवसायमूलतश्च। एवमन्यदा स्वाधिकारकाले पितृद्रव्याणां हानिः स्वस्य च व्याधिजं दुःखं पश्चात् ततो निष्कृतिः सुखं च। तथा बन्धुक्षेत्रे रवेरवस्थानाद्राजपुरुषैस्तत्तुल्यैर्धनवद्भिर्वा सौहार्द्यं भवति, ततश्च प्रतिपत्तिविशेषोऽपि जायते, भवति च सार्धसप्तदशवर्षमध्ये पितृधनेन सुखोपचयः, द्वाशतश्चतुर्दशवर्षाभ्यन्तरेऽपि फलानीमानि चिन्तयितुं योग्यानि। एवं शुक्रदशावसाने पितृसपिण्डस्त्रीणां हानिः। शुक्रशनैश्चरयोर्व्यवसायमूलतः पितृधनोपचयः परं मातृकुलदुःखम्, विशेषतो मातामहस्य मातामह्या वा।

पञ्चमाधिपबुधस्य तुङ्गर्क्षेऽवस्थानेन तत्र शनिराह्वोः पूर्णदृष्टिसम्बन्धात् तथा रविकुजयोर्मध्यवर्तितया च विद्यार्जने बाधा दृश्यते, तथा अष्टोत्तर्य्यां बुधदशायां बहुधा बन्धुदुःखं च।

रिपौ कुजग्रहस्थित्या रिपूणां प्राणहानिरपि। तथा कुजदशायामष्टोत्तर्य्यां चतुर्विंशतितो विंशोत्तर्य्यामष्टाविंशतितः सहजयोर्दुःखविशेष-

श्चिन्त्यः। तदा भ्रातृविवादमूलकं व्ययबाहुल्यं सहजावैधव्यं वा कल्पनीयम्। एवं दशायोगपद्ये विशेषस्त्रिंशतो द्वात्रिंशद्वर्षमध्ये दुःखविशेषः व्यवसायमूलिका वञ्चितस्य धनहानिरपि भवति। भवति च पत्नीमूलतः स्त्रीजनमूलतो वा मलमूत्रद्वारसम्बन्धिनी पीडा, पश्चात्ततो विमुक्तिः। रक्तपातो व्याधिमूलत आघातमूलतश्च, शत्रुकृता देहबाधापि चिन्तनीया। मेषकर्कटयो राहुशनैश्चरयोश्चारादपि दुःखबाहुल्यम्। एवं विंशोत्तर्य्यां राहुदशायां चत्वारिंशवर्षसमकाले राहोस्तुलाचारात् "फौजदारी मकद्दमा"रूपो राजद्वारे व्यवहारविशेषः, तन्मूलतश्च प्रथमतो विपत्तिर्भविता, किन्तु पश्चात् ततो निष्कृतिर्भविष्यति। एवञ्च राहुदशावसानकाले तथा कुजराह्वोर्दशान्तर्दशयोर्नानाविधा विपत्तिर्भविता। एवमपि कुजगृहे व्ययराशिगतयोर्गुरुचन्द्रयोस्तादृशरिपुगृहगतेन कुजेन पूर्णेक्षणतः तथा तादृशस्य शशिनः केन्द्रचतुष्टये शनिबुधराहुभिः समवेतयोस्तयोः स्थित्या मनस्वित्वेन ख्यातिं लभेतायं जातकः. उद्योगी कृतकर्मा च भविष्यति। एवं गुरुचन्द्रयोस्तादृशकुजशनिराहूणां दृष्टिस्थितिसम्बन्धाच्च पञ्चदशवर्षमध्ये मातृदुःखं भविता, तथा षष्ठाष्टमवर्षयोर्मातुः स्वस्य च व्याधिदुःखं भवति। एवं तुलायां राहुचारतस्तथा शनैश्चरचारतः संसारे मातुः सहजानां च व्याध्यादिमूलकं दुःखं वादमूलतो दुःखं भविता, पश्चाच्च निवृत्तं स्यात्। शत्रुजयोऽपि भवति। एवं विंशोत्तर्य्यां चन्द्रदशायां शनिराहुकुजानामन्तर्दशासु नानाविधान्यशान्तिमूलकानि घटनापरम्परादीनि चिन्तनीयानि। कुजदशायां मानसी व्यथा तथा गुरुजनानां यातना विशेषतः कल्प्या। एवं पत्न्या बाधकादिव्याधिमूलतो दुःखं विंशोत्तरीदशाद्यन्तयोः पत्नीविपत्तिर्वा चिन्तनीया।

सप्तमाधिपकुजस्य शुक्रर्क्षे रिपौ स्थित्या पत्नी ह्यस्य सदा व्याधिदुःखिता, सूतिकादिव्याधिभिः क्लिष्टा क्षयरोगेण हीनायुरपि भविता। प्रथमा पत्नी चास्य स्निग्धप्रकृतिका द्वितीया दुःखदायिनी भविता। विंशोत्तर्य्यां चन्द्रशुक्रयोस्तथा कुजदशायां शनिशुक्रगुरूणामन्तरा पत्नीदुःखम्,

एवं कर्कटे शनिचारतः, तुलायां राहुचारतस्तथा मेषे तयोश्चारतः दम्पत्योर्दुःखं विशेषतः पत्न्याः। १६।२१।२४—एषु वर्षेषु विवाह-समृद्धिश्चिन्तनीया। तत्तद्वर्षाभ्यन्तरे कदाचिद्‌ भ्रातुः कदाचित् सहजायाः कदाचिद्वात्मनो विवाहकालः। चन्द्रगुर्वोर्दशान्तर्दशयोर्विंशोत्तर्य्यां विवाहस्य विशेषः कालः। अस्य विवाहकाले कस्या अपि सहजाया विवाहाद्युत्सवो भविता, अथवा विवाहकाले बाधाविशेषप्रादुर्भावात् सहसान्यत्र विवाहो भविता। फलञ्चेदं स्वस्मिन् सहजायां वा कल्पनीयम्।

निधनाधिपस्य गुरोर्वक्रतया विक्रमाधिपेन शशिना सह व्ययराशौ कुजर्क्षेऽवस्थित्या चन्द्रदशायां सहजानां विशेषतः सहजापतेर्विपत्तिः, स्वस्यापि पदे पदे प्रयत्नानर्थक्यम्, तीर्थयात्रार्थं विदेशयानम्, सत्कर्म्मसु व्ययबाहुल्यम्, उत्सवेषु विपत्तिः, विशेषतश्चन्द्रगुर्वोरष्टोत्तरीदशान्तर्दशा-याम्, तथा चतुर्विंशवर्षे षट्त्रिंशे च तथा राहुगुर्वोर्दशान्तर्दशायाम्। चत्वारिंशवर्षसमकालेऽशान्तिर्विपुला बहुला च भविता। तदानीं जाताया-स्तनयाया विपत्तिरथवा सुताजन्मतः पत्नीदुःखं सर्व्वदा भीतत्वं, स्त्रीयातिसाराजीर्णादिका पीडा च कल्पनीया। एवं तादृशगुरुसहितचन्द्रस्य दशायां गुरुशनिरविकेतूनामन्तरा भागधेयोदयश्च सूचितः। कुजस्यान्तरे दम्पत्योर्दुःखम्, क्वचित् कलहादिनिमित्तकं क्वचिद्वा व्याधिमूलकम्। बुधान्तरे ज्ञातिभिर्विवादः स्यात्। अस्य तु चन्द्रदशाद्यवन्ते च दुःख-दायिनी, विक्रमहानितश्च चेष्टावैफल्यवशात् कल्पनीया। क्रूरप्रकृतिभ्यः स्वजनेभ्यो विशेषतः स्त्रीजनेभ्यो दुःखं हानिश्च कल्पनीये। द्वाविंशवर्षादूर्ध्वम् अष्टोत्तर्य्यां बुधदशायां विंशोत्तर्य्यां कुजदशाया अवसानकालतः सार्धचतु-स्त्रिंशवर्षादुपरि राहुदशा विशेषतो भाग्यप्रदा भविष्यति, किन्तु कुजदशाया अवसानकाले प्रारम्भे वा प्रथमायाः पत्न्या विपत्तिश्चिन्तनीया, ततश्च पुनर्भाग्योदयः स्यात्, विनष्टस्य सांसारिकसुखस्य पुनरुपचयः स्यात्। स्वस्यापि पुनः पुनर्विपत्तिहेतुः कुजदशा विशेषतः कुजचन्द्रयोस्तथा कुज-

गुर्वोः कुजशुक्रयोस्तु कन्याजामात्रादिस्वजनानामपि सहजायास्तथा तत्पतेश्च दुःखानि विशेषतश्चिन्तनीयानि।

भाग्यर्त्ते राहोरवस्थित्या तथा तत्सप्तमे विक्रमर्त्ते लग्नपभाग्यकर्मपयोरवस्थित्या बाल्ये लग्नाधिपभार्गवदशा पितृभाग्यप्रदा तथा पितृगृहे परिजनबाहुल्यम् अविरतोत्सवः भ्रातृभगिनीनां चोपचयो भविता, किन्तु दशावसाने द्वादशवर्षमध्ये विशेषतः शुक्रगुर्वोर्दशान्तर्दशायां नानाविधानि दुःखानि चिन्तनीयानि। शन्यन्तरा पूर्वप्रवृत्तानां वादानामवसानं तत्र जयमूलतः सुखं भाग्योपचयश्च भविता, केत्वन्तरा तु सहजामूलतः स्वीयव्याधिमूलतश्च दुःखं भवेद् जननीमूलतो वा। गलनाल्यां गण्डे वा श्लेष्ममूलकं स्फोटकादिकं दुःखप्रदं भवेत्। तच्च शुक्रदशायां शनिकेतूनामन्तरा, तथा चन्द्रदशायां शनितुकेशुक्राणामन्तरा च। एवं शुक्रान्तरे दन्तेषु क्लेशविशेषः ज्वरादिकृता बाधा च कल्प्या। चन्द्रकुजयोः कुजचन्द्रयोर्वा मानसिक उद्वेगः, पत्नीविपत्तिमूलकं दुःखं च। सप्तविंशवर्षादूर्द्ध्वं विंशोत्तर्य्यां कुजदशायां कनिष्ठमूलतो जातकस्य भाग्यवृद्धिः सूचिता, परं शत्रुकृतानि दुःखानि चिन्तनीयानि, शत्रूणां विनाशश्च, तथा पत्न्या विपत्तिमूलिका संसारसुखहानिः, पश्चाद्राहुदशायां भाग्यविशेषोपचयः।

कर्माधिपस्य शनेर्लग्नाधिपेन शुक्रेण विक्रमर्त्ते केतुभिश्च सहावस्थानात् सर्व्वदा कर्म्मसु चेष्टाशीलः स्यात् कर्म्मभिश्च लब्धप्रतिष्ठः स्यात्, तथा सहजापतिना सह कर्म्मक्षेत्रे सम्बन्धो भवति, तस्य सुखाय च भवति, कुजराह्वोर्दशायां सहजायास्तत्पतेर्वा विपत्तिः कल्प्या, शनिकेतुशुक्राणामन्तरा तु विशेषेण। जातकस्यास्य कर्म्माणि नीतिपूर्व्वकाणि भवन्ति।

व्ययर्त्ते गुरुचन्द्रयोर्योगात् तीर्थयात्राकुशलः सत्कार्य्येषु च व्ययशीलो दाता च भवति; तयोश्च विक्रमपनिधनाधिपत्वात् क्वचिद् व्यवसायमुखेन धनहानिश्चेष्टावैफल्यं च, तच्च विशेषतो विंशोत्तर्य्यां चन्द्रदशायां गुरुदशायाञ्च। एवं गुरुदशायां तीर्थे वासः, कर्मणां निवृत्तिश्च। वित्तं चास्य निवृत्तिमुखं भवेत्, उदारमपि वृत्तं स्यात् ततश्च गुरुजनेषु दुःखं

ज्ञायते। एवं व्ययाधिपस्य कुजस्य राहोर्दशमे रिपौ स्थित्या तस्य च सप्तमाधिपत्वेन राहुकुजयोः कुजराह्वोर्वा पत्नीदुःखम्, तथा सहजाया-स्तत्पतेर्वा सहजानां वा विपत्तिर्विशेषेण चिन्त्या। एवं व्यये चन्द्र-गुरुभ्यां व्ययबाहुल्यं भवति, तथा पञ्चदशवर्षे चतुर्विंशे षट्त्रिंशे च देहदुःखमजीर्णादिभिः कचिद्दम्पत्योर्दुःखं युगपदेव भविता, एवञ्च विपत्ति-काले दैवानुकूल्यलाभाय देवपितृकृत्यानामनुष्ठानं च भविता, ततश्च कल्याणलाभः। एवं कन्याजन्मकाले कचित् पत्नीदुःखं चिन्तनीयं भवेत्, एवं चास्य कुण्डल्यां सागरचतुष्टये ग्रहाणामवस्थानात् तथा धन-पञ्चमाधिपस्य बुधस्य तुङ्गराशौ स्थित्या जातकोऽयं विशेषेण धनभाग्य-भाग बहूनां ज्ञातिकुटुम्बानां प्रतिपालकश्च स्यात्। एवं कुजर्क्षे व्ययराशौ शनिकुजयोः पूर्णदृष्ट्या तथा राहोः कर्मणि व्ययाधिपकुजस्य स्थित्या पापकर्मस्वपि व्ययबाहुल्यं, कुजस्य रिपौ स्थित्या शत्रुभिर्विवादमूलको धनानामपचयश्च स्यात्। विंशोत्तर्य्यां कुजदशायां विशेषतश्चन्द्रदशायां व्यवसायमूलतः पितृधनानां व्ययस्तथा सहजायाः पतिगृहेऽपि व्यय-बाहुल्यं स्यात्।

# व्याकरणाधिकरणे गर्जन्तो मीमांसकाः

सहृदयाः, यद्यपि व्याकरणमाद्यविद्यास्थानत्वेन परिगण्यते, यद्यपि व्याकरणस्य षट्स्वङ्गेषु प्राधान्यं सर्वैरेवाभ्युपगम्यते, यद्यपि व्याकरणं मोक्षमाणानामजिह्मा राजपद्धतिरिति निर्दिष्टं भर्त्तृहरिणा, तथापि व्याकरणनियन्त्रणानिरययन्त्रणामनुभवतः कस्य वा कविम्मन्यस्य व्याकरणस्योपरि प्रद्वेषो न दृश्यते कस्य वा प्राकृतनरस्य वैयाकरणानां दोषोद्घाटनेऽमन्द आनन्दसन्दोहो न प्रादुर्भवति ? अत एव कैश्चित् पाणिन्यादीनां सूत्राणां समस्यापूरणान्यारचय्य विशङ्कटमात्मीयं पाण्डित्यं

प्रकटय्य परमा प्रीतिरनुभूयते, तदितरैः पाणिनेः सूत्रेषु व्याकरणगताः प्रमादाः प्रदर्श्यन्ते, तदन्यैश्च सूत्रवार्त्तिकभाष्यकाराणां परस्परवचनविरोध एव व्याकरणस्य मूले कुठारमर्पयतीति रारट्यते, तदितरैः पुनर्व्याकरणस्य वेदविरोधित्वं प्रख्याप्यते। बहूनामेतेषां मतानि मीमांसाशास्त्रे पूर्वपक्षरूपेणोपन्यस्तानि कथञ्चिच्च खण्डितानि। तत्र पार्थसारथिमिश्रपादैः शास्त्रदीपिकायामुक्तम्—

निर्मूलत्वाद्विगीतत्वान्नैष्फल्याद् वेदबाधनात्।
पूर्वापरविरोधाच्च नास्य प्रामाण्यसम्भवः॥

भट्टाचार्य्यैरप्युक्तम्—

अतो विगानभूयिष्ठान्निर्मूलाद् वेदबाधनात्।
पूर्वापरविरोधाच्च नास्य प्रामाण्यसम्भवः॥

तत्र निर्मूलत्वमधिकृत्य न्यायमञ्जर्यामुक्तम्—शिष्टप्रयोगमूला तर्हि व्याकरणस्मृतिरस्तु वैद्यकस्मृतिरिवान्वयव्यतिरेकमूलेति चेत्, के शिष्टा इति पृष्टो भवान् वक्तुमर्हति किमभिमतगवादिसाधुशब्दव्यवहारिणो गाव्याद्यपशब्दवादिनो द्वये वा। आद्ये पक्षे दुरुत्तरमितरेतराश्रयत्वम्—शिष्टप्रयोगमूलं व्याकरणम्, व्याकरणविदश्च शिष्टा इति। न ह्यशिक्षितव्याकरणास्तत्संस्कृतशब्दादिकुशला भवन्ति। मध्यमपक्षे गाव्यादिव्यवहारिणः शाकटिकाः शिष्टाः, तत्प्रयोगमूलं गवादिशब्दसंस्कारकारि व्याहतमिव लक्ष्यते। तृतीये तु पक्षे गोगाव्यादिशब्दप्रयोगसाङ्कर्य्यात् किंफलं व्याकरणं भवेत्।

न च पाणिन्यादिमुनिप्रवरा व्याकरणस्य प्रणेतारस्तेन व्याकरणस्य समूलत्वमिति प्रलपितव्यम्, पाणिनेः पूर्वं व्याकरणस्मृतेः समुच्छेदापत्तेः, पाणिन्यादीनां च मुनीनां पुरुषत्वेन भ्रमप्रमादविप्रलिप्साकरणापाटवरूपदोषचतुष्टयग्रस्तत्वेन तत्प्रणीतस्मृतेरप्यप्रामाण्यप्रसक्तेः।

न च तस्माद् ब्राह्मणेन न म्लेच्छितवै, म्लेच्छो ह वा एष यदपशब्दः, एकः शब्दः सम्यक् प्रयुक्तः स्वर्गे लोके कामधुग् भवति, आहिताग्निरप-

शब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्, तस्माद् व्याकृता वागुद्यते इत्यादयः श्रुतयो व्याकरणस्य प्रामाण्यं प्रतिपादयितं प्रभवन्ति, तेषां प्रातिशाख्यादिर्वैदिकप्रक्रियामात्रविषयत्वात्।

किञ्च ये तावत् प्रामाणिकधुरन्धरा लोके शिष्टत्वेन प्रसिद्धास्तैरपि बहुशोऽपशब्दाः प्रयुज्यन्ते। तथा चोक्तम्—

कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्यकारिणः।
शिष्टा दृष्टाः प्रयुञ्जाना अपशब्दाननेकशः॥

यथा "समानमितरच्छेयनेन" इत्यादितकारान्तप्रथमान्तनपुंसकप्रयोगेषु मशकेन तत्र तत्र प्रयुक्तम्—समानामितरं ज्योतिष्टोमेन। समानमितरं गवैकाहिकेन इति सूत्रकारेणाप्यभिहितम्। "अहीने बहिष्पवमाणैः सदसि स्तुवीरन्" इति कर्त्रभिप्रायक्रियाफलवर्जितेऽपृथग्विकर्तृके स्तवने "यजन्ति याजकाः" इतिवत् परस्मैपदे प्रयोक्तव्ये व्याकरणमनपेक्ष्यात्मनेपदं प्रयुक्तम्। तथाश्वलायनेन "प्रत्यसित्वा प्रायश्चित्तं जुहुयुः" इति समासेऽपि ल्यप् न प्रयुक्तः। तथा शिक्षायां नारदेन "प्रत्यूषे ब्रह्म चिन्तयेत्"* [२।८।१] इति गाव्यादिशब्दतुल्य एव प्रयुक्तः। तथा मनुनापि "ज्ञातारः सन्ति मेत्युक्त्वा" [मनु ८।५६] इत्यत्र ज्ञातारः सन्ति म इत्युक्त्वा इति वक्तव्ये व्याकरणमनपेक्ष्यैव संहिता कृता। तथा मीमांसायामपि "गव्यस्य च तदादिषु" [जै०सू०१।१।१८] इति गोर्विकारावयवयोग्यसाधुप्रयोगः शब्दोऽन्यत्रैव गवामयने प्रयुक्तः। तथा "द्यावोस्तथेति चेत्" [जै० सू० ६।३।१८] इति द्यावापृथिव्योरिति वक्तव्ये लक्षणहीनमेव बहु प्रयुक्तम्। तथा गृह्यकारेण मूर्धन्यभिघ्राणमिति वक्तव्ये मूर्धन्यभिजिघ्राणमित्यविषये जिघ्रादेशः प्रयुक्तः। कात्थक्येऽपि व्याकरणस्य निरुक्ते हीनलक्षणाः प्रयोगा बहवो यथा "ब्राह्मणो व्रवणादिति" † [६।६।१]। "संवत्सरं शशयानाः" इत्येतन्मन्त्रगतमण्डूकविषयब्राह्मणशब्दनिर्वचने क्रियमाणे वचनशीलत्व-

---

* मुद्रिते पुस्तके उषसि ब्रह्म चिन्तयेदिति पाठः।

† मुद्रिते निरुक्ते "ब्राह्मणा व्रतचारिणोऽब्रुवाणा" इति पाठ उपलभ्यते

निमित्ततां दर्शयता "ब्रुवो वचिः" [पा॰ २।४।५३] इति वच्यादेशमकृत्वैव ब्रवणादिति प्रयुक्तम् ।

अन्तो नास्त्यपशब्दानामितिहासपुराणयोः ।
तथोभाभ्यादिरूपाणां हस्तिशिक्षादिकारिणाम् ॥ ( क्रमशः )

---

# रसमञ्जरी

एकदा माधवस्य सतीर्थ्या माधवमाहुः, माधव एषमो बि, ए, Honours परीक्षायाः प्रश्नपत्रे धावकस्य रजकत्वं प्रतिपादितम् । विषयमिमधिकृत्य स्वं मतं विव्रियतां भवता ।

माधवेनोक्तम्, सहस्रशो धन्यवादानर्हन्ति कलिकाता-विश्वविद्यालयमन्त्रिणः परीक्षकाश्च यत्तैर्विहाय क्षुण्णं वर्त्माभिनवमेव तथ्यं समुपस्थापितं छात्राणां पुरतः । प्रायेण हि छात्राश्चाध्यापकाश्च परीक्षकाश्च गतानुगतिका एव भवन्ति, अत्रत्यास्तु परीक्षका न तादृशा इति महत् खलु गौरवस्थानमिदमस्माकम् ।

विदितमेवैतत् प्रायेण सर्वेषामेव युष्माकं यदितरदेशा भोगभूमयः, भारतन्तु वर्षं कर्म्मक्षेत्रमिति । अत्रत्या ह्यापांशुलपादब्राह्मणाः सर्व एव बाल्ये विद्यामधिगच्छन्ति, चमत्कुर्वन्ति य चेतांसि सहृदयानां काव्यादिविरचनेन । न केवलं काव्येष्वेव प्रादुर्भवति पाण्डित्यप्रकर्ष एतेषां प्राकृतजनदुरवगाहेषु शास्त्रेष्वप्यनितरसाधारणी व्युत्पत्तिः सदैव प्रत्यक्षीभावमुपयाति । चाण्डालपुङ्गवेन शबरस्वामिना प्रणीतं मीमांसासूत्रभाष्यं सबहुमानं शिरसा श्लाघ्यते श्रोत्रियशिरोमणिभिरपि, विरचितं च तत्र वार्त्तिकं वैदिकाग्रे सरैर्ब्राह्मणोत्तंसैः कुमारिलभट्टपादैरित्यप्यतिरोहितमेव प्रेक्षावताम् ।

स्वर्णकारकुलतिलकेनामरुकशीलेन प्रणीतानि पद्यानि कस्य वा साहित्यविदः कण्ठे मुक्ताफलानीव न लग्नानि । अमरुकस्य स्वर्णकारत्वे तट्टीकाकृतः—

"विश्वप्रख्यातनाडिन्धमकुलतिलको विश्वकर्मा द्वितीयः"

इति वचनम् प्रमाणपदवीमवगाहते। इतोऽपि बलवत्तरं प्रमाण-ममरुकविनिर्मितानि पद्यान्येव। तत्रैकः श्लोकः—

प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य।
हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः॥

अत्र सा सा सा सेति भस्त्राध्वनिना बद्धपरिचयं व्योकारमन्तरेण को वापर ईदृशं श्लोकमुपनिबध्नीयात्।

न केवलं स्वर्णकारकुम्भकारमलनिर्णेजकप्रभृतिभिरेव विरचिताः प्रबन्धा भारते वर्षे, सौभाग्यातिरेकादस्माकमत्रत्यैः खर-भ्रमर-चित्रक-मयूरादिभि-रपि संग्रथितानि काव्यानि प्रकटितश्चान्यादृशः प्रतिभाविलासः। एतेषु मयूरस्य वृत्तान्तः प्रायेण श्रुतिपथमापतितमेव सर्वेषाम्। अयं हि मयूरः पूर्वजन्मनि क्षत्रियावस्थायां विप्रस्वमपजहार, तेन च पापेन जन्मान्तरे मयूरजातौ समुद्भूतो महारोगेण च समाक्रान्तः। तस्य खलु निखिलजन-नयनमनोहारीणि चन्द्रकाणि क्षतत्वेन विपरिणतानि न केवलमरुन्तुदां वेदनां जनयन्ति तस्य, द्रष्टृनप्यतिमात्रं समुद्वेजयन्ति। भारतभूमि-सम्पर्केण तु तस्य विचित्रा कवित्वशक्तिः प्रादुर्भूता, "आरोग्यं भास्करा-दिच्छेत्" इति शास्त्रवचनमनुरुन्धानेन च तेन ललितललितैर्वचनजालै-र्ग्रहराजस्य भास्करस्य स्तुतिर्विहिता। तिरश्चो वदनकुहराद् विनिःसरन्तीं सौष्ठवौदार्यविशेषशालिनीं सुसंस्कृतां सरस्वतीं समासाद्य करुणारस-परवशो भगवान् भानुः स्वप्रभावेण निरामयं व्यधान्मयूरराजम्।

न केवलं मयूरस्य भ्रमरस्यापि पद्यं सुप्रसिद्धमेव। तद् यथा—

बाष्पश्चक्षुषि लाञ्छनं करतले वक्त्रं न लीलाम्बुजं
गण्डे पाण्डरिमा न पत्रमकरी श्वासा मुखे न स्मितम्।
इत्थं यस्य वियोगयोगविधुरं मुग्धे तवेदं वपु-
र्नो जाने कतमः स पुष्पधनुषा नीतः प्रसादश्रियम्॥

श्लोकेऽस्मिन् रेफबाहुल्याद् द्विरेफ एवास्य विरचयितेत्यकथि तमपि ज्ञायते ।

यत्र मयूरभ्रमरादीनां पाण्डित्यं रसिकजनचेतश्चमत्कारि तत्र निखिलपशुकुलचक्रवर्त्तिनः सिंहस्य पाण्डित्यं वैदग्ध्यञ्च सकलसहृदयमानससन्तर्पकं भवेदित्यत्र किमिवाश्चर्यम् । निखिलभूपालकुलनायके विक्रमादित्ये परिपालियति महीं कश्चन सिंहः प्राक्तनसंस्कारवशात्तपोवनस्थगुरुशिष्यालापान् श्रुत्वा व्याकरणतत्त्वे परमां व्युत्पत्तिमधिजगाम । अथ कदाचित् प्रवृत्ते छात्रयोर्व्वादे सिंहशब्दस्य व्युत्पत्तिः कीदृशी इति पूर्वपक्षिणा पृष्टे प्रतिवादिनमुचितोत्तरदानेऽसमर्थमुपलभ्य गभीरगर्जनपुरःसरं विचारभूमिं समासाद्य तपोवनश्वापदोऽयमिति विश्रब्धं पश्यतो जनान् पादोत्तोलनपूर्वकमाशिषा संयोज्य—मूर्खाग्रणीरसौ पाणिनिस्तन्मतानुयायिनौ कात्यायनपतञ्जली च यैर्वर्णविपर्ययेण सिंहशब्दो व्युत्पादित इत्युक्त्वा शब्दशास्त्रमधिकृत्य विचारं प्रवर्त्तयामास । सुचिरं प्रवृत्तेऽस्मिन् विचारे सिंहस्यैव जयो निर्धारितः प्राश्निकपदवीमधिष्ठितैर्विद्वद्भिः । राज्ञा च प्रीतिप्रमुदितेन मनसास्य दैवीं ज्ञानसम्पदं समवलोक्य अमरसिंहेत्यस्य नाम व्यधायि । ततः प्रभृति सिंहोऽसौ भुव्यमरसिंह इति प्रसिद्धिमुपजगाम । ततश्च तेनामरकोषाख्यमभिधानं विरचितम् । "प्रायः समानविद्याः परस्परयशःपुरोभागा" इति न्यायेन असूयापरवशेन पाणिनिनामरकोषस्थाधीनादिशब्दानां व्याकरणानुशासनविरुद्धत्वमुद्घोषितम् । सिंहेनापि "अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम्" इति न्यायेन "क्रिया केवलमुत्तरम्" इत्यभियुक्तोक्तिमनुपालयता पाणिनेरस्थीनि मडमडायितानि । अत एवोच्यते प्राचीनैः—

सिंहो व्याकरणस्य कर्त्तुरहरत् प्राणान् प्रियान् पाणिनेः

इति । न केवलं सचेतनैरेव सिंहमयूर-भ्रमरादिभिः प्रकटितं पाण्डित्यमस्मद्देशे, अचेतनत्वेन परिगणितैर्महोदधिपर्वतादिभिर्माघादिभिश्च मासैर्नवनवाः सूक्तीः प्रकटय्यानुरञ्जितः सचेतसां सार्थः । तथाच महोदधेः श्लोकः—

गतप्राया रात्रिः कृशतनु शशी शीर्य्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्ण्यत इव
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥

यद्यपि श्लोकोऽयं शार्ङ्गधरपद्धतौ भट्टबाणीयत्वेनोदाहृतं तथाप्यत्र शशिनो घूर्णनस्य च समुल्लेखात् समुद्रस्य च ताभ्यां परिचयातिशयात् महोदधिरेवास्य विरचयितेत्यत्र नास्ति संशयलेशोऽपि परीक्षकाणाम्।

पर्वतविरचितं च पद्यमिदं समास्वाद्यतां सहृदयैः—

हर्षाश्रुदूषितविलोचनया मयाद्य
किं तस्य तत् सखि निरूपिमङ्गमङ्गम्।
रोमाञ्चकञ्चुकतिरस्कृतदेहया वा
ज्ञातानि तानि परिरम्भसुखानि किं वा ॥

स्मर्यतां तावल्लौकिकानामाभाणकः—आत्मवन्मन्यते जगदिति। कथङ्कारं नाम काठिन्यातिशयोपेतः पर्व्वतः परिरम्भसुखानि प्रभवेत् परिज्ञातुम् अतस्तद्वर्णने सुतरामप्रभविष्णुरेवंविधां वाचोयुक्तिमाश्रयते।

माघमासविरचितं शिशुपालवधकाव्यमपि सुप्रसिद्धमेव। माघमासस्य शीतातिरेकाद्दन्तकटकटा जायते तेन तस्य काव्येऽप्यन्तरान्तरा परुषाणां शब्दानां विन्यासः सन्दृश्यते।

आषाढेनापि मासेन मेघदूताख्यं मनोहरतमं खण्डकाव्यं व्यरचि; परन्तु धूर्त्तशिरोमणिना कालिदासेन तदात्मसात्कृतम्। माघस्य तु प्रभावातिशयाद् माघकाव्यमपहर्त्तुं कोऽपि न प्रगल्भते।

अन्ततश्च पुनरपि वितीर्यन्ते सहस्रशो धन्यवादा विश्वविद्यालयाय येन स्वप्नेऽप्यसम्भाविता ईदृशा अभिनववृत्तान्ता गोचरीक्रियन्ते छात्राणाम्। आशास्यते चागामिनि वर्षे छात्राः प्रक्ष्यन्ते—

What is the relationship between Aravinda Ghosa and Asvaghosa? अरविन्दघोषाश्वघोषयोः कीदृशोऽभिसम्बन्ध इति।

# मीमांसादर्शनम्

[ पूर्वतोऽनुवृत्तम् ]

## अन्यानर्थक्यात् ॥ ४ ॥

**"पूर्णाहुत्या सर्वान् कामानवाप्नोति," "पशुबन्धयाजी सर्वाल्लोँकानभिजयति," "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति। यदि भूतानुवादमात्रम्, अनर्थकम्। अथ फलविधिः, *अन्येषामानर्थक्यम्। न ह्यकृत्वा पूर्णाहुतिमग्निहोत्रादयः क्रियन्ते, न चानिष्ट्वाऽग्नीषोमीयेण सोमेन यजन्ते, न चानधीत्याश्वमेधेन यजन्ते। तद् यथा—पथि जातेऽर्के मध्वृत्सृज्य तेनैव पथा मध्वर्थिनः पर्वतं न गच्छेयु-**

---

विषयान्तरे तु स्वार्थपरत्वे दोषान्तरमप्याह—**अन्येति**। तत्राप्याद्यं सूत्रं तत्प्रदर्शनपूर्वं योजयति—**यदीति**। सर्वकामावाप्तिसर्वलोकाभिजयमृत्युतरणादीनां क्रिया-तच्छेषत्वाभावात् तद्विषयं वाक्यमनर्थकमित्यर्थः। यद्यपि फलविधित्वमेषां पूर्वसूत्रेणैव निरस्तप्रायं तथाप्यभ्युपेत्य दोषान्तरं वक्तुमुत्थापयति—**अथेति**। अत्रान्यानर्थक्यसूत्रं योजयन्नुत्तरमाह—**अन्येषामिति**। ततश्च कृत्स्नबहुविध्यनुग्रहाय पूर्णाहुत्यादिवाक्यानामेवाप्रामाण्यमिति भावः। आनर्थक्यमेव विवृणोति—**न हीत्यादिना**। अथाग्निहोत्राद्यङ्गभूताग्न्युत्पादकाधानाङ्गत्वात् पूर्णाहुतेः प्राग्भावः, अग्नीषोमीयस्य च पशोरौपवसथ्येऽहनि विहितत्वात् सोमयागात् प्राग्भावः, अश्वमेधस्य चाज्ञातस्यानुष्ठातुमशक्यत्वाज् ज्ञानस्य प्राग्भावः, ततश्च तैरेवाभिमतफलसिद्धेरन्यानर्थक्यम् इति भावः।

नन्वल्पपूर्णाहुत्यादेरपि फलसिद्ध्या महतोऽग्निहोत्रादेरानर्थक्यसम्भवात् किमिति पौर्वापर्यनियमादेवानर्थक्यं व्याख्यातमित्याशङ्क्याल्पत्वादिविशेषवतामपि समानफलानां परस्परानपेक्षायां च यथारुच्यनुष्ठानसम्भवान्नान्यानर्थक्यं दृष्टमित्यतः पौर्वापर्यनियमादेवोत्तरानर्थक्यं युक्तमिति मत्वा दृष्टान्तमाह—**तद् यथेति**। तेनैवेत्यवधारणेन पथ्यन्तराभावप्रतिपादकेन पौर्वापर्यनियमः सूचितः। दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति

---

* मूले इतरेषामितीव पाठ उपलभ्यते, अत टीकानुरोधेन अन्येषामिति पाठः स्वीकृतः।

स्तादृशं हि तत्। अपि चाहुः—

*अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥ इति ॥

## अभागिप्रतिषेधाच्च ॥ ५ ॥

"न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि" [तै० सं० ५।२।७] इत्यप्रतिषेधभागिनमर्थं प्रतिषेधन्ति। विज्ञायत एवैतदन्तरिक्षे दिवि चाग्निर्न चीयते इति। पृथिवीचयनप्रतिषेधार्थं च यद्वाक्यं भवेच्चयनप्रतिषेधार्थमेव तत्। अथाप्रमाणम्, नैष विरोधो भवति। कथं तत् प्रमाणं

—तादृशं तदिति। उक्तमर्थं विद्वद्वचनेन द्रढयति—**अपि चाहुरिति।** अर्के समीपे अयत्नलभ्ये फले यत्नाधानं गौरवादयुक्तमिति हेतुमाह—**इष्टस्येति।**

स्वार्थपर्यवसानाभ्युपगमे स्वस्यैव निर्विषयत्वप्रसङ्गं वाक्यान्तरे दर्शयति—**अभागीति।** अत्र प्रथमम् अभागिसूत्रं योजयति—**अप्रतिषेधभागिनमिति।** कथमप्रतिषेधभागित्वं चयनस्येत्याशङ्क्यान्तरिक्षद्युचयनयोरप्रस्तुतत्वेन प्रतिषेधायोग्यत्वं दर्शयति—**विज्ञायत इति।** पृथिवीचयनस्य तर्हि प्राप्तत्वान्निषेध एवेत्यत आह—**पृथिवीति।** चशब्दः शङ्काद्योतकः। "इष्टकाभिरग्निं चिनुते" इत्यादिरन्तरिक्षादावसम्भवात् पृथिव्यामेव चयनं विधत्ते। "न पृथिव्याम्" इति च तन्निषेधे निराधारचयनासम्भवात् विधिबाध इत्यर्थः। एतेन विधिविरोधान्निषेध्याभावाच्च निषेधासम्भवप्रतिपादनेन विधिविरोधात् पर्य्युदसितव्याभावाच्च पर्य्युदासोऽपि निरस्तो वेदितव्यः। न च निषेधपर्य्युदासयोर्नित्यानुवादत्वमक्रियार्थत्वेनानर्थक्यप्रसङ्गादिति चाद्यसूत्रयोजना द्रष्टव्या। न च "न पृथिव्याम्" इति निषेधस्य चयनविधिना सह विकल्पः, पृथिव्यामिति विशेषणोपादानेन तत्परतयावगतस्य प्रतिषेधस्य चयनक्रियायां कल्प्यत्वेन दुर्बलत्वादिति भावः।

ननु दुर्बलेनापि प्रतिषेधेनागत्या पाक्षिकचयनविधिबाधो नातीव दोषमावहतीत्याशङ्क्याह—**अथेति।** यदि प्रतिषेधोऽप्रमाणं तदापि न विरोध इत्यर्थः। प्रतिषेधाप्रामाण्यसम्भवादगतिरसिद्धेति भावः।

ननु पूर्णाहुत्यादेरेकस्य कल्प्यस्याग्निहोत्रादिबहुक्लृप्तविधिविरोधाद् युक्तमप्रामाण्यम्, इह तूभयोः प्रत्यक्षत्वेनाविशेषात् कथमेकान्ततः प्रतिषेधस्यैवाप्रामाण्यमित्याशङ्क्याह—

* अक्क इति पाठान्तरम्। गृहकोणे इति तदर्थः।

**यद्विध्यन्तरमाकुलयेत् स्वयं चाकुलं स्यात्। न चेतव्यं हिरण्यं निधाय चेतव्यमिति ॥ ५ ॥**

## अनित्यसंयोगात् ॥ ६ ॥

**अनित्यसंयोगश्च वेदप्रामाण्ये सति "परं तु श्रुतिसामान्यमात्रम्" इति परिहृतः। इदानीं वेदैकदेशानामाक्षिप्तानां पुनरुपोद्बलक उत्तिष्ठति—बवरः प्रावाहणिरकामयत [तै० सं० ७।१।१०] इति ॥ ६ ॥**

---

**कथं तदिति। विध्यन्तरम्,** "इष्टकाभिरग्निं चिनुते" इत्यादि। "हिरण्यं निधाय" इत्यस्य गुणपरत्वाद् "इष्टकाभिः" इत्यादिचयनोत्पत्तिवाक्यमनेनोपलक्षितम्। स्वयं व्याकुलतामेव दर्शयति—**"न चेतव्यम्"** इति। पृथिव्याधारनिषेधायोगाद् "इष्टकाभिरग्निम्" इत्यादिना चयनप्राप्तिरङ्गीकार्य्या पुनरनाधारत्वेन चयननिषेधे निषेधस्यैव व्याकुलत्वान्न प्रामाण्यसम्भावनेति भावः ॥५॥

स्वार्थपरत्वेऽर्थवादानां पौरुषेयत्वमपि स्यादित्याह—**अनित्येति।** "बवरः प्रावाहणिरकामयत" इत्याद्युदाहरणेऽनित्यसंयोगसूत्रं योजयति—**अनित्येति।** अनित्यसंयोगश्च स्वार्थपरत्वे प्रसज्येतेति शेषः। पूर्वपक्षे स्वार्थस्यैवाभावेनानित्यसंयोगाभावाद् अन्यानर्थक्याभागिसूत्रयोरपि स्वार्थपरत्वेऽन्यानर्थक्याभागिप्रतिषेधप्रसङ्गादिति योजना द्रष्टव्या। चशब्दादक्रियार्थत्वेनानर्थक्यमित्याद्यसूत्रं योजितम्।

ननु वेदाधिकरण एव "परं श्रुतिसामान्यम्" इति सूत्रेण बवरादिशब्दानां नित्यसिद्धवाय्वाद्यर्थाभिधायित्वस्योक्तत्वात् स्वार्थपरत्वेऽपि नानित्यसंयोगप्रसङ्ग इत्याशङ्क्याह—**वेदप्रामाण्ये सतीति।** तत्र हि समस्तवेदप्रामाण्याभ्युपगमेन नित्यसिद्धवाय्वाद्यर्थत्वं प्रतिपादितम्। यदा त्वर्थवादानां क्रिया-तच्छेषार्थत्वाभावेन प्रामाण्यमाक्षिप्तं तदा "वायु वैं क्षेपिष्ठा" इत्यादीनामिव नित्यार्थानामप्यप्रामाण्येन स्वार्थपरित्यागकारणाभावात् स्वार्थपरत्वे बवरादिवाक्यानामनित्यसंयोगप्रसङ्गस्योपोद्बलकस्योत्थानं युक्तमित्यर्थः। न चाध्ययनविधिबलात् सर्वस्य पुरुषार्थौपयिकत्वावगतेः कथमर्थवादानामानर्थक्यं शङ्क्यत इत्याशङ्कनीयम्, अदृष्टार्थत्वेऽपि पुरुषार्थत्वोपपत्तेः। अध्ययनविधेरैकान्ततोऽर्थपरत्वेनाक्षेपकत्वादिति भाव इति पूर्वपक्षः ॥६॥

यद्यप्यर्थवादाध्ययनस्यादृष्टार्थत्वेनोपेक्षाफलत्वेन च तदध्ययनविधेः पुरुषार्थपर्यवसानं स्यात् तथापि दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेः उपेक्षाफलस्य च शब्दप्रमाणस्यादर्शनादर्थप्रकाशनेन चानुष्ठानोपयोगितया विध्येकवाक्यत्वोपपत्तेः फलवदर्थावबोधपर्यन्ततामापादयन्नध्ययनविधिरर्थवादादीनां सामान्येन धर्मप्रमित्युपयोग दर्शयति इत्यभिप्रेत्य ।

# विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ॥७॥

इदं समाम्नायते "वायव्यं श्वेतमालभेत भूतिकामः । वायुर्वै क्षेपिष्ठा देवता । वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" [तै० सं० २।१।१] इति । "वायुर्वै क्षेपिष्ठा देवते"त्यतो यद्यपि क्रिया नावगम्यते, क्रियासम्बद्धं वा किञ्चित्, तथापि विध्युद्देशेनैकवाक्यत्वात् प्रमाणम् । "भूतिकाम" इत्येवमन्तो विध्युद्देशः । तेनैकवाक्यभूतो "वायुर्वै

---

यति—**विधिना त्वेकवाक्यत्वादिति ।**

यद्यपि चात्र यान्युदाहृत्य विशेषविनियोगभावेनानर्थक्यं पूर्वपक्षितं तेष्वेव "सोऽरोदीत्" इत्येवमादिषु सिद्धान्तोऽपि प्रदर्शयितुमुचितः, तथापि तेषां स्वार्थसत्यताप्रतिपादनेन तद्द्वारा स्तुत्युपयोगितया धर्मप्रमितिहेतुत्वप्रतिपादनात् स्वार्थसत्यानामेव स्तुत्युपयोगमात्रत्वप्रतिपादनेन विधिशेषत्ववर्णनं लघीय इत्यभिप्रेत्योदाहरणान्तरमाह—**इदमिति ।**

यद्यपि चार्थवादमात्रमत्रोदाहरणं तथापि विध्यपेक्षितप्राशस्त्यप्रतिपादनेन विध्युपयोगं दर्शयितुं सविधिवाक्यमुदाहृतम् । यदुक्तम्—"आम्नायस्य क्रियार्थत्वादानर्थक्यम्" इति । तत्र यत् क्रिया-तत्सम्बन्ध्यनभिधायित्वं तदिष्टमेवेति सौत्रं तुशब्दं व्याकुर्वन्नाह—**वायुरिति ।**

न च तावन्मात्रेणानर्थक्यमिति वदन् "विधिनैकवाक्यत्वात्" इति सूत्रावयवं व्याचष्टे —**तथापीति ।** विधिं शब्दभावनाविधिमुद्दिशतीति वा विधिरुद्दिश्यतेऽनेनेति वा विध्युद्देशो विधिबोधकं वचनम् । तेनैकवाक्यत्वाद् "वायुर्वै क्षेपिष्ठे"त्यादीनां न धर्म्मप्रमित्यनुपयोगित्वलक्षणमप्रामाण्यमित्यर्थः । न चोद्देशपदाधिक्यात् सूत्रार्थविनाशप्रसङ्गः—एकवाक्यत्वस्य शब्दधर्मस्य साक्षाद्विध्यर्थेन सहासम्भवाद् द्वारमात्रतयोद्देशग्रहणात् । यद्वा विधिशब्दस्य शब्दार्थयोः प्रयोगदर्शनात् शब्दपरतया व्याख्यानेऽपि न दोषः ।

अयमाशयः—स्वाध्यायाध्ययनविधिना तावत् समस्तस्य वेदराशेः पुरुषार्थपर्यवसायित्वमवगतम्, न चार्थवादाः श्रुत्यैव पुरुषार्थसाधनं कञ्चिदर्थमवगमयन्ति । न च विध्येकवाक्यतामन्तरेण लक्षणा । तेन समभिव्याहारावगतविध्येकवाक्यत्वबलेन लक्षणया प्राशस्त्यज्ञानं कुर्वन्तोऽर्थवादाः फलभावनाभाव्यायां विधिभावनायामुपकरिष्यन्तो नानर्थका भविष्यन्तीति ।

ननु सार्थवादस्यैव विधेरंशत्रयविशिष्टविधिभावनाबोधकत्वेन विध्युद्देशत्वात् कथं तेनार्थवादानाम् एकवाक्यत्वमत आह—**भूतिकाम** इति । केवलविधिभावनाविषयः

**क्षेपिष्ठा देवते"त्येवमादिः। कथमेकवाक्यभावः? पदानां साकाङ्क्ष-त्वाद्विधेः स्तुतेश्चैकवाक्यत्वं भवति। भूतिकाम आलभेत। कस्माद्? यतो वायुः क्षेपिष्ठेति। नायमभिसम्बन्धो विवक्षितो भूतिकामेनालब्धव्य-**

---

प्रत्ययोऽत्र विध्युद्देश इति भावः। न चैवं प्रत्यय इत्येव वाच्यम्, न भूतिकाम इत्येवमन्त इति वक्तव्यम्। अंशत्रयविशिष्टभावनाविषयशब्दप्रतिपत्त्युत्तरकालमेव स्तुत्याकाङ्क्षेति सूचनार्थत्वादिति द्रष्टव्यम्।

नन्वर्थवादानां पुरुषार्थपर्यवसानाकाङ्क्षायामपि विधेः प्रवर्त्तनारूपत्वेन प्राशस्त्यानपेक्षत्वात् सत्यपि समभिव्याहारे कथमेकवाक्यभाव इति चोदयति—**कथमिति।** विधिविषयस्य धात्वर्थस्यायासरूपत्वेन पुरुषस्य तत्र रुच्यनुत्पत्तौ विधेः प्रतिबद्धशक्तित्वेन प्रवर्त्तकत्वासम्भवात् तदुत्पत्तेश्च प्राशस्त्यज्ञानाधीनत्वाद् युक्तमेकवाक्यत्वमिति परिहरति—**पदानामिति।** विधेः स्तुतेश्च साकाङ्क्षत्वाद्विधिस्तुतिपदानामेकवाक्यत्वमिति सम्बन्धः। विधेः स्तुत्याकाङ्क्षामभिनयति—**भूतीति।**

ननु विधिभावनाया इतिकर्त्तव्यतापेक्षा कथमित्येवंरूपा स्यादर्थभावनायश्च तत् फलं कस्मादित्याकाङ्क्षा दर्शिता, नैष दोषः। इतिकर्त्तव्यताविषयैवाकाङ्क्षा यदा भावनासम्बन्धितया निरूप्यते, तदा कथमित्येवंरूपा, यदा तु प्रवर्त्तितव्यं मयेति प्रति-पुरुषसम्बन्धितया निरूप्यते, तदा कस्मादित्येवंरूपा। तत्राकाङ्क्षायाः पुरुषधर्मत्वेन भावनायामुपचरितत्वान्मुख्यामेव पुरुषापेक्षामाश्रित्य कस्मादित्युक्तमिति।

**यत इति।** यस्मात् क्षैप्रगुणकवायुदेवतासाध्यं कर्म क्षिप्रफलदत्वात् प्रशस्तमित्यर्थः।

ननु यद्यपि विधेः प्रयोजनापेक्षया प्रवर्त्तकत्वं तथापि न स्तावकापेक्षा, विधेरेव प्राशस्त्यज्ञापनद्वारा प्ररोचनायामपि व्यापारोपपत्तेरत आह—**नायमिति।** भूतिकाम आलभेत, कस्मात्? यतो "वायुर्वै क्षेपिष्ठा देवता" इत्यनेन योऽयं विधिस्तुतिसम्बन्धः सार्थवादस्य विध्युद्देशार्थो दर्शितः, नायं भूतिकामेनालब्धव्यमित्यनेन विध्युद्देशमात्रेण विवक्षित इति सम्बन्धः।

**कथं तर्हीति।** केन तर्ह्ययं विवक्षित इत्यर्थः। उत्तरम्—**आलभेतेति** मध्यप्रतीकेन समस्तो विध्युद्देशोऽभिमतः। **तत इति** पूर्ववाक्यप्रकृतवायुपरामर्शः। तेन च क्षैप्रगुणयुक्तस्य वायोः क्षिप्रमेव फलप्रापकत्वप्रतिपादकत्वं "स एवैनं भूतिं गमयती"त्येतदन्तं वाक्यमुपलक्षितम्। तेनायमर्थः—सार्थवादेन विध्युद्देशेनायमभिसम्बन्धो विवक्षितः, न केवलेनेति।

भिति। कथं तर्हि, आलभेत यतस्ततो भूतिरिति। भिन्नाविमावर्थौ। उभयाभिधाने वाक्यं भिद्येत।

किमर्था स्तुतिरिति चेत्। कथं रोचेत*नोऽनुष्ठीयेतेति। ननु प्राक् स्तुतिवचनादनुष्ठानं भूतिकामान्तात् सिद्धम्, स्तुतिवचनमनर्थकम्। न हि, यदा स्तुतिपदासन्निधानं तदा पूर्वेणैव विधिः, यदा च स्तुतिपदसम्बन्धो न तदा भूतिकामस्यालम्भो विधीयते। यथा पटो भवतीति पट उत्पद्यत

---

ननु केवलस्यैव विध्युद्देशस्य कर्तव्यतारूपविधौ प्राशस्त्ये च व्यापारः किं न स्यादत आह—**भिन्नाविति**। यद्यपि प्रशस्तत्वात् कर्त्तव्योऽयमालम्भ इति विध्युद्देशेन प्रतिपादने न वाक्यभेदोऽर्थैकत्वात् तथापि केवलविशेष्यपरत्वसम्भवेऽपि विशिष्टपरत्वकल्पने गौरवापरपर्यायवाक्यभेदप्रसङ्गस्तदवस्थ एवेत्यर्थः।

यद्यपि विधिस्तुतिरूपार्थद्वयप्रतिपादनं विध्युद्देशमात्रेण न क्रियते, तथाप्यर्थवादानर्थक्यम्। तथाहि—प्रवृत्तिप्रतिबन्धकालस्यादिविरोधिरूपा प्ररोचनैव विधेरितिकर्तव्यता न स्तुतिः। तयैव हि स्तुतिराकाङ्क्ष्यते। तत्र च विनैव प्ररोचनां विध्यवगतश्रेयःसाधनभावादेव प्रवृत्तिहेत्विच्छोत्पादनेन तद्विरोध्यालस्यादिनिराससिद्धेः स्तुत्यानर्थक्यादर्थवादानर्थक्यमिति चोदयति—**किमर्थेति**। परिहरति—**कथमिति**। ननु रुचिरेव कर्मण्यनर्थिका, तत्राह—**तत इति**। विध्यवगतश्रेयःसाधनत्वबलादालस्यनिवृत्तावपि बहुव्ययायासदर्शनाद्द्वेषोत्पत्तेः स्तुतिसाध्यप्ररोचनामन्तरेणानिरासात् साप्यनुष्ठानहेतुरिति तद्द्वारार्थवानेवार्थवाद इति भावः। किमर्था स्तुतिरिति चोद्याभिसन्धिं विवृणोति—**नन्विति**। **भूतिकामान्तादिति** फलसाधनतावगम्यं प्रवृत्तिहेतुं सूचयति। विनैव प्ररोचनां प्रवृत्तिसिद्धौ फलितमाह—**स्तुतीति**। फलसाधनतावगम्यदुःखरूपतावगमप्रतिबद्धप्रवृत्तिकारणेच्छोत्पादकत्वासम्भवात् प्रवृत्त्यङ्गप्ररोचननिमित्ततया स्तुतिराश्रेयेति। परिहरति—**न हीति**। स्यादेतत्। विधेः प्ररोचकस्तुत्यपेक्षायामपि नार्थवादान्वयः विधिबलेनैव प्राशस्त्यस्याक्षेपात्। न च गौरवं दोषाय, "वसन्ताय कपिञ्जलानालभेत" इत्यादौ तथा दर्शनादिति, तत्राह—**यदेति**।

**स्तुतिपदान्य**र्थवादाः। **पूर्वेण** विध्युद्देशेनैव विधिः सप्रयोजनः पर्यवस्येदित्यर्थः। तत्र गत्यन्तराभावाद् गौरवमप्याश्रीयत इति भावः। यत्र तु सार्थवादो विध्युद्देशस्तत्र नैवमित्याह—**यदा चेति**। चस्त्वर्थः। आलम्भशब्दस्तद्विषयसप्ररोचनसमग्रविधिपरः। **विधीयते** प्रतिपाद्यते। पूर्वेणैवेत्यनुषङ्गः। तत्र ह्यर्थवादानामेव स्तुत्या प्ररोचकत्वोपपत्तौ न विध्युद्देशस्यैव तदाक्षेपकत्वं गौरवावहमाश्रयणीयमिति भावः। योग्यपदान्तरानुच्चारणे तन्निरपेक्षमेव वाक्यं स्वार्थे पर्यवसितमिति न तदुच्चारणेऽपि तथैव तत्र पर्यवस्यतीत्यत्र

---

* 'ततोऽनुष्ठीयेत' इति पाठष्टीकाकृतः सम्मत इति प्रतिभाति।

**इत्यर्थः। निराकाङ्क्षं च पदद्वयम्। यदा तु तस्मिन्नेव रक्त इत्यपरं श्रूयते तदा रागसम्बन्धो भवतीत्यर्थः। भवति च रक्तं प्रत्याकाङ्क्षा। एवं यदा न स्तुतिपदानि, विधिशब्देनैव तदा प्ररोचना, यदा स्तुतिवचनं तदा स्तवनेन। नन्वेवं सति किं स्तुतिवचनेन, यस्मिन् सत्यविधायकं मा भूत् तत्; तदभावेऽपि पूर्वविधिनैव प्ररोचयिष्यत इति। सत्यम्, विनापि तेन सिध्येत प्ररोचनम्। अस्ति तु तत, तस्मिन् विद्यमाने योऽर्थो वाक्यस्य सोऽवगम्यते स्तुतिः प्रयोजनं तयोः। तस्मिन्नविद्यमाने विधिना प्ररोचनमिति।**

---

दृष्टान्तमाह—**यथेति**। अवान्तरवाक्यस्य पदान्तरनिरपेक्षतया स्वार्थपर्यवसानप्रदर्शनाय वाक्यार्थकथनं **पट उत्पद्यत** इति। तत्फलनिरपेक्षत्वमुक्तं—**निराकाङ्क्षं चेति**। पदान्तरसन्निधाने तस्यैवावान्तरवाक्यस्यार्थान्तरं भवतीत्याह—**यदा त्विति**। तत् फलमुक्तम्—**भवति चेति**। **रक्तं** तत्पदं प्रतीत्यर्थः। दार्ष्टान्तिके योजयति—**यदा नेति**। तदा विधिशब्देनैव प्राशस्त्याक्षेपेण प्ररोचनापि क्रियत इत्यर्थः। **स्तवनेन** प्ररोचनेत्यनुषङ्गः।

ननु यत्रावान्तरवाक्यस्य महावाक्यार्थे सामर्थ्यं नास्ति तत्र तथास्तु। इह तु महावाक्यार्थेऽवान्तरवाक्यस्य सामर्थ्याभ्युपगमात् किं महावाक्येनेति शङ्कते—**नन्विति**।

ननु विध्युद्देशस्यैव सामर्थ्येऽपि श्रूयमाणत्वाद् अर्थवादानां तदर्थत्वस्याप्यभ्युपगमः, तत्राह—**यस्मिन्निति**। यस्मिंस्तु वचने अवान्तरवाक्यमविधायकं सप्ररोचनविधिपर्यवसितं न स्यात्, तत् स्तुतिवचनं मा भूदित्यर्थः।

स्तुतिपदपरित्यागे लाभान्तरमाह—**तदभाव** इति। ततश्चातिलाघवमिति भावः। अपौरुषेये वेदे लघुनोपायेन सिद्धे किं गुरुणेति परित्यागपरिचोदनानुपपन्नेति परिहरति—**सत्यमिति**। **तेन** स्तुतिवादेन। **प्रयोजनम्**—स्तुतिसाध्यप्ररोचना। **तत्** स्तुतिवचनम्। परित्यागानुपपत्तौ फलितमाह—**तस्मिन्निति**। स्तुतिवचने **विद्यमान** एव **योऽर्थो वाक्यस्य** स्तुतिकार्य्यां प्ररोचना सोऽर्थो**ऽवगम्यते**। अवगतिशब्देन तत्कार्य्योऽङ्गीकारो लक्ष्यते, तेनाङ्गीक्रियते, अङ्गीकार्य्य इत्यर्थः। इतरथार्थवादाम्नानवैयर्थ्यादिति भावः। कोऽसौ सत्येव स्तुतिवचने विद्यमानोऽर्थस्तत्राह—**स्तुतिरिति**—स्तुतिद्वारं प्ररोचनम्। तच्च तयोर्विधिस्तुतिपरयोर्द्वयोर्न त्वेकैकस्य। न च त्वन्मतेऽर्थवादस्यैव स्तुतिरर्थ इति कथं द्विवचनेन विध्युद्देशस्यापि सोऽभिधीयत इत्यभिधातव्यं विधेरपि स्तुत्यसमर्पणेन स्तुतिहेतुतया तत्फलत्वात् स्वयमेव स्तावकत्वस्यैवानङ्गीकारादित्यभिसन्धिः। किमिति तर्हि विधेरेव प्ररोचनायामपि सामर्थ्यं क्वचिदङ्गीकृतम्, तत्राह—
अर्थवादाभावादगत्या गौरवमङ्गीकृतमित्याशयः।

**ननु सतस्वपि स्तुतिपदेषु पूर्वस्य विधिसरूपत्वाद्विधिरभिप्रेतः स्यात्, न विवक्ष्येत स्तुतिपदसम्बन्धः। आह—स्तुतिपदानि ह्यनर्थकान्यभविष्यन् साकाङ्क्षाणि। भवन्त्वनर्थकानीति चेत्। न गम्यमानेऽर्थेऽविवक्षितार्थानि भवितुमर्हन्ति। योऽसौ विध्युद्देशः, स शक्नोति निरपेक्षोऽर्थं विधातुम्, शक्नोति च स्तुतिपदानां वाक्यशेषीभवितुम्। प्रत्यक्षश्च वाक्यशेषभावः। अतोऽस्माद्विधेः स्तुतिमवगच्छामः। ननु निरपेक्षादपि विधिमवगमिष्यामः। भवत्वेवम्। नैवं**

---

ननु यद्यप्यपौरुषेयत्वाद्वेदस्य नार्थवादाम्नाने पर्यनुयोगः* तथापि न तेभ्यः प्ररोचना किन्तु विधेरेव, आनर्थक्यं तु तेषामिष्टमेवेति मन्वानश्चोदयति—**ननु सतस्विति**। पूर्वस्य विध्युद्देशस्य "वसन्ताय कपिञ्जलान्" इत्यादिकेवलविधिसरूपत्वात् तेनैव विधिः सप्ररोचनोऽभिप्रेतः प्रतिपादितः स्यादित्यर्थः। ततः किमत आह—**न विवक्ष्येतेति**। स्तुतिपदानां विधिपदेन सम्बन्धो विद्यमानोऽपि नाभिप्रेयत इत्यर्थः। तर्हि साकाङ्क्षत्वात् स्तुतिपदान्यनर्थकानि स्युरिति यथाश्रुतमादाय परिहरति—**नेति**। **साकाङ्क्षाणीति** हेत्वर्थं विशेषणम्। परः स्वाभिप्रायं विवृणोति—**भवन्त्विति**। अध्ययनविधिदृष्टार्थवत्त्वं चासम्भवादनादेयमेवेति। परिहरति—**न गम्यमानेति**। अविवक्षितेति च्छेदः। विध्येकवाक्यतया स्तुतिलक्षणया प्ररोचनमर्थवादानामर्थः। नासावसति बाधकेऽपहेय इत्यर्थः।

ननु निरपेक्षस्य विधेः क्वचित् पर्यवसानदर्शनं बाधकम्, अत आह—**योऽसाविति**। **विधातुं** सप्रयोजनविधौ पर्य्यवसातुम्। **वाक्यशेषीभवितुम्**—स्तुत्यप्रतिपादनेन स्तावकवाक्यानां शेषीभवितुम्। अत उभयथासम्भवान्न निरपेक्षविधिपर्यवसानदर्शनं बाधकमित्यभिप्रायः।

ननूभयथासम्भवमात्रेण कथं प्रकृते वाक्यशेषभावस्तत्राह—**प्रत्यक्षश्चेति**। उक्तमेतद् "भूतिकाम आलभेत कस्मादि"त्यादिनेति भावः। उपसंहरति—**अत इति**। **विधेरिति** षष्ठी। विधिसम्बन्धिनो**ऽस्माद्** वाक्यशेषादेव स्तुतिमवगच्छामः, न विधेरेवेत्यर्थः। स्यादेतत्। यथार्थवादार्थो गम्यमानत्वान्नापहेयस्तथा विधेरपि निरपेक्षस्यैव क्वचित् पर्य्यवसानदर्शनात् तदपि नापहेयम्। ततश्च सार्थवादेऽपि विधौ निरपेक्षस्यैव पर्यवसानं युक्तमिति चोदयति—**नन्विति**। **विधिं** सप्ररोचनमिति यावत्। दूषयति—**भवत्विति**। यद्यपि यथादर्शनं केवलस्य विधेः पर्य्यवसानमवगम्यते तथापि स्तुतिपदसम्बन्धे सत्यवगम्य-

---

* "आम्नायस्य गतिं वक्तुं प्रभवामो न त्वाम्नायं पर्य्यनुयोक्तुम्" इत्युक्तेः। "यो नाम वेदस्य कर्त्ता स्यात् स एवं पर्य्यनुयुज्येत, 'लघुनोपायेन सिद्धे किं महावाक्यमाश्रयसी'ति। तदभावान्न पर्य्यनुयोगः॥"—तन्त्रवार्त्तिकम्।

विज्ञायते भवद्भिः। ततो नैयायिकधुरन्धरा बहूनामेवान्तेवासिनामध्यापनेन महामहोपाध्यायेत्युपाधिमन्वर्थं कुर्व्वाणाः पार्व्वतीचरणतर्कतीर्थमहाभागा अमरधामातिथित्वं स्वीचक्रुः। एते महात्मानः कांश्चन शास्त्रीयग्रन्थान् पाटवेन सम्पाद्य विद्वत्समाजस्य सुमहान्तमेवोपकारं संसाध्य कामप्यलोकसामान्यां प्रतिष्ठां लेभिरे। ततो देशहितैषिणो वेदव्याकरणादिशास्त्रेषु कृतश्रमा मोक्षदाचरणसामाध्यायिनोऽस्मान् विहाय परलोकप्रयाणं चक्रुः। ततोऽपि हिन्दुविश्वविद्यालयाध्यापकाः काव्यव्याकरणन्यायादिशास्त्रेषु परिनिष्ठितबुद्धयो हरिहरशास्त्रिणोऽकाल एव कालकवलतां गताः। एते सर्व्वे एव महात्मानः परिषदोऽकृत्रिमसुहृदो हितैषिणश्चासन्नित्येतेषां वियोगेन परिषत्पक्षीया वयं भृशसन्तप्तास्तेभ्यः श्रद्धासन्ततिं विनिवेदयामः।

कार्य्यजातेषु तावत् प्रथममेव समुल्लेखमर्हति विगतवर्षीयवार्षिकसभा। एषा खलु सभा विगते वर्षे सौराश्विनस्य षोडशदिवसे 'युनिभार्सिटी इन्ष्टिटिउट्' इत्याख्यभवने समपादि। तत्र नैयायिककेशरिणां श्रीमतां कामाख्यानाथतर्कवागीशपादानामाध्यक्ष्यमासीत्। नानाशास्त्रपारदर्शिनो विविधविबुधाः समागत्येमां संसदं शोभयन्ति स्म। तत्रादौ गीते सुकण्ठेन श्रीमता विष्णुपददत्तमहोदयेनोद्बोधनसङ्गीते, वाचिते सम्पादकेन श्रीमदमरेश्वरठाकुरेण संस्कृतभाषोपनिबद्धे पञ्चदशवार्षिककार्य्यविवरणे, पठिते चान्यतरसम्पादकेन श्रीमता सत्येन्द्रनाथवसुजमहोदयेन वङ्गभाषोपनिबद्धे विगतवर्षीय एव कार्य्यजाते, विवृते च परिषच्छात्रेण श्रीमता रोहिणीकुमारकाव्यतीर्थेन छात्रसमितेस्तृतीयवार्षिककार्य्यनिवहे वाराणसीशरणानां शिवसायुज्यप्राप्तानाम् ऋषिकल्पानां नैयायिकशिरोमणीनां वामाचरणन्यायाचार्य्यमहाभागानां चित्रोन्मोचनमकारि सभापतिपादैः। चित्रप्रतिष्ठया भारतीयविदुषां स्मृतिरक्षाविधानं हि परिषदोऽन्यतमं कार्य्यमिति जानन्त्येव भवन्तः। न्यायाचार्य्यपादानां चित्रं तच्छिष्येण कविराजशिरोमणिश्रीमच्छ्यामादास-

विज्ञायते भवद्भिः। ततो नैयायिकधुरन्धरा बहूनामेवान्तेवासिनामध्यापनेन महामहोपाध्यायेत्युपाधिमन्वर्थं कुर्व्वाणाः पार्व्वतीचरणतर्कतीर्थमहाभागा अमरधामातिथित्वं स्वीचक्रुः। एते महात्मानः कांश्चन शास्त्रीयग्रन्थान् पाटवेन सम्पाद्य विद्वत्समाजस्य सुमहान्तमेवोपकारं संसाध्य कामप्यलोकसामान्यां प्रतिष्ठां लेभिरे। ततो देशहितैषिणो वेदव्याकरणादिशास्त्रेषु कृतश्रमा मोक्षदाचरणसामाध्यायिनोऽस्मान् विहाय परलोकप्रयाणं चक्रुः। ततोऽपि हिन्दुविश्वविद्यालयाध्यापकाः काव्यव्याकरणन्यायादिशास्त्रेषु परिनिष्ठितबुद्धयो हरिहरशास्त्रिणोऽकाल एव कालकवलतां गताः। एते सर्व्व एव महात्मानः परिषदोऽकृत्रिमसुहृदो हितैषिणश्चासन्नित्येतेषां वियोगेन परिषत्पक्षीया वयं भृशसन्तप्तास्तेभ्यः श्रद्धासन्ततिं विनिवेदयामः।

कार्य्यजातेषु तावत् प्रथममेव समुल्लेखमर्हति विगतवर्षीयवार्षिकसभा। एषा खलु सभा विगते वर्षे सौराश्विनस्य षोडशदिवसे 'युनिभार्सिटी इन्ष्टिटिउट्' इत्याख्यभवने समपादि। तत्र नैयायिककेशरिणां श्रीमतां कामाख्यानाथतर्कवागीशपादानामाध्यक्ष्यमासीत्। नानाशास्त्रपारदर्शिनो विविधविबुधाः समागत्येमां संसदं शोभयन्ति स्म। तत्रादौ गीते सुकण्ठेन श्रीमता विष्णुपददत्तमहोदयेनोद्बोधनसङ्गीते, वाचिते सम्पादकेन श्रीमदमरेश्वरठाकुरेण संस्कृतभाषोपनिबद्धे पञ्चदशवार्षिककार्य्यविवरणे, पठिते चान्यतरसम्पादकेन श्रीमता सत्येन्द्रनाथवसुजमहोदयेन वङ्गभाषोपनिबद्धे विगतवर्षीय एव कार्य्यजाते, विवृते च परिषच्छात्त्रेण श्रीमता रोहिणीकुमारकाव्यतीर्थेन छात्रसमितेस्तृतीयवार्षिककार्य्यनिवहे वाराणसीशरणानां शिवसायुज्यप्राप्तानाम् ऋषिकल्पानां नैयायिकशिरोमणीनां वामाचरणन्यायाचार्य्यमहाभागानां चित्रोन्मोचनमकारि सभापतिपादैः। चित्रप्रतिष्ठया भारतीयविदुषां स्मृतिरक्षाविधानं हि परिषदोऽन्यतमं कार्य्यमिति जानन्त्येव भवन्तः। न्यायाचार्य्यपादानां चित्रं तच्छिष्येण कविराजशिरोमणिश्रीमच्छ्यामादास-

वाचस्पतिमहोदयानामात्मजेनोदारमतिना श्रीमता विमलानन्दतर्कतीर्थ-महोदयेन प्रदत्तमासीदिति तस्मै हार्द्दिकान् धन्यवादान् वितरामः। चित्रोद्घाटनावसरे महामहोपाध्यायाः श्रीमन्तः शितिकण्ठवाचस्पतयः श्रीमन्तोऽनन्तकृष्णशास्त्रिणः कविराजशिरोमणयः श्रीमन्तः श्यामादास-वाचस्पतयस्तथा वर्णाश्रमस्वराज्यसङ्घप्रधानमन्त्रिणः श्रीमन्तो देवनायका-चार्य्याश्च देवभूयं गतानां न्यायाचार्य्यपादानाम् औदार्य्यसारल्यधर्म्मप्राणता-दिकान् गुणनिवहान् विस्तरेण व्यवृण्वन्। अन्ते च गौतमकल्पैः सभापति-पादैः सामाजिकानां नितरां मनोहारि स्वाभिभाषणं वाचितम्। ततः परिषत्स्थायिसभापतिभिः श्रीमद्दुर्गाचरणसांख्यवेदान्ततीर्थमहोदयैः सभापतिपादेभ्योऽशेषा धन्यवादा वितीर्णाः। सभाभङ्गवार्त्तायां विघोषितायां कैश्चन नाट्यकलाकुशलैः परिषत्सदस्यै रूपकरचनारसिक-चूडामणेर्भासस्य बालचरितं नाम भगवतः श्रीकृष्णस्य बाल्यलीलात्मक-मतीव रमणीयं नाटकमभिनीतमासीत्। अभिनयं संप्रेक्ष्य सामाजिकाः परामेव मुदं प्रकटितवन्तः।

आलोच्ये वर्षे विशेषाधिवेशनत्रयं परिषदः संवृत्तम्। एकस्मिन् खल्वधिवेशने परिषदा विश्वविद्यालयसंस्कृतभाषावश्यपाठ्यत्वनिरोध-प्रस्तावस्य प्रतिवादः कृतः। तत्राध्यक्ष्यमासीन्महामहोपाध्यायानां श्रीमतां गुरुचरणतर्कदर्शनतीर्थमहोदयानाम्। अपरस्मिन्नधिवेशनद्वये यथाक्रमं महामहोपाध्यायानां श्रीमतां दुर्गाचरणसांख्यतीर्थमहोदयानां तथा महा-महोपाध्यायश्रीयुक्तकामाख्यानाथतर्कवागीशपादानामाध्यक्ष्येण स्वरारूढयो-र्महामहोपाध्याययोर्हरप्रसादशास्त्रि पार्व्वतीचरणतर्कतीर्थमहोदययोः कृते शोकप्रकाशः कृतः।

परिषद् उद्देश्यं तावत् समासतः संस्कृतशिक्षाप्रभावविस्तार एव। एतदुद्देश्यसंसाधनाय परिषदा साधारणसभानुष्ठानं विद्यालयसंरक्षणं मासिकपत्रप्रकाशनं मुद्रितानां तथा हस्तलिखितानां ग्रन्थानां संग्रह-करणम् अप्रकाशितपूर्व्वाणां ग्रन्थानां प्रकाशनं रूपकाभिनयश्चोपायत्वेना-

वलम्बिताः। परिषदः साधारणसभासु संस्कृतभाषामयनिबन्धाः पठ्यन्ते संस्कृतेनैव तेषां समालोचनान्यपि क्रियन्ते। विगते वर्षे परिषदो साधारणसभाया नवसंख्याकान्यधिवेशनानि सञ्जातानि। तेषु तेष्वधोनिर्द्दिष्टनामानो निबन्धास्तत्पार्श्वोद्दिष्टनामभिः पण्डितवर्य्यैर्वाचिताः। एषां निबन्धानां प्रायः सर्व्व एव परिषत्पत्रिकायां प्रकाशं गता इति परिज्ञातमेव माननीयानां परिषत्पत्रिकापाठकानां परिषत्सदस्यानाम्।

| | निबन्धाः | निबन्धारः |
|---|---|---|
| १। | पदमञ्जरीकर्त्ता हरदत्तः | श्रीयुक्त-क्षितीशचन्द्रचट्टोपाध्यायः |
| २। | इन्द्रायुधम् | ,, रामलिङ्गशास्त्री |
| ३। | प्रयागस्नानम् | ,, वेणुधरतर्कतीर्थः |
| ४। | कुलार्णवतन्त्रस्य सम्प्रदायविशेषः | ,, चिन्ताहरणकाव्यतीर्थः |
| ५। | प्राचीनवैयाकरणाः | ,, क्षितीशचन्द्रचट्टोपाध्यायः |
| ६। | योगर्द्धिः | ,, चिन्ताहरणकाव्यतीर्थः |
| ७। | कातन्त्रव्याकरणम् | ,, क्षितीशचन्द्रचट्टोपाध्यायः |
| ८। | वैयाकरणप्रवरः कालिदासः | ,, क्षितीशचन्द्रचट्टोपाध्यायः |
| ९। | लुप्तप्रायाः स्मृतयः | ,, जानकीनाथसाहित्यशास्त्री |

विगते वर्षे कार्य्यनिर्व्वाहकसमितेरधिवेशनान्यप्यष्टावभूवन्। तत्र तत्राधिवेशनेषु बहव एव सदस्याः समागत्य यथायथं कार्य्यजातं निष्पादयामासुः।

विगते वर्षे परिषद्विद्यालयाध्यापकानां प्रण्डितप्रवराणां श्रीमतां कालीपदतर्काचार्य्याणां राजकीयसंस्कृतमहाविद्यालयेऽध्यापकत्वेन नियोगः सञ्जातः। अतस्तैः परिषदध्यापनं न सुकरमिति विज्ञाप्य स्वपदत्यागः कृतः। तैस्तु महात्मभिरतीव प्रयत्नं स्वीकृत्य आ परिषद्विद्यालयस्थापनादेतावन्तं कालमध्यापनं कृतम्, अत एतेषां पदत्यागेन वयं नितरामेव दुःखिता इत्यत्र किं ब्रूमः। तथाप्येतेषां कोऽप्यभ्युदयविशेषः सञ्जात इति कृत्वा तानभिनन्दामो वयम्। एतत्तत्राश्वासनं

यद्द् विद्याविमलचेतसो ब्राह्मण्यावताराः श्रीमन्तः सीतानाथसिद्धान्त-वागीशमहोदयास्तत्पदे नियुक्ताः परिषदन्तेवासिनामध्यापनं कुर्व्वन्तः सर्व्वेषामेव मोदं विदधते। श्रीमदुपेन्द्रमोहनसांख्यतीर्थमहोदयाः पूर्व्वत एवाध्यापयन्त आसते इति विदितमेव भवताम्। प्रावीण्यमुपगतानां सिद्धान्तवागीश-सांख्यतीर्थमहोदयानां प्रयत्नविशेषेण परिषद्विद्यालयस्य कोऽप्यभ्युदयोऽचिरमेव भावीति सर्व्वे वयमाशास्महे। विगते वर्षे परिषद्विद्यालये त्रिंशच्छात्रा अधीतवन्तस्तेषु दश नाना-विषयपरीक्षासु समवातरन्, षट् च समुत्तीर्णाः सञ्जाताः।

कलिकाताविश्वविद्यालयाध्यापकेन पाण्डित्यमण्डितबुद्धिना श्रीमता क्षितीशचन्द्रचट्टोपाध्यायमहोदयेन तथा तत्सहकारिणा सुधीवर्य्येण श्रीमता उपेन्द्रमोहनसांख्यतीर्थेन च सम्पाद्यमाना परिषत्पत्रिका क्रमश एव किमपि वैशिष्ट्यमर्ज्जयन्ती विदुषां मनःपरितोषं विदधाना वर्त्तते इत्यस्माकं महते मोदाय। नानाविघ्नबाहुल्यवशाद् विगतवर्षीयाणां कासाञ्चन संख्यानां प्रकाशने स्वल्पो विलम्बो जात इति क्षन्तव्या वयं परिषत्पत्रिकाग्राहकानुग्राहकवर्गैः।

संस्कृतग्रन्थानां संग्रहेण ग्रन्थालयसमृद्धिसाधनं प्रति परिषत् सर्व्वदैव कृतावधाना वर्त्तते। इतः प्राक् परिषदि मुद्रितग्रन्थानां संख्या द्व्यधि-काष्टशतोत्तरसहस्रत्रयम् ( ३८०२ ) अमुद्रितानाञ्च शताधिकत्रिसहस्रमात्र-मासीत्। आलोच्ये वर्षे सा संख्या यथाक्रमं द्व्यधिकशतत्रयेण सार्द्धशतेन च वृद्धिमाप्ता। महामहोपाध्यायश्रीमद्गणनाथसेनसरस्वती-श्रीमद्रघुनाथमल्लिक-श्रीमत्सतीशचन्द्रभट्टाचार्य-श्रीमद्-वसन्तकुमार-राय-प्रमुखा महात्मानस्तथा माणिकचन्द्रजैनग्रन्थमालाया अधिकारिणः परिषद्-ग्रन्थालये कतिचिन्मुद्रितान् ग्रन्थान् श्रीमदुपानन्दगोस्वामिमहोदयाश्च बहूनेव हस्तलिखितान् ग्रन्थान् प्रदाय ग्रन्थालयस्य पुष्टिं विदध्युरिति ते सर्व्व एवास्माकं धन्यवादार्हाः। माननीयाः सदस्या एतदहं सगौरवमुद्-घोषयामि परिषदि यो मुद्रितग्रन्थसंग्रहो वर्त्तते तत्तुल्यसंग्रहः कोऽपि

वलम्बिताः। परिषदः साधारणसभासु संस्कृतभाषामयनिबन्धाः पठ्यन्ते संस्कृतेनैव तेषां समालोचनान्यपि क्रियन्ते। विगते वर्षे परिषदो साधारणसभाया नवसंख्याकान्यधिवेशनानि सञ्जातानि। तेषु तेष्वधोनिर्द्दिष्टनामानो निबन्धास्तत्पार्श्वोद्दिष्टनामभिः पण्डितवर्य्यैर्वाचिताः। एषां निबन्धानां प्रायः सर्व्व एव परिषत्पत्रिकायां प्रकाशं गता इति परिज्ञातमेव माननीयानां परिषत्पत्रिकापाठकानां परिषत्सदस्यानाम्।

| | निबन्धाः | | निबन्धारः |
|---|---|---|---|
| १। | पदमञ्जरीकर्त्ता हरदत्तः | | श्रीयुक्त-क्षितीशचन्द्रचट्टोपाध्यायः |
| २। | इन्द्रायुधम् | ,, | रामलिङ्गशास्त्री |
| ३। | प्रयागस्नानम् | ,, | वेणुधरतर्कतीर्थः |
| ४। | कुलार्णवतन्त्रस्य सम्प्रदायविशेषः | ,, | चिन्ताहरणकाव्यतीर्थः |
| ५। | प्राचीनवैयाकरणाः | ,, | क्षितीशचन्द्रचट्टोपाध्यायः |
| ६। | योगर्द्धिः | ,, | चिन्ताहरणकाव्यतीर्थः |
| ७। | कातन्त्रव्याकरणम् | ,, | क्षितीशचन्द्रचट्टोपाध्यायः |
| ८। | वैयाकरणप्रवरः कालिदासः | ,, | क्षितीशचन्द्रचट्टोपाध्यायः |
| ९। | लुप्तप्रायाः स्मृतयः | ,, | जानकीनाथसाहित्यशास्त्री |

विगते वर्षे कार्य्यनिर्व्वाहकसमितेरधिवेशनान्यप्यष्टावभूवन्। तत्र तत्राधिवेशनेषु बहव एव सदस्याः समागत्य यथायथं कार्य्यजातं निष्पादयामासुः।

विगते वर्षे परिषद्विद्यालयाध्यापकानां प्रण्डितप्रवराणां श्रीमतां कालीपदतर्काचार्य्याणां राजकीयसंस्कृतमहाविद्यालयेऽध्यापकत्वेन नियोगः सञ्जातः। अतस्तैः परिषदध्यापनं न सुकरमिति विज्ञाप्य स्वपदत्यागः कृतः। तैस्तु महात्मभिरतीव प्रयत्नं स्वीकृत्य आ परिषद्विद्यालयस्थापनादेतावन्तं कालमध्यापनं कृतम्, अत एतेषां पदत्यागेन वयं नितरामेव दुःखिता इत्यत्र किं ब्रूमः। तथाप्येतेषां कोऽप्यभ्युदयविशेषः सञ्जात इति कृत्वा तानभिनन्दामो वयम्। एतत्तत्राश्वासनं

यद् विद्याविमलचेतसो ब्राह्मण्यावताराः श्रीमन्तः सीतानाथसिद्धान्तवागीशमहोदयास्तत्पदे नियुक्ताः परिषदन्तेवासिनामध्यापनं कुर्व्वन्तः सर्व्वेषामेव मोदं विदधते। श्रीमदुपेन्द्रमोहनसांख्यतीर्थमहोदयाः पूर्व्वत एवाध्यापयन्त आसते इति विदितमेव भवताम्। प्रावीण्यमुपगतानां सिद्धान्तवागीश-सांख्यतीर्थमहोदयानां प्रयत्नविशेषेण परिषद्विद्यालयस्य कोऽप्यभ्युदयोऽचिरमेव भावीति सर्व्वे वयमाशास्महे। विगते वर्षे परिषद्विद्यालये त्रिंशच्छात्रा अधीतवन्तस्तेषु दश नानाविषयपरीक्षासु समवातरन्, षट् च समुत्तीर्णाः सञ्जाताः।

कलिकाताविश्वविद्यालयाध्यापकेन पाण्डित्यमण्डितबुद्धिना श्रीमता क्षितीशचन्द्रचट्टोपाध्यायमहोदयेन तथा तत्सहकारिणा सुधीवर्य्येण श्रीमता उपेन्द्रमोहनसांख्यतीर्थेन च सम्पाद्यमाना परिषत्पत्रिका क्रमश एव किमपि वैशिष्ट्यमर्ज्जयन्ती विदुषां मनःपरितोषं विदधाना वर्त्तते इत्यस्माकं महते मोदाय। नानाविघ्नबाहुल्यवशाद् विगतवर्षीयाणां कासाञ्चन संख्यानां प्रकाशने स्वल्पो विलम्बो जात इति क्षन्तव्या वयं परिषत्पत्रिकाग्राहकानुग्राहकवर्गैः।

संस्कृतग्रन्थानां संग्रहेण ग्रन्थालयसमृद्धिसाधनं प्रति परिषत् सर्व्वदैव कृतावधाना वर्त्तते। इतः प्राक् परिषदि मुद्रितग्रन्थानां संख्या द्व्यधिकाष्टशतोत्तरसहस्रत्रयम् ( ३८०२ ) अमुद्रितानाञ्च शताधिकत्रिसहस्रमात्रमासीत्। आलोच्ये वर्षे सा संख्या यथाक्रमं द्व्यधिकशतत्रयेण सार्द्धशतेन च वृद्धिमाप्ता। महामहोपाध्यायश्रीमद्गणनाथसेनसरस्वती-श्रीमद्रघुनाथमल्लिक-श्रीमत्सतीशचन्द्रभट्टाचार्य-श्रीमद्-वसन्तकुमार-रायप्रमुखा महात्मानस्तथा माणिकचन्द्रजैनग्रन्थमालाया अधिकारिणः परिषद्ग्रन्थालये कतिचिन्मुद्रितान् ग्रन्थान् श्रीमदुपानन्दगोस्वामिमहोदयाश्च बहूनेव हस्तलिखितान् ग्रन्थान् प्रदाय ग्रन्थालयस्य पुष्टिं विदध्युरिति ते सर्व्व एवास्माकं धन्यवादार्हाः। माननीयाः सदस्या एतदहं सगौरवमुद्घोषयामि परिषदि यो मुद्रितग्रन्थसंग्रहो वर्त्तते तत्तुल्यसंग्रहः

कुत्राप्यन्यो देशो नास्त्येव। परिषद्ग्रन्थालयो यथा सर्व्वेषामेव शास्त्रानुरागिणां सुवमुपयोगिताञ्चावहेत्तदर्थं सर्व्वथा प्रयत्नविशेषः प्रकस्यते श्रीमद्भिर्जानकीनाथसाहित्यशास्त्रिभिरिति ते सर्व्वेषां परिषद्धितेप्सूनामान्तरिकं धन्यवादमर्हन्ति।

राजकीयसाहाय्यस्य न्यूनीकरणात् परिषदः सुमहदेवार्थकष्टं सञ्जातमिति बहुशो विज्ञापितमस्माभिः। अप्रकाशितपूर्व्वाणां ग्रन्थानां प्रकाशने व्यग्रमानसा अपि वयम् अर्थकृच्छ्रप्रतिबद्धचेष्टा आशानुरूपं साफल्यमर्ज्जयितुं न शक्नुमः। एतन्मात्रं निवेद्यते श्रीमत्कालीपदतर्काचार्य्यसम्पादितं भाषारत्नं समाप्तिं नीतम्। श्रीमता क्षितीशचन्द्रचट्टोपाध्यायेन सम्पादितं रुद्रदासकविकृतं चन्द्रलेखासट्टकम् आशाधरकविकृतञ्च कोविदानन्दं परिषत्पत्रिकासु मुद्र्यमाणतामापद्येते।

संस्कृतभाषायां प्रीतिसञ्जननं प्राचीनाचारव्यवहारपरिज्ञानञ्च रूपकाभिनयेन यथा सम्पद्येते तथा नान्येन केनाप्युपायेनेति कृत्वा रूपकाभिनयः परिषदुद्देश्यपूरणानुकूल इत्यङ्गीकृत्यान्तरान्तरा रूपकाभिनयो विधीयते परिषत्सदस्यैः। विगते वर्षे अटो श्राडन इतिनामा कश्चिद् युरोपीयः पण्डितः परिषत्परिदर्शनार्थमायातः। तस्य संवर्धनावसरे परिषदा परिषद्भवने भासविरचितस्य कर्णभारस्याभिनयः कृतः। संश्रुताभिनयकलाकौशलानां परिषत्सदस्यानां स्थानान्तरेभ्योऽपि क्वचित् क्वचिन्निमन्त्रणमायाति। विगते वर्षे निखिलवर्णाश्रमस्वराज्यसङ्घस्य पञ्चमाधिवेशने आहूताः परिषत्सदस्या बालचरितस्याभिनयं प्रायुञ्जत नाना दिग्देशेभ्यः समागतानां धर्म्माचार्य्याणामन्येषामपि विशिष्टसामाजिकानां तृप्तिं विधाय चरितार्थम्मन्या बभूवुश्च।

विगते वर्षे राजकोषतः परिषदा सहस्रमुद्रात्मकं कर्पोरेशनसभातश्च साकल्येन सार्द्धाष्टशतमुद्रात्मकं साहाय्यं लब्धमिति तत्र तत्राधिकारवद्भ्यः पुरुषेभ्य आन्तरिकीं कृतज्ञतां ज्ञापयामः।

महाभागाः, विगतवर्षीयं परिषत्कार्य्यंजातं समासतो मया विवृतम्।

भारतीयसभ्यतायाः प्रकारः कीदृशो भवेदित्यस्य निर्द्धारणे दैनन्दिन-धर्म्माचरणविधौ नैतिकचरित्रादर्शप्रदर्शने जातीयवैशिष्ट्यसंरक्षणे च संस्कृतभाषायास्तथा संस्कृतशास्त्रस्योपयोगित्वमस्माभिरङ्गीक्रियते चेत्तदा संस्कृतस्य प्रभावो यथा न लोपमापद्येत तथैवास्माभिः सर्व्वथा करणीयम्। परिषदैतदर्थं प्रयत्यत इति सुविदितमेव भवताम्। परिषद् भवतामेव सम्पत् एतां सुदृष्टामात्मीयाञ्च कुर्व्वन्तोऽस्याः संरक्षणविधौ प्रयतन्ता-मित्येवं प्रार्थनं पुनः पुनर्ब्रुवाणोऽहं साञ्जलि सदस्यवर्य्यान् भवतो यथायथ-मामन्त्र्य विरमामि।

---

# बाल्यलीलामाधुर्य्यम्

[ निबन्धकः—श्रीगोविन्दविजयगोस्वामी बि, ए ]

तत्वतो गोपवेशवेणुकरश्रीविग्रहत्वमेव श्रीकृष्णस्य निखिलभगवत्-स्वरूपविलक्षणमाधुर्य्योद्भ्राजि स्वाभाविक-पूर्णतम-स्वरूपम्। एतच्छ्री-विग्रहस्य कृपाजातत्व-कृत्रिमत्वादिवादो मन्द एव, श्रीविग्रहस्य तु अचिन्त्यै-श्वर्य्यत्वान्नित्यत्व-विभुत्व-युगपदनन्तरूपत्वादिधर्म्मवृन्दं स्वाभाविक-मस्त्येव, तथापि श्रीविग्रहनिष्ठवात्सल्याद्यभिधप्रेमरसवतामसाधारण-माहात्म्यमेवैतद् यदैश्वर्य्यादिसम्बन्धे तत्तत्प्रकाशकालेऽपि तदकोविदत्वं तेषाम्। अत एव "न वा प्रकरणभेदात्, परोवरीयस्त्वादिवत्" इति न्यायेन रसविशेषभावनायामनुपादेयत्वात् तद् धर्म्मवृन्दमनुपसंहार्य्यम्। दृश्यते हि तस्या रोचकत्वममङ्गलादिशङ्काहेतुत्वमपि। जृम्भणकाले तथा मृद्भक्षणलीलायां विदारितास्ये विश्वस्य सहात्मनो व्रजस्य च दर्शने जाते श्रीमती यशोमती संजातवेपथुर्नेत्रे निमील्य सुविस्मितासीत्। किञ्च, "अवाप शङ्काम् अतएव स्वार्भके" सुदुर्विभाव्यप्रतीतिहेतुभूतमचिन्त्यशक्ति-

वृन्दकं श्रील-नारायणपदं प्रणता बभूव। तृणावर्त्तवधप्रसङ्गे गिरिकूटवद्गुभारस्यानुभवे विस्मिता सा जगतां महापुरुषमादध्यौ स्वस्त्ययनादिरूपतद्वात्सल्यमयकर्म्मस्वास च। एवं केवलमाधुर्य्यनिष्ठानां स्वानां प्रेमप्रवाहः श्रीविग्रहस्य मृदुत्वाल्पत्व-रुचिरचापल्य-त्रैलोक्यसुभगत्व-मोहनवेणुकरत्व-त्रिभङ्गभङ्गिमत्वादिविलक्षणगुणगणानाश्रित्यैव प्रवर्त्तते। तत्र तत्र च श्रीकृष्णस्य तत्तद्धर्म्मजातानतिरेकाद् गोपालोचितचेष्टाभिमानादिकस्यान्तरङ्गस्वरूपत्वं ज्ञेयम् अन्येषां धर्म्माणां स्वाभाविकत्वेऽपि आवेशाभावादननुसन्धानादनङ्गीकृतत्वं लीलाशक्त्या समाधानादलक्षितोदयत्वमत एवाप्रसक्तिः। शकटभञ्जने स्तनकामनया रोदनादल्पकप्रवालमृद्वंघ्रित्वस्याविपर्य्ययात् तृणावर्त्तवधे, 'गरिमाणं शिशोरि'ति 'जहारासीनमर्भकम्' इति, 'उत्स्रष्टुं नाशक्नोदद्भुतार्भकमि'ति, 'बालो निवृत्तिं गमित' इति च शिशुत्वस्य मुहुरभ्यासात्, भयेन गलेग्रहणरूपबालकचेष्टानतिक्रमाच्च, प्रथमविश्वरूपदर्शने, जृम्भणरुचिरस्मिताभ्यां द्वितीये 'अमुष्यैव ममार्भकस्ये'ति 'हरिं सामन्यतात्मजं' इति वात्सल्यरसपोषकार्भकत्वस्यैव दर्शनात् प्रस्तुतत्वात् तत्र तत्र कृष्णस्योदारार्भकेहितं कविभिरद्यापि गीयमानमेव व्रजवासिनां तत्स्वानां प्रीतिपोषकतन्निजलीलात्वेन ध्येयम्। अत एव 'व्रजस्योवाह वै हर्षं भगवान् बालचेष्टितैः' इति 'एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैरि'ति च उपसंहारवाक्याभ्यां शुद्धमाधुर्य्यमयबालचेष्टा एव "कार्य्याख्यानादपूर्व्वम्" इति न्यायेन स्वकीयत्वेन श्रीगोपाले वर्त्तयितव्याः। 'तमश्मानं मन्यमान आत्मनो गुरुमत्तया। गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम्॥' इति निवृत्तिं गमितस्याप्यर्भकस्य सम्बन्धे यद् यदद्भुतं तृणावर्त्तो मन्यमान आसीत् तेन तेन श्रीगोपालस्यास्पर्शरहस्यं श्रीशुकेन द्रढ्यमानं बभूव। अत एव "वेधाद्यर्थभेदात्" इति न्यायेन सुमेधोभिरपि तत्तत् तस्माद् बहिः स्थापनीयम्। किञ्च अस्य घोषप्रघोषरुचिरम् अंघ्रियुग्ममनुकृष्य व्रजकर्द्दमेषु रिङ्गणम्, पङ्काङ्गरागरुचिरस्य मुग्धस्मिताल्पदशनं श्रीमुखं गृहीतपुच्छैर्वत्सैरितस्ततोऽनुकर्षणं मातृद्वयमनसोरनवस्थां

जनयित्वा क्रीडापरतामतिचलताञ्च, व्रजस्त्रीणां मोदजनकरुचिरकौमार-चापलं दधिपयश्चौर्य्यचातुर्य्यादिकं धाष्ट्यानि च स्मृत्वा स्मृत्वा विदित-यथार्थश्रीगोपालतत्त्वैः प्रवृद्धस्नेहकलिलहृदयै रसिकैर्नष्टाद्भुतदर्शनस्मृतिभि-र्गतशङ्कैश्च वात्सल्यरसमग्नहृदयतया गोपगोकुलनन्दनो नन्दात्मजो गर्गमुनि-समादेशात् समाहिततया गोपायितव्य इति किं वक्तव्यम्-तच्चापल्यकोविदा तन्माता तु दाम्ना तं बन्धुमपीयेष हितैषिणीति। "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि"ति स्वयं श्रीकण्ठोच्चारितशब्दात् त्वारबिन्दु-वद्रोचकैश्वर्य्यज्ञान-लेश-हीन-शुद्धमाधुर्य्याश्रयभक्तिमज्जनवृन्दनेत्रादिगोचरे, सेवाकामनया धृतव्रतः समग्रैश्वर्य्यशक्तीरप्यस्वीकुर्व्वाणश्चिदानन्दमय-गुणसागरो रसिकेन्द्रचूडामणिर्गोपालो निजवयआदितत्तन्मधुरिम्णः सफलीकरोति कलयन् व्रजे विहारमिति न चात्र विस्मयः कार्य्यस्तद्रस-भावुकैर्भुवि रसिकैर्ज्ञाने प्रयासहीनैरन्यथा स्वप्रतिज्ञाहानिर्माधुर्य्य-वैफल्यापत्तिरिति।

---

# अथ पूतनामोक्षलीलारहस्यम्

"विबुध्य तां बालकमारिकाग्रहं चराचरात्मा स निमीलितेक्षणः" इति पुतनागमनकाले योऽंशेन चराचरात्मा सोऽसौ गोपालो बालकमारिकाग्रहं तत्त्वेन जनेषु प्रसिद्धां तां विबुध्य यथाज्ञानं तस्या आगमनप्रतीतिमात्रं लब्ध्वा निमीलितेक्षण आसीदिति शेषः। अर्थात् चराचरात्मत्वेन बालक-मारिकाग्रहां प्रत्युचितं सार्वज्ञ्यैश्वर्य्यादिमयचेष्टादिकं प्रकटं नाभूत् किन्त्वर्भकोचिता निमीलितेक्षणतैव जाता। अर्भकधर्म्मस्यानतिरेकाच्-चराचरात्मत्वपरिचायकधर्म्मस्याप्राकट्यात् श्रीकृष्णहृदि गोपालाभिमान-स्यैव विशुद्धता मन्तव्या। "गाढं कराभ्यां भगवान् प्रपीड्य तत्प्राणैः समं रोषसमन्वितोऽपिबद्" इत्यत्र प्रपीड्य स्तनस्य पानं बालकचेष्टैव, रोषोऽत्र तल्पादादाय अङ्कमारोप्य स्तनदाने कथञ्चिद् विलम्बाज्जातो वा बालक...

निष्कारणोऽननुमेयकारणो वानपत्यायाः पूतनायाः शुष्कस्तने दुग्धाप्राप्ति-हेतुको वा मन्तव्यः। प्राणैः सममित्यस्य कराभ्यामित्यनेन सम्बन्धः, रोषावेशात् कराभ्यां प्राणपणचेष्टया प्रपीड्य इत्यर्थः। "सा मुञ्च मुञ्चाल-मिति प्रभाषिणी निष्पीड्यमानाखिलजीवमर्म्माणि" इत्यत्राखिलजीवमर्म्माणि जीवनाश्रये इति श्रीतोषणी, तत्र तु निष्पीडनं किंकर्त्तृकम्? स्तनप्रपीडकस्य गोपालस्य तत्कर्त्तृत्वं श्रीशुकदेवेन नोल्लिखितम्। "बालश्च तस्या उरसि क्रीडन्तमकुतोभयम्" इत्यत्र अत्यन्तार्भकेऽस्मिन् भयादिमनोवृत्तेरनु-दयादेव भयराहित्यम्। "अङ्कं यस्याः समाक्रम्य भगवानपिबत् स्तनम्" इति "यातुधान्यपि सा स्वर्गमवाप जननीगतिम्" इति च स्तनपान एव श्रीगोपालस्य कर्त्तृत्वमुक्तम् गतिप्रापणे त्वस्य कर्त्तृत्वं नैव व्यञ्जितम्। अत्रेदं विचारयामः—श्रीगोपालस्य गुणदोषविचारसामर्थ्याभावात् "स्तनपानावेशं दृष्ट्वा, योगमायामुपाश्रितः" इत्यत्र तादृशतत्सेवावसरापेक्षया निकटस्थतादृशशक्तिरिति श्रीक्रमसन्दर्भानुसारेण तदसंलग्नतयेव तन्निकटे तत्पश्चाद् वा सेवावसरं प्रतीक्ष्य वर्त्तमाने तदैश्वर्य्यशक्ति-लीलाशक्ती तदान्तरावेशानुकूलसेवाकामनया विचार्य्य तदावेशविषयीभूतायाः पूतनाया-स्तत्प्रतिकूलजिघांसारूपमनोवृत्तेर्ध्वंसपूर्व्वकं तदयोग्यराक्षसीदेहस्यापसार्य्य गोष्ठे पातनपूर्व्वकं धात्र्युचितदेहं सद्यः साधयित्वा भगवद्धाम्नोरनुरूप-प्रकाशविशेषे प्रवेशयामासतुरिति शिशौ तु "बाल्यभावेन सर्व्वभावग्रहणाद् मुद्रितनेत्राब्ज" इति अव्यभिचारिबाल्यभावस्य श्रीतोषणीसम्मतत्वात् शिशु-भावविघातक—विचारबुद्धिपूर्व्वक—दयाहेतुक—सद्गतिदानरूपव्यापारस्या-स्पर्शभावनैव रसविशेषभावनाचतुराणां सम्मता स्यादिति। अत एव "सद्वेशादिव पूतनापि सकुला त्वामेव देवापिता" इति ब्रह्मवाक्ये तवैव लीलाशक्त्येति कर्त्तृपदमूह्यं मन्तव्यम्। "लेभे गतिं धात्र्युचिताम्" इत्यत्रापि पूतनाया गतिलाभस्यैव न तु श्रीगोपालकर्त्तृक-तद्दानस्योल्लेखोऽनुसन्धेयः सुमेधोभिः। निमीलितेक्षणता-निष्पीडनपूर्व्वकस्तनपानाकुतोभयतादि-बालोचितव्यापारविशेषाणां श्रीगोपालकर्त्तृकत्वं स्पष्टतया वर्णितमस्ति

किन्तु पूतनाया राक्षसीदेहान्त-सद्गतिप्राप्त्यादिवर्णने सर्व्वत्र तत्तत्-साधककर्तृपदानुल्लेखचातुर्य्येण श्रीव्रजराजकुमारे तत्तत्कर्म्मणामस्पर्श-रहस्यजातं चिन्तनीयम्। न तु दृष्टान्तभावात् इति न्यायेन शक्तिधर्म्माः शक्तिगताः स्युः। मधुरनरलीलावेशमये श्रीकृष्णे तद्रसविघातकालौकिक-शक्तिमत्ताभिमानोदयस्यासमञ्जसत्वात्। अस्मिन्नेवार्भके दयादेरारोपपूर्व्वक-रसविघातनन्तु मन्दमेव। कायमनोवाक्यैरेवाप्रच्युत-श्रीयशोदानन्दना-भिमानतयास्य स्थितिरेव रसस्य प्रतिष्ठेति रसशास्त्रव्यवस्था।

---

# कालस्येङ्गितम्

[ निबन्धकः—स्वर्गत-तारकनाथ-स्मृतिरञ्जनः ]

कलेः प्राथमिकस्य कर्मक्षेत्रस्यायोजनविधानार्थं स्वयमेव कलिकाल-देवः स्वीचकार विग्रहवत्त्वं—सोऽपि द्विधाकृतविग्रहः समभवत्। तस्य प्रथमा मूर्त्तिर्दुर्योधनो द्वितीया च कर्णः। आद्यः कामोऽपरश्च क्रोधः। कामक्रोधरूपेणैव कलिः स्वाधिकारं सूचयामास।

द्यूतसभायां पित्रा धृतराष्ट्रेण पुत्रस्नेहमोहितेन पुत्रस्य शास्त्रविरुद्धस्य लोकविद्विष्टस्य कर्मणो यत् साहायकं विहितं तदेकान्ततः प्रातिकूलिकमेव पितृधर्मस्य। अन्ततश्च तस्यैव प्रेष्ठस्य पुत्रस्य समूलनाशं समवलोक्यापि नैव प्रबभूव तस्यान्यथाकरणे। पुत्रस्य प्रायश्चित्तेन पितुरपि प्रायश्चित्त-मभवत्।

मदमानसमुद्धतेन पुत्रेण पितृपितामहपितृव्यगुरुगुरुपत्नीज्येष्ठभ्रातृवधू-प्रभृतयः सुभृशमवमानिताः, अधिकारी दायादश्च वञ्चितः स्त्रियाश्चाश्रुतचरं निकारं विधाय समग्रमेव जगद् विस्मयविमूढं सम्पादितम्। निकृताया विपन्नायाः पुष्पवत्याः कुलवध्वा अभिव्यक्तदिवसालोके राजसभायां समक्षमेव श्वशुरादीनां पितुः पुरत एव पुत्रकृतो वस्त्रापहरणाभिनयः

समजनि केनापि च तन्निवारणाय लेशतोऽपि न प्रयतितम्—सर्वमेतत् त्रिलोक्या प्रत्यक्षीकृतम्। भूतभावन लोकेश! इत ऊर्ध्वमपि कियन्तं कालमस्य महापातकस्य प्रायश्चित्तं विधेयं भारतवर्षेण? मातर्ब्रह्ममयि मूलप्रकृते, कुपुत्रस्य दुर्योधनस्यापराधेन संक्षुब्धया भवत्या कालसमरे चण्डमुण्डशिरोमण्डितमुण्डमालाधारणाभिलाषः कुरुक्षेत्रप्राङ्गणे द्वारका-समीपवर्तिनश्च प्रभासस्य सिन्धुतटे पुनरपि पूरितस्तव हुङ्कारघोषेणो-च्छ्वसिताकुलितेन सागरसलिलेन प्रभासक्षेत्रं पुनः पुनर्विधौतम्, कुरुक्षेत्र-मप्यसकृच्छोणितस्रोतसा विप्लावितं सन्दग्धं चास्त्रानलेन। किमेताव-तापि न सम्पन्नं प्रायश्चित्तं भारतवर्षस्य। मातः! किं निरवसानमिदं प्रायश्चित्तम्?

कलिनोक्तम्, "यदाहं प्रवृद्धो भवेयं प्रभवेयं च स्वप्रभावेण परिचाल-यितुं भुवनजातं तदा पितैव पुत्रस्य कुत्सिते कर्मणि सहायो भविष्यति, पुत्रस्तु तदनुवर्त्ती नैव भवेत्, स्त्रीविषयकं जुगुप्सितमाचरणं गुरुजनाना-मेव पुरतोऽनुष्ठीयेत तत्र सम्बन्धविचारोऽपि नैव वर्तिष्यते, अर्थार्थं च यं कमपि साधुजनविगर्हितं मार्गमवलम्बितुं बलवान्नियन्तापि न सङ्कोच-मनुभवेत्!" गुरुजनगौरवं नाममात्रशेषतामापद्येत, वयोविद्यादिजनितस्य सम्मानस्य वार्त्ताऽप्यस्तमियात्, स्वैराचारस्योपमापि नोपलभ्येत। यद् यद् मनसि समुदियात् तत्तदेव निर्विशङ्कमनुष्ठीयेत, शास्त्रप्रमाणं लेशतोऽपि न परिगण्येत।

साधुसङ्गप्रभावः—आर्षप्रभावो निष्प्रभतामुपगच्छेत्, नैव प्रभवेन्नियन्तुं कमपि। श्रीमन्नारदव्यासादिब्रह्मर्षिमहर्षिगणादारभ्य स्वयं भगवतो वासु-देवस्याप्युपदेशो नैवावलम्बनमासीज्जनानां प्रत्युत प्रवाहसलिलमध्य-पतितं तृणगुच्छमिव दूरमपगतः, पुनरप्यपगमिष्यति। कालस्वभावेन हि दुष्कर्मणः—पूर्वसञ्चितस्य दुरदृष्टस्य फलं दुर्निवारमेव स्यात्, सञ्चिता पुनः सुकृतिः कुण्ठितैव स्यात् फलोन्मुखतामधिगन्तुम्।

सप्तरथिपरिवृतमभिमन्युं प्रति दुर्योधनस्य नैष्ठुर्येण जगद् व्यथिष्यते

परमासन्नेऽपि मृत्यौ स्वकर्माणि संस्मृत्य नैवानुशयीत दुर्योधनः। प्रवृद्ध-कलावेवमेव स्यात्।

चतुर्ष्वेव युगेषु ब्राह्मण एव नियन्ता भवति। गुरुर्द्रोणो मूर्त्तिमतः कलेर्दुर्योधनस्य प्रतिरोधे प्रायतत, परं तस्य प्रयत्ना भस्मनि हुतमिवासन्। तथापि नालमासीदसावुपेक्षितुं दुर्योधनं प्रातिकूल्यं वाचरितुं कालस्य। परं पुत्रेण साकं कालस्य कर्मपरिपाके साहायकमेव व्यधात्, अन्तिमे समरेऽधर्मेण युद्धाऽवध्यवधमाचरितवान्।

युद्धेऽस्मिन्नश्वत्थाम्ना पृष्ठप्रशमनं विहितम् इति श्रीमद्भारतवचनम्। पितृवधेन जातामर्षेणाश्वत्थाम्ना शेषैः शात्रववीरैः सार्द्धं विस्रब्धप्रसुप्तान् यज्ञसेनपुत्त्रदौहित्रादीन् निहत्य कलेः—दुर्योधनस्य निर्वाणोन्मुखस्य जीवनदीपस्य क्षणिकमौज्ज्वल्यं विधाय परं भविष्यत्सदृशगाढान्धकार-गहनारण्यान्यभ्यन्तरेऽवमानितस्य हतप्रभस्य भ्रूणहत्याकारिणोऽनुताप-दग्धं जीवितं यापयितुमगच्छत्, केवलं व्यासाकृतिर्जन्मजन्मान्तरार्जित-स्तपःप्रभावस्तस्यामप्यवस्थायां नैव तं पर्यत्यजत्। अहह, कालानुगत ब्राह्मण, अपि नाम सर्वथासमर्थ एवासीर्दुर्योधनप्रभावमतिक्रमितुम्। त्वया तु दुश्चरं तपस्तप्तम्, अन्यथा कथं तवोत्कृष्टब्राह्मणदेहलाभः। शास्त्रे-णापि तव वृत्तिर्दर्शिता, तत् किमिति त्वया दुर्योधनस्यान्नं गृहीतम्? प्रथमतस्तावच्छान्तनुनन्दनेन देवदत्तेन तत ऊर्ध्वं च धनञ्जयेन स्वकीय-धनसम्पदा स्वोपार्जितराज्यसम्पदा च योजित आसीः, किमिति तावत्यैव न सञ्जाता ते तृप्तिः? सा सम्पत् तदीयैव तवैव वीर्येण लब्धा शिष्येण च दक्षिणारूपेण प्रतिपादिता एतत् सर्वं विचिन्त्यापि त्वया सन्तोष एव स्वीकरणीय आसीत्। तथात्वे हि नैव धर्मराजाय युधिष्ठिराय "अर्थस्य पुरुषो दासः" इति निर्लज्जजनोचितमुत्तरप्रदानमावश्यकमभविष्यत्। त्वमन्नदासो भूत्वा कलिकालस्वभावायत्तः सञ्जातः। अर्थस्य दासेन ब्राह्मणेन कालस्य साहायकं विहितमित्याकल्पमेव जीविष्यति ब्राह्मणजाते-रपवादः। त्वया हि जगतां पुरतो ब्राह्मणजातेर्दीनतैव प्रतिपादिता।

ब्राह्मण, नैव विस्मर्त्तव्यं भवता भगवानेव ते योगक्षेमं वक्ष्यति। एतद्विस्मरणादेव प्रकटितः कालप्रभावः। श्रद्धीयतां भगवद्वचनेषु, प्रतिकालमेव "युगचतुष्टयं वर्त्तते" इति वचनमप्यचिरादेव स्वयाथार्थ्यं प्रतिपादयेत्।

अस्त्रगुरो द्रोणाचार्य, अद्यापि ते तपःप्रभावो विस्मयस्तिमितानेव विदधाति जगद्वासिनः। परिज्ञातयज्ञसेनयागसाधनोद्देशेनापि समवगतधृष्टद्युम्नजीवनलक्ष्येणापि भवता स्वयमेव सयत्नं स्वगृहं समानीय सर्वास्त्रसम्पन्नोऽसौ विहितो धृष्टद्युम्नः, निष्कपटमस्त्रेषु विनीय योग्यसमरे सेनानीपदं च लम्भितः। न खलु मनीषिणः पुत्राद्वा पुत्रनिर्विशेषाच्छिष्याद्वा पराजयमनुप्राप्यापद्यन्तेऽयशोभाजनताम्, प्रत्युत सुखमेव निरतिशयमनुविन्दन्ति। शत्रूणामधृष्य एवासीस्त्वं समरे, धृष्टद्युम्नकृतेनापि पराजयेन नैव म्लानिमुपगता ते कीर्त्तिः। अहो धन्यः कालः, धन्यः कलिकालः यस्य खलु प्रभावेण ब्राह्मणानां रक्षकः शिष्यः, क्षत्रियपोतको गृहीत-गुरुवधरूपकर्म्मसूत्र एव समजनि, न खलु तत् कर्म्मसूत्रमवतीर्णभगवन्नरनारायणसामीप्येनाप्यन्यथा भूतम्।

दुर्योधनस्यान्नग्रहणस्यानृण्यमुपगम्य कालस्य च कार्य्यं परिसमाप्य सानुशयेन सव्रीडेन च चेतसा परित्यक्तं भवता जगतीतलम्, नश्वरस्य शरीरस्य त्यागकालेऽपि पूर्वार्जितनिःसीमतपःप्रभावेण विस्मयविमोहितमेव व्यधास्त्वं त्रिभुवनम्। योगमार्गेण विहाय तुच्छां भौतिकीं तनुं स्वतेजसा समुद्भास्योर्ध्वलोकं दिव्यमेव धाम प्रस्थितोऽसि। अतः खलु व्यथितान्तरात्मना विलप्यते, भो दैवत, अहो तापस, हंहो ब्रह्मवीर्यसम्पन्न गुरो, किमिति त्वमेव ब्राह्मणजातेः कलङ्कस्य निदानं समजनिष्ठाः।

भो देवव्रत भीष्मदेव, किमिति त्वयास्य छायापातस्यावसरेऽवतीर्णम्। त्वयाप्यगतिकतया कालस्वभावप्रकटने विहितं साहायकम्। न खलु जीवो लेशतोऽपि प्रभवति प्रतिहन्तुं प्राक्तनकर्म्मपरिपाकम्। कश्चित् त्वया वसुशरीरे पत्न्यनुरोधेन ब्राह्मणहोमधेनुहरणरूपस्य पातकस्य

प्रायश्चित्तमेव विधातुमवतीर्णम्। मन्ये योग्यतमेनाप्यधिकारिणा सता पत्न्या निरुपमेन च पितुरैश्वर्य्येण राज्येन च वियुक्तेन त्वया परिसमापितं तत् प्रायश्चित्तम। परं वसुत्वलाभोचिततपःप्रभावः कदापि त्वत्तो नापयायात्, अत एव पूर्व्वपूर्व्वजन्मार्जितोत्कृष्टकर्म्मसंस्कारवशात् त्वयि धर्म्मज्ञान नीत्युत्साहबलानामेकतमस्याप्यभावो नासीत्, प्रत्युतैषां प्राचुर्य्यमेव दृश्यते स्म। पितुस्तोषार्थं चिरायैव परित्यज्य सांसारिकं सुखजातं रामचन्द्रेणेव त्वयाऽपि कलिकाले पुण्योपचयस्य पन्था विनिर्दिष्टः। त्वदीये पितृपरिचर्य्यातपःपादपे समुत्पन्नमपूर्व्वं फलत्रितयम्। तद् यथा, स्वेच्छामृत्युः, समरेऽजय्यत्वम्, यावच्च वर्णाश्रमधर्म्मस्यावस्थितिस्तावदाशूद्रब्राह्मणसर्व्वजातीनां श्राद्धपात्ररूपेण पितृपुरुषरूपेण परिगणनं यत् खलु प्रकारान्तरमेवामरत्वलाभस्य। एतेन कलेर्निष्प्रभेण जीवेनावबुद्धम् पितृसेवा परमो धर्म्मः, न खलु पितृसेवकः संसारबन्धनेनापि निबध्यते।

सर्व्वात्मना प्रयतमानेनापि त्वया नैव प्राभावि प्रोञ्छितुं कालस्य छायां राजकुलादपि। कुरुवंशे योग्यसन्तानसमुत्पादार्थं समवतीर्णं भगवन्तं कृष्णद्वैपायनं नियोज्य कियती वाशा न पोषिता परं यस्यैव कालस्य प्रभावेण कुरुवंशेन नार्पितो राज्यभारो भारक्षमाय पुत्राय, स्वसुखकामनया मुषितो धार्म्मिकस्तनयः, तेनापि स्वकृतस्य पापस्य प्रायश्चित्तं विधेयम्। पुत्रवञ्चकस्य कुरुराजस्य राजधान्यां दैववशान्मूर्त्तिमता क्रोधेन कर्णेन विग्रहवता च कापट्येन शकुनिना स्वप्रभावेण त्वदीयतपःप्रभावविशेषोऽपि न्यक्कृतः। अतः खलु ब्रवीमि काल एव बलीयानिति। मन्ये कालस्यैव जयोऽभिप्रेतो भगवतः। त्वयाऽपि तदेवानुभूतम्।

आजन्मसन्न्यासिना वर्णाश्रमधर्म्मश्रद्धालुना त्वया स्वधर्म्मेण धर्म्मयुद्धेन पातितः कलेवरस्तथापि नैव स्वीकृतः सन्न्यासः, अधिकारिणापि सता मन्येऽस्माकमेव हिताय नैव परिगृहीतानि यतिलिङ्गानि।

अत एव ब्रवीमि, कुरुक्षेत्रस्य समराङ्गणे भगवतो वासुदेवस्य श्रीम-

तोऽर्ज्जुनस्य च दिव्यकर्म्मप्रभावेण निहतेऽपि सवंशे दुर्योधने कालस्य छायापातः सञ्जातः, भीष्मद्रोणादयः साधवो महात्मानः कालस्यैव प्रभावेण दुर्योधनस्य नेतृत्वं स्वीचक्रुः, दुर्योधनस्य सान्त्वनार्थं पातालतले दानवस्याश्वासवाणी कालसहचरी सती वर्द्धयामास तदीयं प्रभावम्। एतदपि दृष्टं जागतिकेन जीवेन यद् दुर्योधनं कालस्य प्रभावेण बलीयांसं जीवं नियन्त्रयितुं मैत्रेयादयः परमर्षयो भीष्मद्रोणादयश्च विशिष्टा योद्धारोऽपि न चक्षमिरे। केवलं सर्वनियन्त्रा परमेश्वरेणैकान्तत आश्रितेन प्रियशिष्येणार्ज्जुनेन दुर्धर्षो मूर्त्त एव कलिरसौ दुर्योधनो विध्वंसितः। पित्रादिगुरुजनानाश्रवः कुसन्तानो मृत्योर्वशमापन्नोऽपि नैव भजते नम्रतां परं पुरतोऽवस्थितैः सुखोपकरणजातैः साकं चिरायैव जगतो निष्क्रास्यते। हा दुर्भाग्याः कलिकालजीवाः, दुर्योधनमुपलक्ष्य कालेन यत् कर्मसूत्रं प्रततं तदपि मन्ये दुर्भाग्यतोऽस्माकमक्षयं सञ्जातम्, कथमन्यथा भविष्यजीवानां प्रकृतौ—अस्माकं प्रकृतौ—पुण्यक्षेत्रे भारतवर्षे समधिगतजन्मनामप्यस्माकं प्रकृतौ—तस्य कर्मसूत्रस्य पूर्णः परिचयः प्रादुःष्यात्। किम् आगामिनामपि जीवानामन्तःकरणेषु कालशक्तिर्दुर्योधनस्य प्रकृतिं गृहीत्वा शाश्वतमेव स्वप्रभावं प्रतनिष्यति।

पुनरपि घोषयामि—फलोन्मुखीभूतप्राक्तनानां दुरदृष्टानां जीवानां पुनरागमनकाले भगवदाश्रित एव कर्मी विजयते। यदा यदा जीवो ग्रस्येतावसादेन तदैव श्रीकृष्णार्ज्जुनसंवादः श्रीमद्भगवद्गीताया महीयसी वाणी स्वात्मानं प्रकटयिष्यति। भगवदाश्रित एव कर्मी विजयते"—एषा सनातनी श्रुतिर्नित्यमेव जगति प्रतिष्ठिता प्रतिष्ठास्यति च।

[ क्रमशः ]

———

# संस्कृतसाहित्यपरिषदः षोडशवर्षीयमधिवेशनम्

परिसमाप्तं परिषदः षोडशवर्षीयमधिवेशनमतीते सौराश्विनस्य षष्ठदिवसे। अत्र च भगवदनुकम्पाया अनुपदं प्रथमतस्तेषामेव परिषत्-सदस्यानां महानुत्साहो हेतुतामभ्यास्ते येऽविगणय्य कायक्लेशम् अप्रमाणीकृत्य समयातिक्रमम् अनवधार्य्य चाशङ्कनीयामवधीरणामनारतमुपस्थाय समनुशीलितैरभिनयैः समनुष्ठितैश्चाधिवेशनकर्मभिर्महोत्सवमिमं सुसम्पादितं व्यदधुः। अतस्तेभ्यः समं भवद्भिर्यथाकालमिहागत्य महोत्सवं साङ्गं विदधानैर्धन्यवादमादौ वितरामः। विनैव गृहादिशुल्कमधिवेशनस्थानं कल्पयन्तोऽन्ततश्चाररङ्गमञ्चाध्यक्षा अपि नः कृतवेदितामर्हन्तीति धन्यास्ते परोपकृतिप्रधानाः संस्कृतसाहित्यानुरागिणः।

प्रारिप्सिते सभाकर्मणि प्रथमतस्तावद् यथापूर्वं परिषदं प्रति दयमानेन स्निह्यता भक्तिप्रह्वेण च श्रीमता विष्णुपददत्तमहोदयेन यथारीति प्रबोधन-सङ्गीतकमुपगायावर्जितेषु सभास्तारचेतःसु, परिषदः स्थिरसमापतेः म० म० श्रीयुक्त-दुर्गाचरणसांख्यवेदान्ततीर्थमहोदयस्य प्रस्तावेन, म० म० श्रीयुक्तानन्तकृष्णशास्त्रिमहोदयस्य श्रीयुक्तकालीपदतर्काचार्य्यमहोदयस्य चानुमोदनेन सदस्यसमवायसम्मत्या च—वङ्गदेशीय-सर्व्वोच्चाधिकरण-प्राड्विवाकवर्य्यैः श्रीमद्भिः कल्याणाभिनिवेशिभिर्विपिनविहारिघोषजैः सभापतिपदमलमकारि। पाण्डित्याभिजनयोरनुरूपां विनयसम्पदमुपदर्शयद्भिस्तैरादौ तथाविधायामभिरूपभूयिष्ठायां सभायामात्मनः साभापत्येन जिह्रियद्भिरिव स्वल्पेन वचसा स्वाहङ्कारः पर्य्यहारि।

ततश्च सम्पादकेन श्रीमता अमरेश्वरठाकुरवेदान्तशास्त्रिणा परिषदः षोडशवर्षीयं कार्य्यविवरणं स्वरचितं संस्कृतभाषामयं वाचितमभूत्। तदेतद्दिदृक्षुभिरेतत्सञ्चिकायाः प्रथमांशे द्रष्टव्यम्। ततश्चान्यतमेन सहसम्पादकेन श्रीमता दीनबन्धुशाहित्यशास्त्रिमहोदयेन वर्त्तमानवर्षीयकार्य्य-

निर्वाहकसमितिसदस्यानां नामानि वाचितानि। अवसरे चास्मिन्ननतिपातिना कार्य्यान्तरेण प्रतिबद्धसभासमागमाभ्यां म. म. श्रीयुक्तकमलकृष्णस्मृतितीर्थेन, कविराजशिरोमणिना श्रीयुक्तश्यामादासवाचस्पतिना च प्रेरिता पत्रद्वितयी परिषदं सदाकालमनुगृह्णतोस्तयोरनुपस्थित्या दुःखदुःखितैः सभासद्भिः सबहुमानमश्रावि।

अस्ति चायं चिराचरितः समुदाचारविशेषः परिषदः—यदत्र वार्षिकाधिवेशनमहोत्सवे कस्यचन विश्रुतयशसः परासोस्तैलचित्रस्यावरणमपाकरणीयमिति। तन्नियमानुगत्या च पूर्वं परिषदा स्थिरीकृतं यदिह महोत्सवे महामहोपाध्यायस्य तत्रभवतो लक्ष्मणशास्त्रिणस्तैलचित्रमावृत्यपाकरणेन सर्वाभ्यर्चं करणीयमिति प्रसङ्गतः प्रतिपाद्यते।

प्राप्ते चित्रावरणोन्मोचनावसरे क्षत्रान्वयेन लक्ष्मीनिवासभुवा श्रीमता दामोदरदासखान्नामहोदयेन संस्कृतभाषया वाचः प्रपञ्चनं मयासुकरमिति विज्ञाप्य भाषान्तरभाषणतो जिह्रियतेव सभ्यानां क्षमा समभिक्ष्यत। ततश्च तेन स्पष्टस्पष्टया हिन्दीभाषया त्यागैकवृत्तेः पण्डितप्रकाण्डानां तत्रभवतां लक्ष्मणशास्त्रिपादानां विवृतमहत्त्वम् उद्घाटितकर्मप्रणालीकम् आविष्कृतपाण्डित्यप्रकर्षं, विज्ञापितत्यागमूर्त्तिकत्वं जीवनचरितं तथा सभ्येषु प्राकाश्यं नीतं यथाविदिततद्भाषा अपि जना रसग्रहपराङ्मुखा नाभवन्निति।

ततश्च महामहोपाध्यायेन श्रीमता अनन्तकृष्णशास्त्रिमहोदयेन स्वसुलभयौजस्विन्या भाषया प्रकटीकृतं यत्,—अस्य महात्मनो गुणा मादृशेन शतं समा अपि गीयमाना नैव समाप्तिमेष्यन्तीति विफलप्रयासाद्विराम एव श्रेयान्। अजातशत्रुणा तेन महात्मना स्वोपार्जितानि द्रविणानि तैस्तैर्जनहितैः कर्मभिर्व्ययता यज्ञोपवीतमात्रं पुत्राय प्रतिपाद्य स्वरारूढमिति केतः स्तुतिर्मानवानाम् इति।

ततश्च राजकीयसंस्कृतपाठशालाया न्यायशास्त्राध्यापकेन श्रीमता कालीपदतर्काचार्य्येण स्वैरं सरलया कोमलया च सर्वहृदयग्राहिण्या

संस्कृतया वाण्या तस्यैव महात्मना गुणा अगायिषत। काशीवासिना सन्न्यासिवरेण कृष्णशास्त्रिणा तथा सुपण्डितेन गाङ्गेयनरोत्तमशास्त्रि-महोदयेन च तत्रभवतस्तांस्तान् गुणानुद्दिश्य महती वाग्मिता प्रकटी-कृता।

एवमेतैर्गुणानुवादैर्दूरारूढतद्दर्शनकुतूहलायां जनसंसदि तत्रभवता सभापतिना तेषां तेषामलौकिकगुणानां प्रत्यक्षताचिकीर्षयेवावृतिमप-कर्षता सर्वाभ्यक्षतामानायि सा मूर्त्तिर्यस्याः ससम्भ्रमदर्शनव्यग्रहृदयैरासन-स्थैरपि सभासद्भिः क्षणं दण्डायमानैरिवाभावीति व्याख्यातमादिपर्व।

अनन्तरं सभापतेरभिभाषणम्, तच्च लघुकायमिति स्थानान्तरमप्रापय्य तन्मयुक्तयात्रैव निवेश्यते। आङ्गलभाषायामधिगतव्युत्पत्तिना सभापतिना संस्कृतभाषायामात्मनो दारिद्र्यं प्रख्यापयता वङ्गभाषयैव कृतो वागव-तारः। तस्यायं मर्मानुवादः—दुष्काल-कलिकालवशाद्दोषायमाणेष्वपि ब्राह्मणपण्डितानामशेषगुणगणेषु शेषीभवन्नयमेकोऽपि गुणस्तेषां दोषराशि-मपमार्ष्टुमलमिति सम्भावयामि—यदेते निर्लोभतया दारिद्र्यमप्रमाणीकृत्य बर्द्धितमपि भावान्तरे कालप्रवाहमनीहयावगणय्य जनानामवजानतां नेत्रसंकोचनं न्यायप्राप्तमिवावसाय, काषायमवसित्वापि सन्न्यासं समनु-शीलयन्त इवेदानीमपि शास्त्रारण्ये विचरन्तीति।

युरोपीयाः पण्डितास्तावत् स्वर्णगुणेन रूपणीया दृश्यन्ते, यतस्तेऽल्प-मात्रामपि विद्यामधिगम्य प्रतिपादनमहिम्ना बहुत्वेन प्रतिपादयन्ति। यथा स्वर्णगुणा वल्लीव्यायता अपि स्वोपादानभूतं स्वर्णं मात्रयैव बिभर्ति। अस्मद्देशीयाः पण्डितास्तु पिण्डीभूतस्वर्णकल्पाः, बहु जानन्ति स्वल्पमेव प्रकटयन्ति, तेन जना अपि तेषां विद्वत्तां पिण्डीभूतस्वर्णपरिमितिमिवा-वधारयितुं नेशते नाम। भवितव्यञ्चास्मद्देशीयैर्वैदेशिकपण्डितैरिव प्रप-ञ्चनचतुरैरिति। एवञ्च यथैते ध्रियेरन् तथास्माभिर्यतितव्यमिति।

अभिभाषणानन्तरं भिषग्वरेण 'ब्राह्मणसभा'सम्पादकेन श्रीमता शरच्चन्द्रसांख्यवेदान्ततीर्थमहोदयेन स्वल्पेन वचसा सभापतये धन्यवादः सादरमुपहृतः।

अनन्तरं परिषत्सदस्यैः—कविवत्सराजविरचिते रुक्मिणीहरणं नामे-हामृगो हास्यचूडामणिर्नाम प्रहसनञ्चाभिनीय समावर्जितानि सभ्य-मनांसीति शम्।

# संस्कृत-साहित्य-परिषदः १३३६ वङ्गाब्दीय-
# कार्य्यपरिचालकाः

---

## सभापतिः

महामहोपाध्याय-श्रीयुक्त-दुर्गाचरण-सांख्य-वेदान्ततीर्थः

## सहकारि-सभापतयः

१। महामहोपाध्याय-श्रीयुक्त-अनन्तकृष्ण-शास्त्री

२। महामहोपाध्याय-श्रीयुक्त-शितिकण्ठ-वाचस्पतिः

३। पण्डित-श्रीयुक्त-द्वारिकानाथ-न्यायशास्त्री

४। कविराज-शिरोमणि-श्रीयुक्त-श्यामादास-वाचस्पतिश्च

## सम्पादकौ

१। श्रीयुक्त-अमरेश्वर-ठाकुर-वेदान्तशास्त्री, एम. ए., पि. एइच. डि.

२। श्रीयुक्त-सत्येन्द्रनाथ-वसुजः, एम. ए., वि. एल. च.

## सहसम्पादकाः

१। पण्डित-श्रीयुक्त-दीनबन्धु-साहित्यशास्त्री

२। ,, ,, वामाचरण-काव्यतीर्थः

३। ,, ,, चिन्ताहरण-चक्रवर्त्ती काव्यतीर्थः, एम. ए.

४। ,, ,, रामकृष्ण-चक्रवर्त्ती, एम. ए.

५। ,, ,, अशोकनाथ-भट्टाचार्य्य-वेदान्ततीर्थः, एम. ए. च.

## कार्य्यनिर्व्वाहकसमितेरन्ये सदस्याः

१। पण्डित-श्रीयुक्त-जगदीशचन्द्र-वेदव्यासः

२। ,, ,, जगन्मोहन-ज्योतिर्व्विनोदः

३। ,, ,, वामापद-विद्यारत्नः

४। „ „ दक्षिणाचरण-भट्टाचार्य्यः, एम. ए.
५। „ „ कुञ्जविहारीतर्कसिद्धान्तः
६। „ „ जानकीनाथ-साहित्यशास्त्री
७। „ „ कालीपद-तर्काचार्य्यः
८। „ „ योगेन्द्रमोहन-विद्यारत्नः
९। „ „ श्रीधर-व्याकरणतीर्थः
१०। „ „ सीतानाथ-सिद्धान्तवागीशः
११। „ „ दक्षिणाचरण-भट्टाचार्य्यः
१२। कविराज-श्रीयुक्त-वसन्तकुमार-रायविद्यारत्नः
१३। श्रीयुक्त-यतीन्द्रनाथ वसुजः, एम्. ए., एम. एल. सि.
१४। „ कृष्णगोपाल-भट्टाचार्य्यः एम. ए., एम. बि.
१५। पण्डित-श्रीयुक्त-भुवनमोहन-सांख्यतीर्थः
१६। श्रीयुक्त-राजेन्द्रनारायण-वन्द्योपाध्यायः, बि. एल.
१७। पण्डित-श्रीयुक्त-दुर्गामोहन-काव्यसांख्यपुराणतीर्थः, एम. ए.
१८। „ „ कालीपद-व्याकरणतीर्थः
१९। „ „ क्षितीशचन्द्र-चट्टोपाध्यायः, एम. ए.
२०। „ „ सुनीतिकुमार-चट्टोपाध्यायः, एम. ए., डि. लिट.
२१। श्रीयुक्त-भूपतिरायचोतुर्धुरीणकाव्यतीर्थः
२२। पण्डित-श्रीयुक्त-चिन्तामणिसाहित्याचार्य्यः
२३। „ „ वनमालिवेदान्ततीर्थः, एम. ए.
२४। श्रीयुक्त-क्षितीशचन्द्र-चक्रवर्त्ती, एम. ए., बि. एल.
२५। पण्डित-श्रीयुक्त-रसमय-चट्टोपाध्यायः, एम. ए.
२६। „ „ उपेन्द्रमोहन-सांख्यतीर्थः
२७। श्रीयुक्त-व्रजेन्द्रकिशोर-भट्टाचार्य्यः ( छात्रसमितिप्रतिनिधिः )
२८। पण्डित-श्रीयुक्त-चण्डीचरण-तर्कतीर्थः
२९। „ „ सारदाप्रसाद-सप्ततीर्थः

३०। „ „ भवविभूति-विद्याभूषणः, एम्. ए.

३१। श्रीयुक्त-उपेन्द्रनाथ-घोषालः, एम्. ए., पि. एइच. डि.

३२। „ उमेशचन्द्र-भट्टाचार्य्यः, एम्. एइच.

३३। „ शैलेन्द्रनाथ-मित्रजः, एम् एच.

## पत्रिका सम्पादकः

पण्डित-श्रीयुक्त-क्षितीशचन्द्र-चट्टोपाध्यायः, एम. ए.

## पत्रिका-सहसम्पादकः

पण्डित-श्रीयुक्त-उपेन्द्रमोहन-सांख्यतीर्थः

## ग्रन्थाध्यक्षः

पण्डित-श्रीयुक्त-जानकीनाथ-साहित्यशास्त्री

## आचार्य्यौ

पण्डित-श्रीयुक्त-सीतानाथ-सिद्धान्तवागीशः

„ „ उपेन्द्रमोहन-सांख्यतीर्थश्च

## नाट्यसम्पादकौ

पण्डित-श्रीयुक्त-जगन्मोहन-ज्योतिर्विनोदः

„ „ वामापद-विद्यारत्नश्च

## नाट्य-सहसम्पादकः

श्रीयुक्त-व्रजेन्द्रकिशोर-भट्टाचार्य्यः

## सङ्गीताचार्य्यः

श्रीयुक्त-सतीशचन्द्र-दत्तजः

## आय-व्ययलिपिरक्षकः

पण्डित-श्रीयुक्त-रामकृष्ण-चक्रवर्त्ती, एम्. ए.

## आय-व्ययलिपिपरीक्षकः

श्रीयुक्तमलय-कुमार-देवः, बि. एस्-सि., जि. डि. ए.

## आय-व्यय-निष्कर्षः

# ( १ ) साधारणकोषः

### आयः

| | |
|---|---|
| गतवर्षस्य व्ययावशिष्टः | |
| सेविंस-व्याङ्कागारे … | ११०।=१० |
| हस्ते … … | ३४६|||≡१५ |
| ष्ट्याम्प … … | १२॥ |
| वृत्तिरूपेण प्राप्तः | |
| ( अग्रिमादिः ) … | ३०|||-५ |
| ( कलकत्तातः ) | १७८६|||० |
| ,, ( स्थानान्तरात् ) | ५७०॥ |
| सामयिक-दानरूपेण | |
| दातृभ्यः … | ३२८॥ |
| गवर्णमेण्ट-सकाशात् (१९३१-३२) | १०००॥ |
| करपोरेशन-सकाशात् (१९३०-३१) | ८५०॥ |
| पुस्तकादि-विक्रयात् | २५३|||≡५ |
| प्रावेशिक-रूपेण … | ३॥ |
| विज्ञापनात् … | ४०॥ |
| वि. पि. शुल्कपत्रात् | ३२|||१५ |
| कुसीदरूपेण ( सेविंस-व्याङ्कागारात् ) | ११|||-५ |
| अन्यतः … … | २०।≡० |
| ऋणात् (गृहकोषतः) | १२५॥ |
| | ५५२४||≡१५ |

### व्ययः

| | |
|---|---|
| पत्रिकार्थम् … | १०९।१५ |
| पुस्तकालयार्थम् … | ८९६|||·० |
| पुस्तक-प्रकाशार्थम् | ७५|||१० |
| सभाभिनयाद्यर्थम् | ४८२|||≡५ |
| शिक्षाविभागार्थम् | १७६।५ |
| गृहभाटकाद्यर्थम् … | ८४६||≡१५ |
| वर्तनाद्यर्थम् … | ६२६|||≡० |
| गृहोपकरणाद्यर्थम् … | १०३।- |
| पाथेयार्थम् … | ४३-१५ |
| पत्रादिमुद्रणार्थम् … | ६|||=० |
| पत्रादि-शुल्कपत्रार्थम् | २२||=१० |
| सारस्वत-परीक्षार्थम् | ३३||-१५ |
| वि. पि. शुल्कपत्रार्थम् | २०||-५ |
| विविध-विषयार्थम् | ४४-१० |
| ऋणप्रत्यर्पणार्थम् (गृहकोषस्य) … | ७५०॥ |
| | ५२२३|||≡१५ |
| उद्वृत्तः | |
| ष्ट्याम्प … … | १||-१० |
| प्राप्यः (अग्रिमादिः) | २४||=५ |
| हस्ते … … | १३६।१० |
| सेविंस-व्याङ्कागारे … | १३८≡१५ |
| | ५५२४||≡१५ |

## ( २ ) गृहकोषः

( १३३८ वङ्गाब्दे )

गतवर्षस्य व्ययावशेषितः

( १९४५-५५ ) ५%

| | |
|---|---|
| गवर्णमेण्ट-लोनपत्रे ··· | १०००\ |
| क्याश-सार्टिफिकेट-पत्र-द्वितये ··· | १५००\ |
| | २५००\ |
| गवर्णमेण्ट-लोनपत्रस्य कुसीदरूपेण प्राप्तः | १२५\ |
| साधारण-कोषात् ऋण-प्रत्यर्पणावसरे प्राप्तम् ··· ··· | ७५०\ |
| | ३३७५\ |
| परिषदः साधारण-कोषे ऋणरूपेण प्रदत्तः | १२५\ |
| उद्वृत्तः ··· ··· | ३२५०\ |

उद्वृत्तस्य विवरणम्

| | |
|---|---|
| पूर्व्वोक्ते गवर्णमेण्ट-लोन-पत्रे ··· ··· | १०००\ |
| क्याश-सार्टिफिकेट-पत्रत्रये ··· | २२५०\ |
| | ३२५०\ |

## ( ३० ) ग्रन्थालय-कोषः

( १३३८ वङ्गाब्दे )

| | |
|---|---|
| गतवर्षस्य प्रत्यर्पणावशेषितः | २६८\ |
| १३३८ वङ्गाब्दे न्यासरूपेण प्राप्तः ··· ··· | ६२\ |
| | ३३०\ |
| १३३८ वङ्गाब्दे प्रत्यर्पितः | ६८\ |
| अतिरिच्यमानः ··· | २६२\ |

( आवास-व्याङ्कागारे न्यस्तः )

१३३८ वङ्गाब्दावसाने

## परिषदः-साधारण-कोषः

ऋणम्

| | |
|---|---|
| १३३३ वङ्गाब्दे गृह-कोषात् गृहीतम् ··· | ७८॥० |
| १३३४ ,, ,, ··· | ७७५\ |
| १३३६ ,, ,, ··· | १०२५\ |
| १३३७ ,, ,, ··· | १०००\ |
| १३३८ ,, ,, ··· | १२५\ |
| | ३००३॥० |
| १३३८ वङ्गाब्दे ऋण-प्रत्यर्पणम् ··· | ७७५\ |
| | २२२८॥० |

आय-व्यय-लिपिरक्षकः

श्रीरामकृष्ण-चक्रवर्त्ती

आय-व्यय-लिपिपरीक्षकः

श्रीमलयकुमार-देवः

सम्पादकौ

श्रीअमरेश्वर-ठाकुरः

श्रीसत्येन्द्रनाथ-वसुजश्च

[ पूर्वतोऽनुवृत्तम् ]

सति कश्चिद्विरोधः, किन्त्वशक्यः स्तुतिपदसम्बन्धे सति विध्यर्थो विवक्षितुम्। वाक्यं हि सम्बन्धस्य विधायकम्, द्वौ चेत् सम्बन्धौ विदध्यात्—भूतिकाम* आलभेत, आलम्भने चैष गुणो भविष्यतीति, भिद्येत तर्ह्येवं सति वाक्यम्। अथ यदुक्तम्—न क्रिया गम्यते, न तत्सम्बद्धं वा किञ्चिदिति। "स्तुत्यर्थेन विधीनां स्युः।" स्तुतिशब्दाः स्तुवन्तः क्रियां प्ररोचयमाना अनुष्ठातॄणामुपकरिष्यन्ति क्रियायाः। एवमिमानि

---

मानार्थवादार्थपरित्यागप्रसङ्गान्न केवलस्यैव पर्य्यवसानमित्यर्थः। विध्यर्थः सप्ररोचनः कुतोऽशक्य इत्याशङ्क्य गौरवं नाम दोषान्तरं पूर्व्वोक्तं स्मारयति—**वाक्यं हीति।** वाक्यमिति सम्बन्धस्येति चैकत्वनिर्देशादेकं हि वाक्यमेकस्यैवार्थस्य प्रतिपादकमित्युक्तं भवति। सम्बन्धशब्दश्च सम्बन्धिवस्तुस्वरूपपरः†, ततः किमत आह—**द्वाविति। विदध्यात्** प्रतिपादयेत्। विध्युद्देश इत्यर्थः। तावेव दर्शयति—**भूतीति। आलभेत एष हीति** विध्युत्थापितामेव प्ररोचनामभिनयति, न त्वर्थवादोत्थापिताम्, तथा सति प्ररोचनाविशिष्टविधिविषयत्वाद्वाक्यस्य वाक्यभेदोपलक्षितगौरवापत्तिरित्यर्थः।

एवं तावत् कथमेकवाक्यभाव इत्यादिना अभिमतसाधनतावबोधकस्यापि विधेः प्ररोचनामन्तरेण प्रवर्तकत्वायोगात् प्ररोचनायाश्च प्राशस्त्यज्ञानाधीनत्वात् तस्य च विधितोऽसम्भवादापेक्षत्वाद्विध्येकवाक्यत्वेनार्थवादाः स्तुतिं लक्षयन्तः प्ररोचनाद्वारेण प्रवृत्त्युपयोगादर्थवन्त इत्युक्तम्। अधुनेममर्थं सूत्रावयवारूढं कर्त्तुं पूर्वपक्षोक्तमनुवदति—**अथेति।** वाक्योपक्रमार्थो**ऽथ**शब्दः। "वायुर्वै क्षेपिष्ठा" इत्यादिना **क्रिया** अर्थभावना **तत्सम्बद्धं वा** भाव्यादि नावगम्यत इति यदुक्तं **तद्यानीत्यादिने**त्यर्थः तत्रेदमुत्तरमिति शेषः। उत्तरत्वेनोपात्तं सूत्रांशं व्याचष्टे—**स्तुतीति।** स्तुतिशब्दा अनुष्ठातॄणामुपकरिष्यन्तीत्यन्वयः। उपकारश्चानुष्ठातर्य्यतिशयः। स च सामर्थ्यम्। तच्च किंविषयमित्यत उक्तम्—**क्रियाया इति।** क्रियाविषयं क्रियार्थमुपकारं करिष्यन्तीति यावत्। तेन क्रियाया

---

* "आलभेत। एष हि गुणः" इति टीकाकृत्सम्मतः पाठ इति प्रतिभाति।

† "सम्बन्धशब्देन चात्र कर्म्मव्युत्पत्त्या विशेषणविशेष्यरूपौ सम्बन्धिनावभिमतौ।"

सर्वाण्येव पदानि कञ्चिदर्थं स्तुवन्ति विदधति । अतः प्रमाणमेवंजातीयकानि—वायुर्वै क्षेपिष्ठा देवतेति ॥ ७ ॥

## तुल्यं च साम्प्रदायिकम् ॥ ८ ॥

अथोच्येत—प्राक् स्तुतिपदेभ्यो निराकाङ्क्षाणि विधायकानि विधिस्वरूपत्वात्, स्तुतिपदानि तु प्रमादपाठ इति* । तन्न, एवमर्थावगमात् ।

---

इति तादर्थ्ये षष्ठी । एतेन विधेयभावनातदंशाप्रतिपादकत्वेऽपि तदनुष्ठापकानां विधीनामनुष्ठातर्य्युपकारजननेनाङ्गमर्थवादाः स्युरिति सूत्रावयवो विवृतः । कथमुपकरिष्यन्तीति तत्राह—**प्ररोचयमाना इति** । अनुष्ठातृभ्य इत्यर्थात् सम्बध्यते । कथमेते रुचिं जनयन्तीत्यत उक्तम्—**स्तुवन्तः क्रियामिति** । तदनेन स्तुतिरेवार्थः स्तुत्यर्थः । विधिना प्ररोचयितुमर्थ्यमानत्वात् तेनोपकारेणेति **स्तुत्यर्थेने**ति सूत्रांशो विवृतः । तस्मात् सिद्धमर्थवादानामनुष्ठेयार्थपर्यवसानमिति निगमयति—**एवमिति** । उक्तन्यायेन सर्व्वाण्यपि स्तुतिपदानि कञ्चिद्विधेयं तत्सम्बद्धं वार्थं स्तुवन्ति सन्ति विधौ पर्यवस्यन्तीत्यर्थः । अनेनैव न्यायेन निन्दार्थवादानामपि निवृत्तिप्रतिबन्धकरागविरोधिद्वेषोत्पादनेन निषेधवाक्यैकवाक्यतया निषेधपर्यवसानमुक्तं वेदितव्यम् । यतोऽर्थवादानामनुष्ठापकविध्यङ्गत्वेनानुष्ठेयार्थपर्यवसानं ततो यदुक्तं 'तस्मादेवंजातीयकान्यनित्यानि न नित्यचोदनाकार्यं कुर्वन्ती'ति तन्निरस्तमित्याह—**अत इति** । फलोपकार्य्यङ्गतया धर्म्मप्रमितिशेषत्वाद्युक्तं चोदनावत् प्रामाण्यमित्यर्थः ।

ननु "तुल्यं च" इति चशब्देन "विधिना त्वेकवाक्यत्वात्" इत्यनेन यः स्तुत्यर्थत्वमर्थवादानामुपयोग उक्तस्तत्रैव युक्त्यन्तरं समुच्चीयत इति प्रतीयते । तच्चायुक्तम् । तुल्यसाम्प्रदायिकत्वस्य भवितव्यं प्रयोजनेनेत्येतावन्मात्रसाधकतया स्तुत्यर्थत्वासाधकत्वादित्याशङ्क्य नानेन स्तुत्यर्थत्वे हेत्वन्तरं समुच्चीयते, किन्तु स्तुत्यर्थत्वान्नानुपयोग इति अनुपयोगपरिहार उक्तस्तत्रैव हेत्वन्तरमिति दर्शयितुं तामेवानुपयोगपरिचोदनामनुवदति—**अथेति** । स्तुतिप्रतिपादकत्वेनाभिमतेभ्यः प्राग्विधायकानि विधिपदानीति शेषः । तत्र हेतु**र्विधिसरूपत्वादि**ति । अर्थवादमनपेक्ष्यैव विधिपर्यवसायिवसन्तादिवाक्यसारूप्यादित्यर्थः । किमर्थानि तर्हि तानीत्यत आह—**स्तुतीति** । *** प्रमादपठितानि** अबुद्धिपूर्वाधीतानि अनर्थकानीत्यर्थः । अलेतिरध्याहार्य्यः । तत्र पूर्वोपपादितोपयोगप्रतीतं परिहारमन्तर्भाव्य तेन परिहारान्तरसमुच्चये **च**शब्दं व्याख्यातुं पूर्वसूत्रोक्तमनुपयोगपरिहारं स्मारयति—**तन्नेति** । तत्र हेतुः—**एवमिति** । पूर्वोक्तप्रकारेण स्तुत्यर्थतया अर्थवत्त्वावगमादित्यर्थः । न केवलमर्थवत्त्वावगमादनुपयोगासम्भवः

---

* "स्तुतिपदानि तु प्रमादपठितानि" इति टीकाकृत्सम्मतः पाठ इति प्रतिभाति ।

**"तुल्यं च साम्प्रदायिकम् ।" सम्प्रदायः प्रयोजनं येषां धर्माणां* सर्वे ते विधिपदानाम् अर्थवादपदानां च तुल्याः। अध्यायानध्यायते गुरुमुखात् प्रतिपत्तिः शिष्योपाध्यायता च, सर्वस्मिन्नेवंजातीयकेऽविघ्नार्थं† तुल्यमाद्रियन्ते। स्मरणं च दृढम्। अतो न प्रमादपाठ इति ॥ ८ ॥**

साम्प्रदायिकतुल्यत्वाच्चेति सूत्रगतं **च**शब्दं योजयति—**तुल्यं चेति**। साम्प्रदायिकपदार्थं दर्शयन् वाक्यार्थमाह—**सम्प्रदाय इति। सम्प्रदायो**ऽध्ययनं **प्रयोजनं येषां धर्माणाम्*** अध्यायानध्यायतादीनाम् इत्यर्थः। सम्प्रदायाख्याध्ययनानुग्राहकत्वं च धर्माणां

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥ [मनु २।१६५]

इति स्मृत्या विनियोगादवगन्तव्यम्।

ननु योऽर्थवादानर्थक्यमभ्युपैति तस्य साम्प्रदायिकतुल्यत्वमप्यसिद्धमिति शङ्कां साम्प्रदायिकान् धर्मान् विवृण्वन् परिहरति—**अध्यायेत्यादिना। अध्यायानध्याय[ते]** परिच्छेदपरिसमाप्त्यादावुत्थानादिः **गुरुमुखात् प्रतिपत्ति**र्ग्रहणं तन्नियम इति यावत् **शिष्योपाध्यायता** "अधीहि भोः" इत्याद्युपसदनक्रियायां कर्तृकर्मभावः। **च**शब्देन भैक्षचरणगुरुशुश्रूषाधःशय्यादयो गृह्यन्ते। ते सर्वे **सर्वस्मिन्** "वायुर्वै क्षेपिष्ठा" **इत्येवंजातीयके** "वायव्यं श्वेतम्" इत्यादिविधिवाक्यैस्**तुल्यमाद्रियन्ते**, आदरेणानुष्ठातृभिरनुष्ठीयन्त इत्यर्थः। भवत्वध्ययनानुग्राहकधर्माणामर्थवादेष्वप्यादरस्तथापि कथमानर्थक्यपरिहारस्तत्राह—**अविघ्नार्थमिति।**

अमावस्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी।
ब्रह्माष्टमीपौर्णमास्यौ तस्मात्ताः परिवर्जयेत्॥ [मनु ४।११४]

इत्यादिस्मृतेस्तावद् विघ्नहेतुपापनिरासेनाक्षरग्रहणं साधयतः सम्प्रदायस्यानध्यायादिनियमजातमनुग्राहकमवगम्यते। न च निष्प्रयोजनस्याविघ्नेन किञ्चित् कार्य्यम्, तत्र क्लेशपरिहाराय विघ्नस्यैव युक्ततरत्वात्। तेनैषां धर्माणां सम्प्रदायाविघ्नार्थमादरेणानुष्ठीयमानत्वात् सप्रयोजनत्वमर्थवादाध्ययनस्यावसीयत इति भावः।

नन्वादरस्य स्मृतिमूलत्वाभिधानात् तस्याश्च मूलरहितत्वात् कथं प्रयोजनवत्त्वाध्यवसायः। तत्राह—**स्मरणं चेति**। स्मृत्यधिकरणवक्ष्यमाणन्यायेन वेदमूलत्वाद् **दृढमिति** वेदमूल एवायमादर इत्यर्थः। वेदमूलश्चादरः प्रयोजनवत्त्वाद् वेदावगताद्दृते न सम्भवतीति सामान्येन प्रयोजनावगममात्रान्नानर्थक्यमर्थवादानामित्याह—**अत इति**। यस्मान्न प्रमादपाठस्तस्मात् प्रयोजनविशेषकाङ्क्षायां स्तुत्यर्थेनार्थवत्त्वं भविष्यतीति हेत्वर्थे**नेति**

* "भावानाम्" इत्यादर्शे। † 'अविघ्नार्थं' इति मुद्रितेषु पुस्तकेषु पाठः।

**अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थ-स्त्वप्रयोगभूतस्तस्मादुपपद्यते ॥ ६ ॥**

अपि च, यैषानुपपत्तिरुक्ता "शास्त्रदृष्टविरोधात्" [१।२।२] इत्येवमाद्या सा "सोऽरोदीत्" इत्येवमादिषु न प्राप्नोति । कुतः । प्रयोगे हि स्तेयादीनामुच्यमाने विरोधः स्यात् । शब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्यते—"स्तेनं मनः" "अनृतवादिनी वाग" इति ॥ ६ ॥

---

शब्देन दर्शितम् । अथवा साम्प्रदायिकधर्मादरान्यथानुपपत्त्या प्रयोजनवत्त्वमुक्त्वा इदानीं यदेवेदं वेदस्य स्मरणं धारणात्मकं पालनापरपर्यायं साम्प्रदायिकं तेनाप्यध्येतृपुरुषवर्त्तिप्रयोजनवत्त्वाभिप्रायानुमानपूर्वकं प्रयोजनवत्त्वप्रतिपादकवाक्यानुमानान्नानर्थक्यम् इत्यन्यथा सूत्रं व्याचष्टे—**स्मरणं चेत्यादिना । इति**शब्देन पूर्ववद्विशेषपर्यवसानं दर्शितम् ।

एवं सूत्रद्वयेन स्वसिद्धान्तकथनेनानर्थक्यसूत्रोक्तदोषं निरस्योत्तरसूत्रोक्तदोषान्तरपरिहारार्थम् **अप्राप्ता चेत्यादि** सूत्रम् । तत्र न केवलं स्तुत्यर्थत्वेनानर्थक्यपरिहार एव, त्वदुक्तदोषान्तराप्राप्तिश्चेति **चशब्दं** व्याकुर्वन् प्रतिज्ञां व्याचष्टे—**अपि चेति** । यद्यपि पूर्वं स्तेयादिवाक्यमुदाहृत्य शास्त्रदृष्टविरोधो दर्शितः, तथापि "सोऽरोदीद्" इत्यादिष्वपि सोऽविशेषादनुसन्धेय इति वक्तुमाह—**सोऽरोदीदिति** । प्रश्नपूर्वकं "प्रयोगे हि" इत्यादिहेतुं व्याचष्टे—**कुत इत्यादिना** । प्रयोगोऽनुष्ठानं कर्तव्यमिति यावत् । तस्मिन् हि **प्रयोगे** स्तेयादीनां रोदनवपोत्खननदिङ्मोहस्तेयानृतवदनादीनाम् उच्यमाने कल्प्यमाने शास्त्रदृष्टविरोधः स्यात् । न चासौ कल्प्यत इत्यर्थः ।

ननु श्रुतस्यार्थस्य प्रयोजनवत्त्वाय विधिः कल्पनीय इत्याशङ्कापाकरणार्थं "शब्दार्थस्त्वप्रयोगभूतः" इतीदं व्याचष्टे—**शब्दार्थ** इति ।

सूत्रे **तुशब्दः** शङ्काव्यावर्त्तकः । वाच्यार्थविषयो**ऽर्थ**शब्दः । **तेषु** "सोऽरोदीत" इत्यादिषु प्रयुज्यतेऽनेन इति व्युत्पत्त्या प्रयोजनं **प्रयोगः** । विवक्षितश्चार्थः प्रयोजनं भवतीति लक्षणया प्रयोगशब्देन विवक्षितत्वमुक्तम् । प्रयोगमप्राप्तो**ऽप्रयोगभूतः*** अविवक्षित इत्यर्थः ।

एतदुक्तं भवति—विवक्षितार्थस्य हि प्रयोगवत्त्वसिद्धयेऽध्याहारादिनानुष्ठानकल्पना, अयं तु न विवक्षितः, तेन कल्पकाभावान्नाध्याहारादिभिर्विधिकल्पनेति । यस्मान्न विधिकल्पना तस्मान्न शास्त्रदृष्टिविरोध† इत्युपसंहारभागं व्याचष्टे—**तस्मादिति** ।

---

* "अप्रयोगीभूतः" इत्यादर्शे । † "शास्त्रदृष्टिविरोधात्" इत्यादर्शे ।

# गुणवादस्तु ॥ १० ॥

यदुक्तं विधेयस्य प्ररोचनार्था स्तुतिरिति, तदिह कथमवकल्प्येत—यत्रान्यद्विधेयमन्यच्च स्तूयते। यथा, वेतसशाखयावकाभिश्चाग्निं विकर्षतीति वेतसावके विधीयेते, आपश्च स्तूयन्ते—"आपो वै शान्ताः" [तै० सं० ५।४।४।३] इति। तदुच्यते—"गुणवादस्तु"। गौण एष वादो भवति, यत् सम्बन्धिनि स्तोतव्ये सम्बन्ध्यन्तरं स्तूयते। अभिजनो ह्येष वेतसावकयोः, ततस्ते जाते। अभिजनसंस्तवेन चाभिजातः स्तुतो भवति। यथास्माकाभिजनो देवदत्तोऽस्माकेषु स्तूयमानेषु स्तुतमात्मानं मन्यते, एवमत्रापि द्रष्टव्यम् ॥

---

स्तेयादिवाक्यं रोदनादिवाक्यस्याप्युपलक्षणम्।

"गुणवादस्तु" इत्यनेन त्रयोऽर्थाः सूचिताः। तत्र प्रथमं तावच्छब्दार्थस्त्वप्रयोगभूत इत्यनेनाविवक्षयार्थभावनानुपयोग उक्ते, कथं नामोपयोग इत्यपेक्षायां गुणस्य वाद इति षष्ठीसमासाश्रयणेन स्तुत्यर्थत्वं सिद्धान्तसूत्रोक्तं पूर्वसूत्रनैराकाङ्क्ष्यायानेन सारितम्। तत्रापि स्वार्थासत्यत्वे कथं स्तुतिरित्यपेक्षायां गुणाद्वाद इति पञ्चमीसमासाश्रयणेन स्वार्थसत्यत्वानादरोऽप्यनेनाभिधीयते, तथा भवतु स्तुत्यर्थत्वम् तथापि कथं क्वचिद् विधेयस्तुतिपरत्वम् अविरोधगतायाः स्तुतेर्भिन्नविषयत्वादित्यपेक्षायां गौण्या वृत्त्याप्यनेनोच्यते।

तत्र भाष्यकार एषामर्थानां पूर्वसूत्रसङ्गति क्रमञ्जानादृत्यानन्तरोक्तेऽर्थे सूत्रं व्याख्यातुं वृत्तानुवादपूर्वकं शङ्कामाह—**यदुक्तमिति**। सिद्धान्तसूत्र इति शेषः। **इहे**त्युक्तं विषयं दर्शयति—**यत्रेति**। ननु कुत्रैवं भिन्नविषयत्वं विधिस्तुत्योरत आह—**यथेति**। सूत्रमुत्तरत्वेनावतारयति—**तदुच्यत इति**। गुणाद्वाद इति पञ्चमीसमासं दर्शयन् व्याचष्टे—**गौण इति**। **एष वाद** इत्येतद् विवृणोति—**यदिति**। **सम्बन्धिनि** वेतसावकरूपे विकारे **स्तोतव्ये सम्बन्ध्यन्तरम**प्रूपा प्रकृतिः **स्तूयते यत् एष** स्तुति**वादो गौण** औपचारिक इत्यर्थः।

प्रकृतिविकारभावमुपपादयति—**अभिजन** इति। अभिजायतेऽस्मादिति व्युत्पत्त्योत्पत्तिस्थानमभिजनः। **एषः** अबात्मकोऽर्थः। तत्र हेतुः—**तत** इति। जायते दृश्यते यत इति शेषः। ततः किमत आह—**अभिजनेति**। एतदेव दृष्टान्तेनोपपादयति—**यथेति**।* **अस्माक**शब्दो जनपदविशेषवचनः। **एवमिति**। "वेतसशाखयावकाभिश्चाग्निं विकर्षत्यापो वै शान्ताः, शान्ताभिरेवास्य शुचं शमयति" इति श्रूयते। तत्र वेतसावकयोर्विधेयत्वेन स्तुत्यर्हत्वात् तदर्थैवापां स्तुतिरिति निश्चयाच्छान्ताभिरिति सहयोगतृतीयाश्रयेणाद्भिः सहचरितो वेतसावकारूपो विकारः प्रकृतिगुणेन शान्तत्वादस्य यजमानस्य

---

* "कश्मीरशब्दो" इत्यादर्शे।

अथ "सोऽरोदीद्" इति कस्य विधेः शेषः ? "तस्माद् बर्हिषि रजतं न देयम्" इत्यस्य। कुतः ? साकाङ्क्षत्वात् पदानाम्। "सोऽरोदीद् यदरोदीत्तद्रुद्रस्य रुद्रत्वम्" इत्यत्र स इति प्रकृतापेक्षः। तत्प्रत्ययात्। तस्य यदश्रुशीर्य्यतेति तस्येति पूर्वप्रकृतापेक्ष एव। उपपत्तिश्चोपरितनस्य "यो बर्हिषि रजतं दद्यात् पुरास्य संवत्सराद् गृहे रोदनं भवतीति" इत्यस्य हेतुत्वेनायं प्रतिनिर्दिश्यते—तस्माद्बर्हिषि रजतं न देयमिति। एवं सर्वाणि साकाङ्क्षाणि कथं विधेरुपकुर्वन्तीति ? गुणवादेन। रोदनप्रभवं रजतं

---

शुचं दुःखं शमयतीति वेतसावकयोरेवानेन स्तुतिरित्यर्थः।

एवमन्तिमेऽर्थे सूत्रं योजयित्वादिमध्यमयोरप्यर्थयोः "सोऽरोदीत्" इत्युदाहरणे सूत्रं योजयितुं पृच्छति—**अथेति**। यद्यविवक्षितस्वार्थाः "सोऽरोदीत्" इत्येवमादयो नार्थभावनाङ्गम्, ततोऽर्थवादा वक्तव्याः। न च विध्येकवाक्यत्वं विनार्थवादत्वमिति वाच्यो विधिशेषभाव इत्यर्थः। यज्ञकर्मणि रजतदाननिषेधशेषत्वेन निन्दार्थवादत्वं समर्थयन्(?) आह—**तस्मादिति**। शेषशेषिभावे प्रमाणं पृच्छति—**कुत** इति। उत्तरमाह—**साकाङ्क्षत्वादिति**। अवान्तरपदवर्गाभिप्रायः **पद**शब्दः, बहुवचनेन तेषां प्रत्येकं साकाङ्क्षत्वमुक्तम्। अन्यथा हि "पुरास्य संवत्सराद् गृहे रोदनं भवति" इत्येतावतैव नि[षेध]सिद्धेरितरानर्थक्यात्। प्रत्येकं साकाङ्क्षत्वमुपपादयति—**'सोऽरोदीत्'** इत्यादिना। "देवासुराः संयत्ता आसन्, ते देवा विजयमुपयन्तोऽग्नौ वामं वसु संन्यदधतेदमु नो भविष्यति यदि नो जेष्यन्तीति। तदग्निर्न्यकामयत, तेनापाक्रामत्। तद्देवा विजित्यावरुरुत्समाना अन्वायन्, तदस्य सहसादित्सन्त"[तैः सं १।५।१।१] इत्यत्र प्रकृतो योऽग्निस्तदपेक्ष इत्यर्थः। कुतः? **तत्प्रत्ययात्** स इत्युक्ते तस्य प्रकृतस्य प्रत्ययात् प्रतीयमानत्वादित्यर्थः। यद्वा स इत्यस्य सर्वनामस्वपाठात्* कथं प्रकृतापेक्षत्वमित्याशङ्क्याह—**तत्प्रत्ययादिति**। सर्वनामतच्छब्दादेशेन **स** इत्यनेन स्थानिनस्तच्छब्दस्य प्रत्ययादित्यर्थः। ततश्च देवासुरादिवाक्येन सह रोदनवाक्यस्यैकवाक्यत्वं सिद्धमिति भावः। **तस्येति**। तथोत्तरस्मिन्नपि वाक्ये तस्य प्रकृतस्य रुदतो रुद्रस्याग्नेर्यदश्रु पतितं तद्रजतमभवदित्यत्र तस्येति शब्दः प्रकृतापेक्षः। ततश्च तस्यापि पूर्वेणैकवाक्यतेति भावः। सर्वस्यास्य सन्दर्भस्य निन्दावाक्येनैकवाक्यतामाह—**उपपत्तिश्चेति**। उपरितनस्येयमुक्तेति शेषः। **च**शब्दो हेतौ, यस्मादियमुपपत्तिस्तस्मादुपपादकस्योपपाद्येनैकवाक्यता युक्तेत्यर्थः। कोऽसावुपरितनो ग्रन्थस्तमाह—**यो बर्हिषीति**। ननु रजतस्याश्रुकार्यत्वेऽपि रोदनोत्पादकत्वे कारणाभावात् कथमियमुपपत्तिरत आह—**हेतुत्वेनेति**। **अयमिति** रोदनप्रभवत्वरूपोऽर्थः कारणानुरूपत्वात्

---

* "सर्वनामस्वपाठात्" इत्यादर्शे।

बर्हिषि ददतो रोदनमापद्यते। तत् प्रतिषेधस्य गुणो यदरोदनमिति। कथं पुनररुदति रोदितिशब्दः* कथं वानश्रुप्रभवे रजतेऽश्रुप्रभवमिति वचनम्। पुरास्य संवत्सराद्सति रोदने कथं रोदनं भवतीति तदुच्यते—गुणवादस्तु। †गौणा एते शब्दाः। रुद्र इति रोदननिमित्तस्य शब्दस्य दर्शनाद् "यदरोदीत्"

कार्य्याणां रजतस्य च रोदनमूलाश्रुप्रभवत्वात् तद्दानाद्रोदनोत्पत्तिरिति हेतुत्वेन निर्देशादुपपत्तिरेवेयमित्यर्थः। सोपपत्तिकस्य निन्दावाक्यस्य निषेधवाक्यैकवाक्यत्वं दर्शयितुं पुनर्निषेधवाक्यं दर्शयति—**तस्मादिति**। तच्छब्दः सोपपत्तिकनिन्दापरामर्शकः। साकाङ्क्षत्वेनैकवाक्यत्वमुक्तं निगमयति—**एवमिति**। ततश्च विध्येकवाक्यत्वादर्थवादत्वोपपत्तिरिति भावः। साकाङ्क्षत्वमङ्गीकृत्योपकाराभावेन विध्येकवाक्यत्वमाक्षिपति—**कथमिति**। यद्यपि निन्दानिषेधयोरेवेह साकाङ्क्षत्वेनोपकारकत्वेन चैकवाक्यत्वं व्युत्पाद्यते तथापि सर्वोदाहरणानामेकवाक्यत्वसाधारणोऽयं ग्रन्थ इति सूचयितुमुपलक्षणार्थं **विधि**ग्रहणम्। आदिमेऽर्थे सूत्रं योजयन्नुत्तरमाह—**गुणेति**। **हि**शब्दः प्रसिद्धौ, प्रसिद्धं हि बहुक्षीरादिवाक्यस्य गुणवादेन विधिशेषत्वम्। तद्वदत्रापि रोदनोत्पादकगुणवादेन निन्दाया निषेधशेषत्वमित्यर्थः।

निन्दामेवोपपादयति—**रोदनेति**। दोषसंकीर्तनात्मकत्वान्निन्दाया गुणशब्दानुपपत्तिमाशङ्क्याह—**तदिति**। निवृत्तिफले हि निषेधे निन्दार्थमुच्यमाना दोषा गुणा एव निवृत्त्युपयोगित्वादित्याशयः। निरालम्बननिन्दानुपपत्त्या निषेधशेषत्वमाक्षिपति—**कथं पुनरिति**। न खल्वग्निररोदीदित्यत्रेदमेव वाक्यं प्रमाणम्—अस्य निषेधशेषत्वाभ्युपगमात्, प्रमाणान्तराभावाच्च। रोदनमकुर्वति तस्मिन् कथं **रोदितिशब्दः** रोदनकर्तृत्ववाची शब्द इत्यर्थः। तस्य यदश्रु तद्रजतम् इत्यस्यापि निरालम्बनत्वमाह—**कथं वेति**। एवमुपपादकवाक्यस्य निरालम्बनत्वमुक्त्वोपपाद्यस्यापि तदाह—**पुरेति**। मध्यमेऽर्थे सूत्रं योजयन्नुत्तरमाह—**यदुच्यत इति**। गुणाद्वादो गुणवाद इति व्याचष्टे—**गौण इति**। **एषो**ऽरोदीदित्यादिः। तत्रारोदीदित्यस्य तावदालम्बनमाह—**रुद्र इति**। रोदनं निमित्तं यस्येति विग्रहः। रुद्रशब्दस्तावदग्नौ प्रसिद्धः। "त्वमग्ने रुद्रो असुरो महो दिवः [ ऋ० सं० २।१।६ ]" "रुद्रो वा एष यदग्निः" ‡इति [मन्त्र] ब्राह्मणयोः प्रयोगदर्शनात् तत्र च रोदिते रोदनार्थत्वाद् र[क्]प्रत्ययस्य च कर्त्रर्थत्वाद् रोदनकर्तृवाची रुद्रशब्दोऽवगम्यते। तस्मात् सिंहगुण इव देवदत्तः सिंहशब्देन रुद्रशब्देनाग्निर्विषयीक्रियमाणः 'अरोदीद्' इत्युच्यत इत्यर्थः।

* मुद्रितपुस्तकेषु "अरोदीदिति भवति" इति पाठः। † "गौण एष शब्दः" इति टीकानुसम्मतः पाठः। ‡ एष रुद्रः। यदग्निः तै० ब्रा० १।१।६।६ यो वै रुद्रः सोऽग्निः श० ब्रा० ५।३।४।१३।

इत्युच्यते। वर्णसारूप्यान्निन्दन्ननश्रुप्रभवमप्यश्रुप्रभवमित्याह। निन्दन्नेव च धनत्यागे दुःखदर्शनात् पुरास्य संवत्सराद्गृहे रोदनं भवतीत्याह।

तथा "यः प्रजाकामः पशुकामो वा स्यात् स एतं प्राजापत्यं तूपरमालभेत" इत्याकाङ्क्षितत्वादस्य विधेः शेषोऽयम्—"य आत्मनो वपामुदक्खिदत्" इति। कथं गुणवादः? इत्थं नाम--नासन् पशवो यदात्मनो वपामुदक्खिददिति।*एतच्च कर्मणः सामर्थ्यं यदग्नौ प्रहृतमात्रायां वपायामजस्तूपर उदगात्, इत्थं बहवः पशवो भवन्तीति। कथं पुनरनुत्खिन्नायां वपायां प्रजापतिरात्मनो वपामुदक्खिददित्याह—उच्यते। असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन

-अश्रुप्रभववचनस्यालम्बनमाह—**वर्णेति**। **वर्णसारूप्या**च्छुक्लत्वादिलक्षणा**दश्रुप्रभवमित्याह**। प्रकृतिविकारयोरेव प्रायः सारूप्यदर्शनात् इह च सारूप्यादुत्प्रेक्षया प्रकृतिविकारभावमाहेत्यर्थः। किमर्थम्? **निन्दन्नि**न्दाहेतोः निन्दार्थमिति यावत्। **पुरास्ये**त्यस्यापि सालम्बनतामाह—**निन्दन्निति**। लोके हि धनत्यागनिमित्तम् अत्यन्तोदारस्यापि गृहजनः पीड्यते, तेन धनत्यागसामान्याद्रोदनोपन्यासो गौणो न मुख्यः। निन्दार्थत्वेन च मुख्यार्थाभावो न दोष इत्यर्थः। वपोत्खननवाक्येऽपि द्वेधा सूत्रं योजयितुं विध्येकवाक्यत्वं तावदाह—**तथेति**। रोदनवाक्यस्य निषेधशेषत्वदृष्टान्तार्थ**स्तथा**शब्दः। "स आत्मनः' इत्यादि "तूपरमालभेत" इत्यस्य विधेः शेषस्तेनाकाङ्क्षितत्वादिति योजना।

ननु कथमस्य विध्यपेक्षितार्थविषयत्वं येन तदाकाङ्क्षितत्वं स्यादिति चोदयति—**कथमिति**। सूत्रेणोत्तरमाह—**गुणवादादिति** (?)। गुणानां वादमुपपादयति—**इत्थं नामेति**। विशिष्टफलत्वादिदं कर्म स्वावयवोत्कर्तनेनापि कृतम्। तत् कर्तव्यं धनत्यागादिनेति किमु वक्तव्यमित्यर्थः। तामग्नौ प्रागृह्णादिति वाक्योक्तं गुणान्तरमाह—**तच्चेति**। **तत्** तादृशम्। **प्रहृतमात्रायां** प्रक्षिप्तमात्रायां ... ... ... ... ... ... ... ... प्रभूतपश्वादिफलत्वमनेनोक्तमिति हृदयम्। इदानीमस्मिन्नुदाहरणेऽन्यथा सूत्रं व्याख्यातुं निरालम्बनस्तुत्यनुपपत्तिं शङ्कते—**कथमिति**। पूर्ववत् प्रमाणाभावाद् **अनुत्खिन्नाया**मित्यर्थः। उपलक्षणं चैतत्—उत्तरवाक्यानामपि निरालम्बनत्वेन [विध्ये]कवाक्यत्वाभावस्य। यथा "सोऽरोदीत्" इत्यादीनां गौणोऽर्थ आलम्बनं नैवं प्रजापतिवपोत्खननादिवाक्यानां लभ्यते। तेनार्थशून्यत्वात् स्तुतिलक्षणया प्ररोचनानुपपत्तिरित्यभिसन्धिः। किमिदमसतार्थेन स्तुत्यसम्भवचोद्यं किंवा निरालम्बनान्वाख्यानानुपपत्तिचोद्यम्? तत्राद्यं परिहरति—

* 'तच्च' इति टीकाकृत्सम्मतः पाठः।

**प्रशंसाया गम्यमानत्वात्। इहान्वाख्याने* वर्त्तमाने द्वयं निष्पद्यते—यच्च वृत्तान्तज्ञानं यच्च कस्मिंश्चित् प्ररोचना द्वेषो वा। †तत्र वृत्तान्तान्वाख्यानं न प्रवर्तकं न निवर्तकं चेति प्रयोजनाभावादनर्थकमित्यविवक्षितम्। प्ररोचनया तु प्रवर्तते द्वेषाद् निवर्त्तते इति तयोर्विवक्षा। वृत्तान्तान्वाख्यानेऽपि विधीयमाने, आदिमत्ता दोषो वेदस्य प्रसज्येत। कथं पुनरिदं निरालम्बनमन्वाख्यायत इति। उच्यते—नित्यः कश्चिदर्थः 'प्रजापतिः' स्याद्—वायुराकाश आदित्यो वा, स 'आत्मनो वपामुदक्खिदद्' इति—वृष्टिं वायुं रश्मिं वा, ताम् 'अग्नौ प्रागृह्णात्'—वैद्युते आर्बीसे लौकिके वा।**

---

**असदिति।** स्तुत्यर्थेनोपयुज्यत इति शेषः। कुत इत्यत आह—**प्रशंसेति।** यद्यर्थवादावगतस्यार्थस्य प्ररोचनाहेतुत्वं ततोऽर्थाभावेन प्राशस्त्यलक्षणाभावात् सा न स्यात्। शब्द एव त्ववान्तरव्यापारीकृतार्थप्रत्ययः प्ररोचयति। ततश्च विनाप्यर्थं तत्प्रत्ययेनैव प्राशस्त्यावगमात् प्ररोचनासिद्धिरित्यभिसंहितम्।

ननु प्राशस्त्यवदर्थस्यापि गम्यमानत्वात् कथमभावस्तत्राह—**इह त्विति***। अर्थवादमात्रोक्तिः प्ररोचनेतिवृत्तान्तज्ञानजनितप्राशस्त्याप्राशस्त्यज्ञानाभ्यां प्ररोचनाद्वेषावित्यर्थः। ततः किम् अत आह—**†अत्रेति। अविवक्षितं** वृत्तान्तरूपेऽर्थे इति शेषः। नैतद्वृत्तान्तपरमिति यावत्। प्रवृत्त्यादिप्रयोजनत्वात् प्ररोचनादिपरत्वं तु न युक्तमित्याह—**प्ररोचनयेति।** अर्थपरत्वे दोषान्तरमाह—**वृत्तान्तेति।** अन्वाख्यायत इति अन्वाख्यानम्। **वृत्तान्तरूपेऽन्वाख्याने विधीयमाने** तात्पर्येण प्रतिपाद्यमाने स्याद् **आदिमत्तादोषः** आदिमतोऽर्थस्य प्रतिपादनादित्यर्थः। अतश्चाविवक्षितत्वैवार्थं तज्ज्ञानादेव प्राशस्त्यसिद्धेः प्ररोचनासिद्धिरिति समुदायार्थः।

नन्वस्त्वर्थज्ञानमात्रस्य स्तुत्युपयोगित्वं निरालम्बनं तु ज्ञानमन्वाख्यानं वा न सम्भवतीति द्वितीयं शङ्कते—**कथमिति। इदम्** अन्वाख्यानम् **अन्वाख्यायते,** क्रियते इत्यर्थः। निरालम्बनत्वमात्रमेवमपि कथञ्चित् परिहर्तुं शक्यमित्युत्तरमाह—**नित्य इत्यादिना।** "प्रजापतिर्वा इदमेक आसीत्" इत्यादौ प्रजापतिशब्दः प्रजाः पातीति व्युत्पत्त्या विकल्पेन वाय्वादिवचन इत्यर्थः। "स आत्मनः—" इत्यत्र वपाशब्दस्यालम्बनमाह—**स इत्यादिना।** वायोः प्रजापतेर्वृष्टिर्वपा मध्यवर्त्तिसारविषयत्वाद् वपाशब्दस्य, वायुमध्यवर्त्तित्वात् तद्धेतुकत्वाच्च वृष्टेः। तथाकाशस्य वायुर्वपा, आकाशाभावे वायोरप्रवृत्तेस्तन्मध्यवर्तित्वाद् वायुरहितस्यापवरकाकाशस्योष्मदुःखोत्पादकत्वेन तत्सारत्वाच्च, तथादित्यस्य रश्मिर्वपा रश्मेरादित्यावयवत्वेन तन्मध्यवर्तित्वाद्रश्म्यायत्तत्वेन प्रकाशस्य सारत्वाच्चेत्यर्थः। तामग्नावित्यस्यालम्बनमाह—**तामग्नावित्यादिना।**

ततोऽजः इत्यन्नं बीजं वीरुद् वा, 'तमालभ्य' तमुपयुज्य प्रजाः पशून् प्राप्नोतीति गौणाः शब्दाः ॥

"आदित्यः प्रायणीयश्चरुरादित्य उदयनीयश्चरुः" [तै० सं० ६।१।५।१] इत्यस्य विधेः शेषः—"देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्" इति, आकाङ्क्षितत्वात्। सर्वव्यामोहानामादित्यश्चरुर्नाशयिता, अपि दिङ्मोहस्येति स्तुतिः। कथमसति दिङ्मोहे दिङ्मोहशब्द इति। उच्यते।

---

तत्रापि यथाक्रमं **वैद्युते**ऽग्नौ वृष्टेर्वपायाः प्रक्षेपकल्पना तस्याबिन्धनत्वप्रसिद्धेः। **आर्बीसे** शारीरे जाठरेऽग्नौ वायोर्निक्षेपकल्पना आन्तरत्वसामान्यात् **लौकिके**ऽग्नौ रश्मेर्वपाया निक्षेपकल्पना, "आदित्यो वा अस्तं यन्नग्निमनुप्रविशति" इति श्रुतेः, स्वरूपेण चादित्यस्य स्वर्गस्थस्य भूमिष्ठाग्निप्रवेशासम्भवाद्रश्मिद्वारा तत्प्रवेशोपपत्तेश्चेत्यर्थः। "ततोऽजस्तूपरः" इत्यस्यालम्बनमाह—**तत इति।** अजत्वमबादीनां सामान्याकारेण द्रष्टव्यम्। तत्र व्रीह्यादिरूपस्यान्नस्य विद्युद्वृष्टिसंयोगाज्जन्म ऊष्मणोदकेन च विना तज्जन्मादर्शनादूष्मणश्च तेजोगुणत्वात् विद्युतश्च तेजस्त्वादुपचारात् तज्जन्माभिधानम्। वायुजाठराग्निसंयोगाच्चरमधातुरूपस्य वीजस्य जन्म। जाठराग्निपाचितस्यान्नरसस्य व्यानाख्येन वायुना विण्मूत्रादिभ्यो विविक्तीकृतस्य चरमधातुरूपेण परिणामाद् बीजकारणत्वं जाठरादेः। रश्मिलौकिकाग्निसम्बन्धाद्वीरुज्जन्म। ऊष्मजन्मत्वेन व्रीह्यादिवद् भौमाग्निजन्यत्वात् निदाघकालजन्यत्वेन च वीरुधो रश्मिजन्यत्वावगमात् इत्यर्थः। निगमयति—**इत्येवमिति।** **शब्दाः** प्रजापतिशब्दप्रभृतयः। "तं स्वायै देवताया आलभेत, ततो वै स प्रजाः पशूनसृजत" इत्यस्यालम्बनमाह—**तमिति।** **आलभेत**त्यस्य व्याख्यानम्—उपयुज्येति प्राप्येत्यर्थः। असृजतेत्यस्यालम्बनमुक्तम्। प्राप्नुवन्तीति सर्वप्रजानां व्रीह्यादिपरिणामप्रभवत्वाद् अन्नस्य तद्धेतुत्वं बीजादेस्तु स्पष्टमेव प्रजादिकारणत्वम्, तेनालभेतेत्यादयोऽपि शब्दा गौणा एवेत्यर्थः।

दिङ्मोहोदाहरणेऽपि सूत्रं योजयितुं विधिशेषत्वं तावदाह—**आदित्य इति।** कर्मसु कौशलेन दीव्यन्तीति **देवा** ऋत्विजः। **देवयजनं** यज्ञभूमिः। भवतु विधिशेषत्वं तथापि कथं स्तुतिरित्याशङ्क्य गुणवादादित्याह—**सर्वेति।** प्रमाणान्तरानिवर्त्योऽपि दिङ्मोह आदित्यचरुणा निवर्त्यते, किमुतान्ये व्यामोहा इति व्यामोहनिवर्तकत्वेन **स्तुति**रित्यर्थः। निराकाङ्क्षस्य दिङ्मोहपदस्य कथं स्तावकत्वमित्याह—**कथमिति।** सूत्रेणोत्तरमाह—**अप्राकृतस्येति।** प्रकृतावनभ्यस्तस्यानेकस्य कर्मराशेर्बुद्धौ सन्निहितत्वात् कथमेनमविदितं करिष्याम इत्याकुलीभावसम्भवेन लौकिका इव कर्तव्यतामूढा ऋत्विजोऽप्याकुलत्वसामान्याद् गौण्या वृत्त्या दिङ्मूढा इत्युच्यन्त इत्यर्थः।

अप्राकृतस्य बहोः कर्मसमूहस्योपस्थितत्वाद् गौणो मोहशब्दः, अवधारणावकाशदानादिभिर्ज्ञापयतीति गौणता ॥ १० ॥

## रूपात् प्रायात् ॥ ११ ॥

"हिरण्यं हस्ते भवत्यथ गृह्णाति" इति साकाङ्क्षत्वादस्य विधेः शेषः— "स्तेनं मनोऽनृतवादिनी वाग्" इति। निन्दावचनं हिरण्यस्तुत्यर्थेन यथा किमृषिणा, देवदत्त एव भोजयितव्यः। कथं पुनरस्तेनं मनो निन्दितुमपि स्तेनशब्देनोच्यते, कथं चाननृतवादिनीमप्यनृतवादिनीति ब्रूयात्? गुण-

---

नन्वेवं "दिशो न प्राजानन्" इति दिङ्मोहाभिधानस्य सालम्बनत्वेऽपि "पथ्यां स्वस्तिमयजन् प्राचीमेव दिशं प्राजानन्नग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीमदित्योर्द्ध्वाम्" [तै० सं० ६।१।५।१] इति अदितेर्दिग्भेदज्ञापकत्वोक्तेः किमालम्बनमत आह— **अवधारणेति**। अवधारणार्थमवकाशदानम् **अवधारणावकाशदानम्**। **आदि**शब्देन तत्फलप्रणिधानविचारावुक्तौ। प्रायणीयायां हि दर्शपूर्णमासविकृतौ प्रायः प्राकृतान्यभ्यस्तान्येव कर्माण्येव क्रियन्ते। ततश्च तत्समय एव भविष्यत्स्वनभ्यस्तेषु कर्मस्ववधारणार्थं प्रणिधानादिसम्भवात् प्रायणीयायाश्च "आदित्यः प्रायणीयः" इत्यादित्यचरुविधानाददितिर्ज्ञापयतीति गौण औपचारिक एष वाद इत्यर्थः ॥ १० ॥

यद्यपि "अप्राप्ता च" इत्यादिना सूत्रद्वयेनार्थभावनाङ्गत्वनिरासेनार्थवादानां गुणवादेन शब्दभावनाङ्गत्वमुक्तम्, तथाप्युदाहृतेष्वेव केषुचिद्वाक्येषु गौणतानिमित्तगुणविशेषदर्शनायोत्तरसूत्रसन्दर्भः। तत्र पूर्वोक्तदृष्टविरोधोदाहरणे तावदाह— **रूपात् प्रायात्** इति। तत्र स्तेयानृतवादार्थवादस्य साकाङ्क्षत्वेन हिरण्यहस्तधारणपूर्वकग्रहणविधिशेषत्वं तावदाह—**हिरण्यमिति**। ननु स्तेयाद्यर्थवादेन वाङ्मनसयोर्निन्दा क्रियते, कथं विधिशेषत्वं तत्राह—**निन्देति**। सर्वक्रियाङ्गत्वेनात्यन्तान्तरङ्गभूतयोरप्यनयोः स्तेयादिधर्मवत्त्वेन दूर एव हिरण्यादूनत्वमिति निन्दावचनं स्तुत्यर्थत्वेन, न निषेधार्थतया, सन्निहितविध्याकाङ्क्षितस्तुतिपरत्वेन तदेकवाक्यत्वे सम्भवति निषेधकल्पनानुपपत्तेः। यथा "अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च" इत्यस्य सन्निहितपयोहोमस्तुत्यर्थत्वेन तदेकवाक्यत्वसम्भवेन निषेधकल्पना तद्वदित्यर्थः। निन्दात्वेन प्रतीयमानमपि न तत्परं किन्तु स्तुत्या विधिपरं दृष्टम् इत्युदाहरति—**यथेति**। ननु निन्दितमपि कथमस्तेनं मनः स्तेनशब्दो ब्रूयात्, ऋतवादिनीं च कथं वाचमनृतवादिनीति ब्रूयात्, निरालम्बनत्वापत्तेरिति चोदयति—**कथं पुनरिति**। पूर्वसूत्रेणोत्तरमाह—**गुणेति**।

वादस्तु—रूपात्, यथा स्तेनाः प्रच्छन्नरूपा एवं च मन इति गौणः शब्दः ; प्रायाच्च, अनृतवादिनी वागिति ॥ ११ ॥

## दूरभूयस्त्वात् ॥ १२ ॥

दृष्टविरोध उदाहरणं "तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः, तस्माद्चिंरेवाग्नेर्नक्तं ददृशे न धूमः" इति। "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः" इति मिश्रलिङ्गमन्त्रयोर्विधानस्याकाङ्क्षितत्वाच्छेषः। उभयोर्देवतयोः सन्निधाने होम इति स्तुतेरुपपत्तिः। दूरभूयस्त्वाद्धूमस्याग्नेश्चादर्शने गौणः शब्दः॥ १२॥

---

इत्याशङ्क्य यथाक्रममुदाहणद्वयेऽपि "रूपात्" "प्रायात्" इति च योजयति—**यथेति**। **वागिति**—गौण इत्यनुषङ्गः। स्तेनधर्मस्याप्रत्यक्षस्य मनसि भावाद् गौणः स्तेनशब्दः प्रायिकत्वेन च वाचोऽनृतवादिनीत्वोक्तिरित्यर्थः ॥ ११ ॥

उक्तगुणवादनिमित्तस्योदाहरणान्तरेऽव्याप्तिमाशङ्क्य परिहरति—**दूरेति**। उदाहरणान्तरमेवाह—**दृष्टेति**। अस्मिन्नुदाहरणे निमित्तान्तरं वक्तुं विधिशेषत्वं तावद् धूमार्थवादस्य दर्शयति—**अग्निरिति**। 'प्रातर्जुहोति' इति प्रक्रमे सत्यपीति शेषः। अस्य मिश्रलिङ्गमन्त्रविधेः शेषमिदमुदाहरणमिति सम्बन्धः। इदमिहाकूतम्—

"यदग्नये च प्रजापतये च सायं जुहोति, यत् सूर्याय च प्रजापतये च प्रातर्जुहोति इत्यग्निसूर्ययोः केवलयोर्देवतात्वेन विहितत्वादेव केवलदेवत्यमन्त्रयोर्लिङ्गतोऽपि प्राप्तिसम्भवान्मिश्रलिङ्गमन्त्रविधिपर्युदस्तप्रतिप्रसवमात्रार्थत्वेन च केवलदेवत्यमन्त्रविधानस्य स्तुत्यनपेक्षत्वान्मन्त्रलिङ्गविधानस्य "अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं होतव्यम्, सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः" इत्यस्यापूर्वत्वेन स्तुत्याकाङ्क्षत्वादस्य विधेः शेषः, शेषत्वं च तस्माद् धूम एवेत्यादेः, दिवाग्निरादित्यं गच्छतीत्यादिमिश्रताप्रतिपादनस्योपपत्तित्वेनेति विधिशेषत्वमुक्त्वा गुणवादेन स्तुतित्वमाह—**उभयोरिति**। द्वयोरपि सन्ध्ययोर्मिश्रदेवतासन्निधानाद् यथार्थाभ्यामेव मन्त्राभ्यां होम इति स्तुतेरपि सम्भव इत्यर्थः।

ननु तथापि धूम एवेत्याद्यवधारणा निरालम्बनेत्याशङ्क्य सूत्रं योजयति—**दूरेति**। धूमस्य दूरभूयस्त्वादग्नेरदर्शने गौणः शब्दः, अग्नेर्दूरभूयस्त्वाद् धूमस्यादर्शने गौणः शब्द इत्यन्वयः। दृश्यमानधूमगते विषयतया दृशिसम्बन्धे दृशिना लक्षिते दूरभूयस्त्वे धूमे विधीयेते अर्चिषि च निषिध्येते, एवमर्चिर्दर्शनलक्षिते अर्चिषि विधीयेते, धूमे च निषिध्येते।

## स्त्र्यपराधात् कर्तुश्च पुत्त्वदर्शनम् ॥१३॥

दृष्टविरोध एवोदाहरणम्—"न चैतद्विद्मः" इति। तत्, "प्रवरे प्रव्रियमाणे देवाः पितरः इति ब्रूयात्" इत्याकाङ्क्षितत्वादस्य विधेः शेषः। अब्राह्मणोऽपि ब्राह्मणः प्रवरानुमन्त्रणेन स्यादिति स्तुतिः। दुर्ज्ञानत्वादज्ञानवचनं गौणम्। स्त्र्यपराधेन कर्तुश्च पुत्रदर्शनेन "अप्रमत्ता रक्षत तन्तुमेनम्" [आप० धर्मसू० २।६।१३।६] इत्यादिना दुर्ज्ञानम् ॥ १३ ॥

## आकालिकेप्सा ॥ १४ ॥

शास्त्रदृष्टविरोध उदाहरणम्—"को हि तद्वेद" इति "दिक्ष्वतीकाशान् करोति" इति साकाङ्क्षत्वादस्य विधेः शेषः। प्रत्यक्षफलत्वेन स्तुतिः।

---

एवं च यथा दिवा दूरत्वबाहुल्ये धूमे दृश्येते नैवमर्चिषि, रात्रौ यथार्चिषि नैवं धूम इत्यर्थः ॥ १२ ॥

अस्याप्युदाहरणान्तरेऽव्याप्तिमाशङ्क्य निमित्तान्तरोपन्यासेन परिहरति—**स्त्र्यपराधादिति**। प्रव्रियमाणे यजमानो ब्रूयात् "देवाः पितरः" इत्यादीति पूरणीयम्। प्रवरानुमन्त्रणविधिशेषत्वेऽपि कथं स्तुतिरित्याशङ्क्य गुणवादादित्याह—**अब्राह्मणोऽपीति**। तत्र च प्रसिद्धब्राह्मण्यानां ब्राह्मणत्वलाभो निष्प्रयोजन इति ब्राह्मण्याप्रसिद्धिप्रतिपादनेन स्तुत्युपपादकमेतद् वाक्यमित्यर्थः। तथापि ज्ञायमाने कथमज्ञानवचनमित्याशङ्क्य गुणवादादित्याह—**दुर्ज्ञानत्वादिति**। विदिना तद्गतं सौकर्यं लक्षयित्वा नञा निषिध्यत इत्यर्थः। दुर्ज्ञानत्वे कारणं सूत्रवाक्येनाह—**स्त्र्यपराधेनेति**। दुर्ज्ञानमिति सम्बन्धः। स्त्रीणां स्वभर्तृव्यतिक्रमलक्षणापराधसम्भवेनेत्यर्थः।

ननु सत्यपि स्त्र्यपराधे मातुः क्षेत्रिणो वा पुत्रः स्यात्, तयोश्च निश्चितत्वाद् ब्राह्मण्यस्य कथं दुर्ज्ञानं पुत्रस्य ब्राह्मण्यम् अत आह—**कर्त्तुश्चेति**। कर्तुर्निषेक्तुरेव पुत्रो न मातुः क्षेत्रिणो वेत्यस्यार्थस्य "अप्रमत्ता रक्षत तन्तुमेतम्" इत्यनेन वैदिकेन प्रजातन्तुरक्षणे प्रमादपरिहारविधानरूपेण लिङ्गेन "माता भस्त्रा पितुः पुत्रो येन जातः स एव सः" [महाभारते २।७३।११०] इति स्मृत्या च प्रदर्शनात्। भर्तृव्यतिक्रमशङ्कायां दुर्ज्ञानमेव पुत्रस्य ब्राह्मण्यमित्यर्थः ॥ १३ ॥

दुर्ज्ञानत्वस्याप्युदाहरणान्तरेऽव्याप्तिपरिहारार्थम्—**आकालिकेप्सा** इति सूत्रम्। तद् व्याख्यातुं को हि तद्वेदेत्यादेर्विधिशेषत्वं

अनवक्लृप्तिवचनं विप्रकृष्टकालफलत्वाद् गौणम् ॥ १४ ॥

## विद्याप्रशंसा ॥ १५ ॥

"तथा फलाभावात्" इत्यत्रोदाहृतम्—"शोभतेऽस्य मुखम्" इति गर्गत्रिरात्रविधेराकाङ्क्षितत्वाच्छेषः। वेदानुमन्त्रणस्य च—"आस्य प्रजायां वाजी जायते" इति शेषः। मुखशोभा वाजिमत्त्वं च गुणवचनत्वाद् गौणः शब्दः—शोभत इव शिष्यैरुद्वीक्ष्यमाणम्, कुले सन्तताध्ययनश्रवणान्मेधावी जायत इति स प्रतिग्रहादन्नं प्राप्नोतीति ॥ १५ ॥

## सर्वत्वमाधिकारिकम् ॥ १६ ॥

अन्यानर्थक्यवाक्य उदाहरणम्—"पूर्णाहुत्या सर्वान् कामानवाप्नोति"

---

प्रवर्ग्यसमये शालाया दिक्षु **अतीकाशान्** छिद्राणि **करोति** इत्यस्य विधेः शेष इत्यर्थः। सम्प्रति गुणवादेन स्तुतित्वमाह—**प्रत्यक्षेति**। अतीकाशकरणं हि धूमापगमहेतुत्वाद् दृष्टफलं तेन प्रशस्तमिति स्तूयत इत्यर्थः। तथापि कथं ज्ञायमानवचनेऽज्ञानवचनमित्याशङ्क्य सूत्रं योजयति—**अनवक्लृप्तीति**। अतीकाशकरणफलं प्रत्यक्षं कर्म, अयन्तु विप्रकृष्टकालत्वात् परोक्षम्। तेन विदिना लक्षितमपरोक्षत्वं को हीत्याक्षिप्य इत्यर्थः। तेन* पूर्वसूत्रार्थान्निमित्तार्थां पञ्चमीमाकृष्यैवं सूत्रं योजितम्—तदानीमेवोत्पद्यमानम् **आकालिकं** प्रत्यक्षदृष्टफलं **तत्रेप्सा** आप्तुमिच्छा। साऽज्ञानवचने निमित्तमिति ॥ १४ ॥

फलाभावसूत्रोक्तमनुपलब्धिविरोधं निराकर्तुमाह—**विद्येति**। सूत्रं व्याख्यातुं विधिशेषत्वमाह—**तथेत्यादिना**। "आस्य प्रजायां वाजी जायते" इति वेदानुमन्त्रणस्य शेष इत्यन्वयः। अध्ययनविधिनैवार्थज्ञानफलत्वं दर्शयता ज्ञानस्य स्वयमपुरुषार्थत्वात् कैमर्थ्याकाङ्क्षायामनुष्ठानयोग्यपुरुषकरणादनुष्ठानार्थत्वं सूचयता पारार्थ्यं तस्य दर्शितम्। पारार्थ्ये च सिद्धे फलश्रुतेरर्थवादत्वाद्विद्याप्रशंसयानुष्ठानशेषता सिध्यतीति भावः। स्तुत्यर्थतयापि कथमसतोर्मुखशोभा-वाजिमत्त्वयोरुक्तिस्तत्राह—**मुखेति**। गुणाद्वचनं यस्य तत् **गुणवचनं** गौणमित्यर्थः। एतेन गौणस्यैव विद्यार्थस्य प्रशंसार्थत्वेनाभिधानान्नानुपलब्धिविरोध इति सूत्रार्थो दर्शितः। गौणत्वमेवोपपादयति—**गौण** इति। गुणमाह—**शिष्यैरिति**। भृशं शोभमाने हि वस्तुनि पुनः पुनरुद्वीक्षणं भवति, विद्वद्वदनस्य च शिष्यैरुद्वीक्ष्यमाणत्वात् तत्र

---

* गौणग्रहणेन "रूपात् प्रयात्" इति पञ्चम्युपात्तगुणवादनिमित्तत्वमनुकृष्य आकालिकेप्सा गुणवादनिमित्तमित्येवं सूत्रं योजितम्।

**इति पूर्णाहुतिं जुहोतीत्याकाङ्क्षितत्वादस्य विधेः शेषः। "य उ चैनमेवं वेद" इति "तरति मृत्युम्"इत्यस्याकाङ्क्षितत्वाच्छेषः। फलवचनं स्तुतिः, सर्वकामफलस्य निमित्ते सर्वकामावाप्तिवचनं गौणम्। असर्वेषु सर्ववचनमधिकृतापेक्षम्॥ १६॥**

## फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात्॥ १७॥

---

शोभते इति व्यपदेशः इत्यर्थः। सम्प्रति वाजिमत्त्वाभिधानस्य गौणत्वं गुणकथनपूर्वकमाह—**कुलेति**। **कुले** अस्य विदुषो गृहे यत् **सन्ततमध्ययनं** तस्य **श्रवणाद्** अस्य वंशे **मेधावी** पुत्रो जायत इत्यर्थः। यद्वा अस्य कुले वंशे मेधावी जायत इति सम्बन्धः। ततः किम् अत आह—**स इति**। अवाप्नोतीति सम्भावितत्वगुणाद्वाजिमत्त्वं गौणमिति शेषः॥ १५॥

पूर्णाहुत्यादिवाक्येष्वप्यनुपलब्धिविरोधं परिहरति—**सर्वत्वमिति**। आकाङ्क्षितत्वाच्छेष इत्यतः परं "सर्वाँल्लोकान् पशुबन्धयाज्यभिजयति" इति "पशुना यजेत" इत्यस्य विधेः शेष इति पठितव्यम्। वेदेत्यस्य विधेरिति सम्बन्धः। पूर्वसूत्रात् प्रशंसापदमादाय "सर्वत्वम्" इति सूत्रांशं व्याकुर्वन्ननुपलब्धिविरोधं परिहरति—**फलेति**। पूर्णाहुतेरग्निसंस्कारार्थत्वात् पशुबन्धस्य चारादुपकारककर्मत्वात् अश्वमेधज्ञानस्य च पुरुषसंस्कारार्थत्वात् संस्कारकर्मणां च फलश्रुतेरर्थवादत्वात् सर्वकामत्वादिरूपं फलं प्रशंसैवेति नानुपलब्धिविरोध इत्यर्थः। सम्प्रति सर्वकामावाप्तिवचसः सालम्बनत्वं दर्शयन् सर्वत्वपदावृत्त्या सूत्रवाक्यं योजयति—**सर्वकामेति**। सर्वे कामाः फलं यस्य कर्मणस्तन्निमित्ते संस्कृताग्नौ विषये सर्वकामावाप्तिवचनं निमित्ते नैमित्तिकत्वोपचाराद् गौणमित्यर्थः। **सर्वत्वं** सर्वकामत्वम् **आधिकारिकं** फलसम्बन्ध्येव तन्निमित्तेऽग्नावुपचरितम् इति वदता सूत्रकारेणोक्त[म्] इत्यर्थः। पशुबन्धवाक्येऽपि "एकस्मै वा अन्ये यज्ञक्रतवः कामायाद्रियन्ते, सर्वस्मै ज्योतिष्टोमः" इत्यधिकृतस्य ज्योतिष्टोमस्य सर्वकामसाधनत्वात् तदङ्गभूतस्य पशुबन्धस्य तद्द्वारा सर्वलोकसाधनत्वं स्तुत्यर्थमुपचारादुक्तमिति सूत्रं योज्यम्।

मृत्युतरणोदाहरणे तु पूर्वसूत्रगतविद्यापदानुषङ्गेण विद्याप्याधिकारिकीति विपरिणामं कृत्वा अश्वमेधफलमपि मृत्युतरणादितदुपकारिण्यां विद्यायामश्वमेधस्तुत्यर्थमुपचारेणोक्तमिति योज्यमित्याशयः।

**अन्वारुह्य वचनमिदं यद्यपि विधिस्तथाप्यर्थवत्ता परिमाणतः सारतो वा फलविशेषात ॥ १७ ॥**

**अन्त्ययोर्यथोक्तम् ॥ १८ ॥**

**अभागिप्रतिषेधात् इत्यादावुदाहृतम्—"न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि" इति। "हिरण्यं निधाय चेतव्यम्" इत्याकाङ्क्षित-त्वादस्य विधेः शेषः। पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्था। असति**

---

नन्वग्न्यादिद्वारेणापि न सर्वकामनिमित्तत्वमित्याशङ्क्यान्यथा सूत्रं योजयति—**असर्वेष्विति**। यथा लोके सर्वमन्नं भुक्तम् इत्यादौ सर्वशब्दः प्रकृतापेक्षः, तथात्रापि प्रकृताग्निसाध्यफलग्राही भविष्यतीत्यर्थः ॥ १६ ॥

एवमर्थवादत्वेनानुपलब्धिविरोधं परिहरतान्यानर्थक्यदोषो निराकृतः, अधुना फलविधित्वमभ्युपगम्यापि निराकरोति—**फलस्येति**। सूत्रतात्पर्यमाह—**अन्वारुह्येति**। अभ्युपगम्य वादं विवृणोति—**यद्यपीति**। यद्यपि पूर्णाहुत्यादिवाक्ये फलविधिः क्रियते, तथापि नाग्निहोत्रादीनामानर्थक्यं किन्त्वर्थवत्त्वैव। तत्र हेतुः—**परिमाणत** इति। फलविशेषः स्यादिति सम्बन्धः। यत इति शेषः। लौकिकचन्दनकर्पूर-कस्तूरिकाग्न्यादिजनितसुखेषु विशेषदर्शनेन वैदिककर्मजनितेषु सुखेष्वपि विशेषानुमानात् कर्मपरिमाणतारतम्यानुसारेण फलतारतम्यसम्भवात् पूर्णाहुत्या स्तोकस्तोकफलावाप्तावपि न महतां कर्मणामानर्थक्यमित्यर्थः। तदनेनैवं सूत्रं योजितम्। **फलस्य कर्मभ्यो निष्पत्तेः** श्रुतत्वात् **तेषां** कर्मणां **परिमाणतः फलविशेषः** फले विशेषः **परिमाण-विशेषः** स्यात्, **लोकवदिति**।

ननु दक्षिणादौ परिमाणसाम्येऽपि सारासारद्रव्यकृतफलवैषम्येण भवितव्यम्, अन्यथा सारद्रव्यदाने प्रवृत्त्यनुपपत्तेरित्याशङ्क्य परिमाणग्रहणस्योपलक्षणार्थत्वं मत्वाह—**सारतो वेति** ॥ १६ ॥

एवं पूर्णाहुत्यादिवाक्यस्य स्वार्थसत्यत्वादिनान्यानर्थक्यप्रसङ्गं परिहृत्याधुना "न पृथिव्याम्" इत्यादौ नाभागिप्रतिषेधप्रसङ्गः, नापि "बबरः प्रावाहणिः" इत्यादावनित्यसंयोग-प्रसङ्ग इत्याह—**अन्त्ययोरिति**। अभागिप्रतिषेधनिरासार्थं सूत्रं योजयति—**अभागीति**। निन्दायाः कथं विधिशेषत्वमित्याशङ्क्य **यथोक्तमिति** पदं व्याकुर्वन् स्तेयानृतवादन्याय-मतिदिशति—**पृथिव्यादीति**।

ननु शुद्धपृथिवीचयननिषेधस्य हिरण्यनिधानस्तुत्यर्थत्वेऽपि "नान्तरिक्षे" इत्यादेः कथं

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रविः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| December, 1932. | १८५४ शकीये अग्रहायणे १५श-वर्षस्य ८म-संख्या | Vol. XV, No. 8. |


## वङ्गेषु वेदचर्चा

[ निबन्धकः—श्रीदुर्गामोहनभट्टाचार्य्यः काव्यसांख्यपुराणतीर्थ एम्-ए ]

वङ्गीयविद्यार्थिनां वेदचर्चायां शैथिल्यं समवलोक्य केनचन पण्डितप्रकाण्डेन 'मित्रगोष्ठ्यां' विलिखितम्—न खलु वङ्गानां जलवाय्वादिकं वेदचर्चाया आनुकूलिकम् इति। तेन ह्यैदानीन्तनीमिव समवस्थां सन्दृश्यैवं परिदेवितम्। परं प्राचीनेऽपि काले वङ्गीयानां मनीषा सम्यक्तया वेदानामनुशीलने विनियुक्ता वा न वेत्यद्यापि नैव निर्णीतम्। वङ्गीयानां विशिष्टप्रतिभाया निदर्शनत्वेन यानि पुस्तकानि समधिगतान्यस्माभिस्तेषु वैदिकग्रन्थानां संख्याऽल्पीयस्येव। गुणविष्णु-हलायुध-रामनाथ-रामकृष्णप्रभृतयः कतिचन वङ्गीया मनीषिणो गृह्यकर्मसु विनियुक्तानां वैदिकमन्त्राणां भाष्याणि विरचयाम्बभूवुः। एषां भाष्यकृतां ग्रन्थेषु वेदज्ञानस्य यः परिचय उपलभ्यते, प्राचीनेषु पुस्तकेषु शिलालिपिताम्रशासनादिलेखसमूहेषु च वङ्गमण्डले वेदचर्चाया यानि निदर्शनानि परिलक्ष्यन्ते प्रबन्धेऽस्मिन्

तत्सर्वमालोचयिष्यते, तथा वङ्गीया विपश्चितः प्राचीने समये वेदविद्यायां कीदृशं नैपुण्यं प्रकटयामासुस्तदपि निर्णेष्यते ।

वङ्गेषु वेदाचारस्य प्रथमप्रवृत्तिः

तेषां तेषां वैदिकग्रन्थानामाभ्यन्तरीणप्रमाणपरम्परात एतदेव स्थिरतया सिद्धान्त्यते पुरावृत्तविमर्शकैर्यद् वेदोक्तधर्मसमुदाचारादिकं पञ्चनदीयानां तत्-सन्निहितदेशीयानां च गन्धारकेकयमद्राणां मध्ये तथा मध्यदेशवासिनां कुरूणां पञ्चालानां च मध्ये प्रथमं प्रसारमुपलेभे, ततश्च वेदमार्गावलम्बिन आर्याः शनैः शनैः पश्चिमाया दिशः पूर्वाभिमुखमुपसृत्य नवनवेषु स्वाधिकृतेषु प्रदेशेषु वेदोक्तं धर्मं प्रतिष्ठापयामासुरिति (१)। अस्माच्चैतदेवायाति यद् अङ्गवङ्ग-मगधादिषु प्राच्यदेशेष्ववीचीन एव काले वैदिकाचारः प्रवृत्त इति ।

आथर्वणे वेदे केनचन ऋषिणा प्रोक्तम्—ज्वररोगमङ्गेषु मगधेषु च प्रेरयामीति ।

गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः ।
प्रैष्यन् जनमिव शेवधिं तक्मानं परिदद्मसि ॥
( अथर्वसं ५।२२।१४ )

उक्तिरियमेतदेव प्रमापयति यदङ्गा मगधाश्च विधर्मणामधिकारेऽवस्थिता इत्येव मध्यदेशोद्भवस्य ऋषेस्तेषु विद्वेषः स्फुटतामुपगतः। वङ्गाश्चाङ्गेभ्यो मगधेभ्यश्च सुतरां प्राच्यास्तेन तद्देशवितय-

१। अत्राधोनिर्दिष्टाः प्रबन्धा द्रष्टव्याः—

Keith, *Cambridge History of India*, Vol. I, pp. 79-81 ; Hopkins, *Journal of the American Oriental Society*, Vol. XIX, pp. 19-24 ; Pischel and Geldner, *Vedische Studien* ,Vol. II, p. 218 , Vol. III, p. 152 ; Macdonell and Keith, *Vedic Index*, Vol. I, p. 468 ; Suniti Kumar Chatterji, *Origin and Developement of the Bengali Language*, p. 43.

मनतिक्रम्य न खलु वैदिको धर्मो वङ्गेषु प्रवेशमासादयितुं प्रबभूवेति सिध्यति (२)।

शतपथब्राह्मणे वर्ण्यते—विदेघो माथवो वैदिकविद्याया मूलभूमिः सरस्वतीतटात् प्रस्थाय सदानीरायाः पारे विदेहान् (इदानीन्तनविहार-देशस्योत्तरभागम्) आजगाम (३)। इदमेवाख्यानं वैदिकानामार्याणां प्राच्यदेशाधिकारसूचकत्वेन परिगण्यत इतिहासविद्भिः। ऐतरेयारण्यके च वङ्गवगधचेरपादानां वेदधर्मोल्लङ्घकत्वेनैव वर्णनमुपलभ्यते (४)। बौधायनधर्मसूत्रेऽपि कतिपयनिषिद्धदेशानां नामोल्लेखावसरे पुण्ड्रदेशस्य वङ्गदेशस्य च नामनी उपलभ्येते। उत्तरवङ्गानां भागविशेषस्य प्राचीनमभिधानं पुण्ड्र इति, साम्प्रतिकपूर्ववङ्गा एव च प्राचीना वङ्गभूमिः। एषु देशेषु कृतपदानां ब्राह्मणानां प्रायश्चित्तं विहितं बौधायनेन (५)। धर्मसूत्रकारोऽयं खिस्तजन्मनः पूर्वं चतुर्थे शतके प्रादुर्भूत इति प्रत्नतत्त्व-विशारदाः। तस्मिन्नपि काले वङ्गभूमिर्वेदा-चारबहिर्भूतदेशतया परिगणित आसीदिति वक्तुं शक्यते। आदि-

---

२। प्राचीनतमादेव कालादारभ्य भारतस्य पूर्वभागेऽपि वेदानुयायिब्राह्मणानामाधिपत्यं प्रतिष्ठितम् इत्यपि केचन मन्यन्ते। यथाच Modern Review-पत्रे श्रीहाराणचन्द्रचाक्‌लादार-महोदयेनोक्तम्—"अथर्ववेदविरचनकाले हि····· पूर्वभारताधिकारो नूनं सम्पूर्णतामधिगत" इति।

३। तर्हि विदेघो माथव आस। सरस्वत्यां स तत एव प्राङ् दहन्नभीयायेमां पृथिवीम्। तं गोतमश्च राहूगणो विदेघश्च माथवः पश्चाद्दहन्तमन्वीयतुः। स इमाः सर्वा नदीरतिददाह। सदानीरेत्युत्तराद् गिरेर्निर्घावति। तां हैव नातिददाह। तां ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति—(शतपथब्राह्मणम् १।४।१।१४)।

४। प्रजा ह तिस्रो अत्यायमीयुरिति। या वै ता इमाः प्रजास्तिस्रो अत्यायमीयुस्तानीमानि वयांसि वङ्गा वगधाश्चेरपादाः—(ऐतरेयारण्यकम् २।१।१।५)। सायणाचार्यैस्तु वङ्ग-वगध-चेरपाद-शब्दा अन्यथैव व्याख्याताः।

५। आरट्टान् कारस्करान् पुण्ड्रान् सौवीरान् वङ्गान् कलिङ्गान् प्रानूनामिति च गत्वा पुनस्तोमेन यजेत सर्वपृष्ठया वा—(बौधायनधर्मसूत्रम् १।१।३०)।

पुराणेऽपि तीर्थयात्रामन्तरेण वङ्गेषु प्रवेशो निषिद्धः। तथाच वीरमित्रोदये संस्कारप्रकाशे ( पृः ५४६ )आदिपुराणवचनम् -

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च।
विना यात्रां तु यो गच्छेत् पुनः संस्कारमर्हति॥

उदाहृतपूर्वेषु श्रौतस्मार्तग्रन्थेषु वङ्गानां साधिक्षेपसमुल्लेखादनुमीयते यद् देशोऽसौ पुरा वैदिकाचारास्वीकरणादेव वैदिकाचाराणां विहार-भवनस्य मध्यदेशस्य वर्जनीय आसीदिति। महाभारत-वायुपुराण-मत्स्यपुराणादिषूपवर्णितं यद् राज्ञो बलेः पञ्चानां पुत्राणां नामत एव अङ्ग-वङ्ग-पुण्ड्र-सुह्म-कलिङ्गानां नामानि सञ्जातानीति (६)। वङ्गेषु चासुरप्रभावस्य विविधानि निदर्शनानि विलसन्ति। दिनाजपुरप्रदेशस्य देवीकोटेत्यपराभिधानो बाणगड एवासुरराजस्य राजधान्यासीदित्यनु-मिमत ऐतिहासिकाः (७)। कदाचिदेतेषामसुराणां प्रत्यवस्थितिरेव प्राचीने काले वङ्गेषु ब्राह्मण्यधर्मस्य रूढमूलत्वाभावे बीजं स्यात्। खिस्तजन्मतो बहुशतकेभ्यः पूर्वमपि सुह्मेषु पुण्ड्रेषु च ( पश्चिमवङ्गेषु उत्तरवङ्गेषु च ) जैनधर्मः साटोपं प्रससारेत्यपि तेभ्यस्तेभ्यो जैन-ग्रन्थेभ्यः स्फुटीभवति (८)। सरित्स्रोतःप्रसारं प्रसरन्नयं जैनधर्मोऽ-नन्तरे च मगधराज्येऽभ्युदयमुपगतो बौद्धधर्मः—वेदविरोधि धर्मद्वितय-मिदं निःसंशयमेव वङ्गेषु वेदाचारप्रवर्तनस्य प्रातिकूल्यमाचचार। गच्छता च कालेन मन्दभावमुपगतेऽप्यवैदिकधर्माधिकारे न खलु तत्प्रभावः सर्वथा विलुप्तो वङ्गेभ्यः। अतएव तत ऊर्ध्वमपि चिरं देशेऽस्मिन् नालमासीद्वेदविद्याऽऽत्मानं प्रतिष्ठापयितुमिति सुशकमिद-मनुमातुम्।

---

६। महाभारतम्, आदिपर्व १०४ अः। वायुपुराणम् ९९अः। मत्स्यपुराणम् ४८अः।

७। D. R. Bhandarkar, *Annals of the Bhandarkar Oriental Research Institute*, Vol. XII, p. 113.

८। आचाराङ्गसूत्र पृः ४४, कल्पसूत्र पृः ७९, जैन-हरिवंशपर्व ६१, ६२।

रामायणे महाभारते विष्णु-वायु-मत्स्यपुराणेषु च पुण्ड्र-सुह्म-ताम्र-लिप्त-वङ्गानामुल्लेखो दृश्यते (९)। पुराणेष्वमीषु यस्तावद्भारतवर्षस्य सीमानिर्देश उपलभ्यते तेनैतदेव प्रतीयते यत् किरातदेशं (त्रिपुराप्रदेशस्य पश्चिमभागं) यावत् समग्रा वङ्गभूमिर्वेदानुगामिनि भारते वर्षेऽन्तर्भवतीति तन्मतमिति। भारतवर्षस्य प्रदेशान्तरेष्विव पुण्ड्रेषु (उत्तरवङ्गेषु) तथा कामरूपेषु मुनयस्तपस्यामासुर्याज्ञिकाश्च जुहवामासुरिति विष्णुपुराणवचनाद् विज्ञायते (१०)। महाभारते च कर्णपर्वणि विस्पष्टमुक्तम्—पौण्ड्राः कलिङ्गा मगधाश्च शाश्वत-धर्माभिज्ञा एवासन्निति (११)। अध्यापकस्य श्रीमतो देवदत्त-रामकृष्णभाण्डारकरमहोदयस्य मतेन खिस्तीये तृतीयशतके सम-श्रायां भारतभूमौ वेदबोधितो धर्मो दृढतरं पदं लेभ इति (१२)।

"अजादेर्द्वितीयस्य" (पा ६।१।२) इति पाणिनीयसूत्रस्य "लोक-वङ्गलादिशेषे" इति नवमवार्त्तिकं व्याचक्षाणेन महर्षिप्रवरेण पतञ्जलिनोक्तम्—"लोक ईश्वर आज्ञापयति ग्रामाद् ग्रामान्मनुष्या

---

९। रामायणम्, अयोध्या १०; महाभारतम्, आदि ११३, ५३—५५; भीष्म ९, ४६। वायुपुराणम् ४५ अः; मत्स्यपुराणम् ११४ अः; विष्णुपुराणम् २अंशः, ३अः।

१०। पूर्वदेशादिकाश्चैव कामरूपनिवासिनः।
पुण्ड्राः कलिङ्गा मगधा दाक्षिणात्याश्च सर्वशः।
* * *
तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्विनः॥
(विष्णुपुराणम् २।३।१५, २०)

११। कुरवः सहपाञ्चालाः साल्वा मात्स्याः सनैमिशाः।
कोशलाः काशपौण्ड्राश्च कालिङ्गा मागधास्तथा॥
चेदयश्च महाभागा धर्मं जानन्ति शाश्वतम्।
महाभारतम्, कर्ण ४५।१४,१५।

१२। *Annals of the Bhandarkar Oriental Research Institute,* Vol. XII, p. 11.

आनीयन्तां प्रागङ्ग' ग्रामेभ्यो ब्राह्मणा आनीयन्ताम्" इति। उक्तिश्चैषा-ऽनुमापयति—पूर्वप्रदेशे वेदज्ञानां ब्राह्मणानामभावमाकलय्य शुङ्ग-वंशसमुद्भवो ब्राह्मणनृपतिः पुष्यमित्रो दूरतरेभ्यः प्रदेशेभ्यो ब्राह्मणा-नानाययामासेति। तदेव वृत्तं तत्समकालवर्तिना पतञ्जलिना स्वप्रबन्ध उपनिबद्धम्।

वङ्गेषु प्रचलितेभ्यस्तेभ्यस्तेभ्यः कुलपञ्जिकाग्रन्थेभ्योऽपि विज्ञायते गौडाधिपस्यादिशूरस्य सभायां वेदज्ञब्राह्मणानामभाव एवासीदिति। अत एव तेन कान्यकुब्जप्रदेशात् पञ्च वेदविशारदाः साग्निका ब्राह्मणा आनीताः। ६५४ शाके ( ७३२ खिस्ताब्दे ) [राढ़ीयकुलमञ्जरीमतेन ६६८ शाके ( ७४६ खिस्ताब्दे ) ] ब्राह्मणा इमे गौड़देशमाजग्मुः। इम एव ब्राह्मणा वङ्गेषु राढीयानां वारेन्द्राणां च ब्राह्मणानामादि-पुरुषाः। श्रीमतो नगेन्द्रनाथवसुप्राच्यविद्यामहार्णवस्य "वङ्गेर जातीय इतिहास"-ग्रन्थस्य राजन्यकाण्डे विभिन्नानां कुलग्रन्थानां विवरणान्युद्धृतानि।

पाश्चात्यवैदिकश्रेणीयब्राह्मणानां कुलपञ्जिकासु विवृतमस्ति—गौड़ाधिपस्य श्यामलवर्मणः शाकुनसत्रसम्पादनाय कान्यकुब्जनिवासिनो यशोधरमिश्रप्रभृतयो वेदविद्यानिष्णाताः पञ्च ब्राह्मणा वङ्गानुपा-गच्छन्निति। भूयसामेव कुलग्रन्थानां मतेन १००१ शकाब्दे ( १०७९ खिस्ताब्दे ) एव यशोधरस्यागमनं संवृत्तम् (१३)। श्यामलवर्मणो राज्यशासनकाले समागतानाममीषां वेदविदुषां ब्राह्मणानां वंश्या अद्यापि "पाश्चात्यवैदिकाः" इति परिचिताः।

यद्यपि कुलग्रन्थानां वर्णनेषु कुत्रचिदसामञ्जस्यं परिलक्ष्यते तथापि वृत्तान्तस्यैतस्य याथार्थ्ये न खलु लेशतोऽपि संशयावकाशः (१४)।

---

१३। श्रीनगेन्द्रनाथवसुमहोदयस्य वङ्गेर जातीय इतिहास, ब्राह्मणकाण्डम्, तृतीयांशः, पृः ११९।

१४। राखालदासवन्द्योपाध्यायमहोदयस्य 'वाङ्गालार इतिहास,' प्रथमो भागः, २४४ पृः।

वङ्गेष्वेकाधिकवारान् ब्राह्मणाः प्रदेशान्तरेभ्यः समानीताः इति वृत्तमिदं सत्यमिति प्रतिभाति। तेन च देशेऽस्मिन् वेदबोधितो धर्मो रूढमूलः सञ्जातः, तद्विरोधी च विलोपमधिगतो रूपान्तरं वाऽऽस्थाय वैदिक एव धर्मेऽन्तर्भूतः। परं कुलपुस्तके वर्णिताद् ब्राह्मणागमनात् पूर्वं वङ्गेषु वेदज्ञा ब्राह्मणाः शशविषाणायमाना एवासन्नित्यनुमानं कथमपि न सङ्गच्छते। एतदेवास्माभिः प्राचीनताम्रशासनालोचनयोपरिष्टात् प्रतिपादयिष्यते।

प्राचीने हि काले वेदविरुद्धसमुदाचारस्वीकरणात् श्रुतिस्मृतिपुराणेषु वङ्गीयाः सुतरां विनिन्दिता इति प्रोक्तपूर्वमेवाऽस्माभिः। अर्वाचीनेष्वपि ग्रन्थेषु वङ्गाभिजना विद्वांसो वेदचर्चायां शैथिल्याद्दुर्णोऽधिक्षिप्ताः। कुसुमाञ्जलिप्रणेत्रोदयनाचार्येण कश्चन गौडमीमांसकः सावज्ञं समुल्लिखितः। ख्रिस्तीये दशमे शतके वरदराजमिश्रः स्वीयकुसुमाञ्जलिबोधिन्यां गौडमीमांसकमिमं पञ्चिकाकारत्वेन निर्दिश्य निखिलानामेव गौड़ानां वेदतत्त्वानवबोधमभिप्रैति स्म (१५)। प्रकरणपञ्चिकाख्यस्य प्रथिततमस्य मीमांसाग्रन्थस्य विरचयिता शालिकनाथः ख्रिस्तीयनवमशतकस्य प्रारम्भ एव वर्तमान आसीत्। इयं चेत्तिरस्कृतिवाचोयुक्तिस्तमेवाभिलक्ष्य प्रयुक्ता तर्हि सर्वथा विद्वेषमूलैवैषेत्यवश्यमभ्युपगन्तव्यम्। ख्रिस्तीये नवमे दशमे वा शतके गौडनिवासिनः सर्व एवानाघ्रातवेदगन्धा आसन्निति वचनं साहसमात्रमेवेत्युपरिष्टात् स्फुटीकरिष्यते। यथा सत्यपि काव्येषु गौडीयरीतेरुपयोगित्वे काव्यादर्शादिष्वलङ्कारग्रन्थेषु रीतेरस्याः केवलामेव निन्दामुपलभ्य प्रदेशविशेषपक्षपातमूलिकामवधारयन्ति तां विचारपरतन्त्राः, वरदराजस्य ग्रन्थे गौडीयानां वेदज्ञानस्याक्षेपोऽपि तथैव

---

१५। गौडो मीमांसकः पञ्चिकाकारः। गौड़ो हि वेदाध्ययनाभावाद् वेदत्वं न जानातीति गौडमीमांसक इत्युक्तम्।—कुसुमाञ्जलिबोधिनी, पृ: १२३।

कल्पनीयः (१६)। किञ्चात्यं गौडपदं कदाचिद् वङ्गव्यतिरिक्तानितरानपि देशानवबोधयेद् यतो गौड़शब्दस्य मुख्यतो वङ्गदेशप्रतिपादकत्वेऽपि विन्ध्योत्तरवर्त्तिनश्चत्वारो देशा गौडपदप्रतिपाद्या आसन् (१७)। यथा तथा वा भवतु शालिकनाथस्य प्रादुर्भावसमये गौडेषु कथमपि वेदविदुषां विपश्चितामसद्भावो नासीदित्यत्र भूयांसि प्रमाणान्युपलभ्यन्ते।

ताम्रशासनेषु शिलालिपिषु प्राचीनपुस्तकेषु च वङ्गीयानां यज्ञानुष्ठानस्य वेदचर्चायाश्च समुल्लेखः

दिनाजपुरप्रदेशान्तर्गते दामोदरपुरग्रामे समुपलब्धस्य ताम्रशासनपञ्चकस्योक्तितो विस्पष्टं प्रतीयते ख्रिस्तीयपञ्चमषष्ठशतकयोर्गुप्तनरपतीनां शासनसमये वङ्गेषु ब्राह्मणा यज्ञाननुतिष्ठन्ति स्मेति (१८)। एको ब्राह्मणोऽग्निहोत्रसम्पादनार्थमपरश्च पञ्चमहायज्ञानुष्ठानार्थं पुण्ड्रवर्धनभुक्त्यन्तर्गतस्य कोटिवर्षविषयस्य शासनकर्त्तुः सकाशाद् भूमिमक्रीणात् (१९)।

फरिदपुरप्रदेशे समधिगतात् ताम्रशासनत्रितयादप्यवगम्यते ख्रिस्तीये षष्ठशतके धर्मादित्य-गोपचन्द्रयो राज्यकाले वङ्गेषु 'वारक-

---

१६। Sivaprasad Bhattacharya, Gaudi Riti in Theory and Practice, *Indian Historical Quarterly*, Vol. III, pp. 376-394.

१७। सारस्वताः कान्यकुब्जा गौड़ा मैथिलिकोत्कलाः।
पञ्च गौडा इति ख्याता विन्ध्यस्योत्तरवासिनः॥ स्कन्दपुराणम्।

राजतरङ्गिण्यामपि (४।४६७) पञ्चगौड़ानां समुल्लेखो दृश्यते। गौड़देशस्य सीमानिर्देशो यथा—

वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे।
गौडदेशः समाख्यातः सर्वविद्याविशारदः॥

शब्दकल्पद्रुमधृतं शक्तिसङ्गमतन्त्रवचनम्।

१८। R. G. Basak, Damodarpur Copper-plate Inscriptions.—*Epigraphia Indica*, Vol. XV, p. 129.

१९। तत्रैव पृः १३०, १३३।

मण्डले' ब्राह्मण्यधर्मो वेदाध्ययनञ्च प्रचलिते इति। प्रथमशासनस्य ग्रहीता भरद्वाजगोत्रजश्चन्द्रस्वामी यजुर्वेदान्तर्गत-वाजसनेयशाखा-वलम्बी षडङ्गाध्यायी ब्राह्मण आसीत् (२०)। द्वितीयतृतीयशासनयोरपि ग्रहीतारावुभावपि काण्ववाजसनेयशाखानुगामिनावास्ताम् (२१)।

सप्तमशतकस्य मध्यभागेऽभिलिखितात् त्रिपुराताम्रशासनाज्ज्ञायते, प्रदोषशर्माभिधानो ब्राह्मणो वेदचतुष्टयनिष्णातानां (चातुर्विद्यानां) परःशतानां ब्राह्मणानां वासार्थं राजानं लोकनाथं भूमिं ययाचे (२२)। प्रदोषशर्मणो मातामहो बुधस्वामी चाहिताग्निरासीत् (२३)।

एषां ताम्रशासनानां विवरणेभ्यो विस्पष्टमेव प्रतीयते कुलपुस्तकेषु वर्णिताद् ब्राह्मणागमनात् पूर्वमपि वङ्गेषु वेदज्ञा ब्राह्मणा न्यवसन्निति।

नेपालप्रदेशस्थराजकीयपुस्तकशालायां चतुर्भुजविरचितस्य हरि-चरितकाव्यस्यैकं हस्तलिखितं पुस्तकं वर्तते। ग्रन्थस्यास्य पुष्पि-कायां चतुर्भुजेनोक्तम्—तत्पूर्वजेन स्वर्णरेखेण गौडेश्वरस्य धर्मपालस्य सकाशाद् वरेन्द्रप्रदेशान्तर्गतः करञ्जनामको ग्रामो लब्धः। ग्रामे चास्मिन् श्रुति-स्मृति-पुराण-व्याकरण-काव्यशास्त्रपारङ्गमा ब्राह्मणा अवसन् (२४)। स्वर्णरेखस्य पौत्र आचार्यो दिवाकर'स्त्रयीपर'

---

२०। Grant of the Time of Dharmaditya, l. 19.—*Indian Antiquary*, 1910, p. 196।

२१। Second Grant of the Time of Dharmaditya ll. 10, 11; Grant of the Time of Gopachandra l. 13.— *Indian Antiquary*, 1910, pp. 200, 204.

२२। Tipparah Copper-plate Grant of Lokanatha, l. 24.—*Epigraphia Indica*, vol. XV, p. 307.

२३। तत्रैव १८शपङ्क्तिः।

२४। ग्रामीत्तमोऽस्त्यमलमञ्जुगुणैकपुञ्जः श्रीमान् करञ्ज इति वन्द्यतमो वरेन्द्र्याम्।
यत्र श्रुतिस्मृतिपुराणपदप्रवीणाः सच्छास्त्रकाव्यनिपुणाः स्म वसन्ति विप्राः॥
कीर्णः प्रजापतिगुणैः परिपूर्णकामः श्रीस्वर्णरेख इति विप्रवरोऽवतीर्णः।
तं ग्राममग्रगणनीयगुणं समग्रं जग्राह शासनवरं नृपधर्मपालात्॥

—*Catalogue of Palm-leaf and Selected Paper Manuscripts belong-*

आसीत् (२५)। अतः पालवंशसम्भूतस्य धर्मपालस्य राजत्वकाले वरेन्द्रभूमौ श्रुतिविदां ब्राह्मणानां वसतिरासीदिति सिद्धम्।

दिनाजपुर आविष्कृताया भट्टगुरवमिश्रस्य गरुडस्तम्भ-शिलालिपितो विज्ञायते खिस्तीयनवमशतके पालराज-देवपालस्य मन्त्री दर्भपाणिः "विद्याचतुष्टयमुखाम्बुरुहात्तलक्ष्मा" आसीत् (२६)। तस्य च पौत्रः केदारमिश्रो बाल्य एव सकृद्दर्शनसम्पीतांश्चतुर्विद्या-पयोनिधीनुज्जगार (२७)। वचनेनानेन दर्भपाणि-केदारमिश्रयोर्वेद-मन्त्रकण्ठे करणशक्तिः कटाक्षितेति प्रतीयते। बृहस्पतिप्रतिकृतेरस्य केदारमिश्रस्य यज्ञवाटमुपस्थाय महाराजेन शूरपालेनासकृच्छान्तिवारि शिरसा प्रतिगृहीतम्। एतदेव प्रमापयति यत् शूरपालदेवस्य शासनकालेऽपि वङ्गेषु यज्ञा अन्वष्ठीयन्तेति। केदारमिश्रस्य तनयो भट्टगुरवमिश्रो वेदार्थचिन्तापरायण आसीत्, स्वयञ्च श्रुतिं व्याचख्यौ। शिलास्तम्भ-लिपेरस्या एतदेवागतं यत् खिस्तीयनवमदशमशतकयोः पालनृपतिषु वङ्गान् शासत्सु गुरवमिश्रस्य पूर्वपुरुषा वंशानुक्रमेण वेदविद्यायां प्रावीण्यमधिगताः स्वयं च गुरवमिश्रो वेदं व्याख्यातवानिति (२८)।

भागलपुरे समधिगते नारायणपालस्य ताम्रशासनेऽपि गुरव-

---

*ing to the Durbar Library, Nepal* ( Vol. 1 ) by Mm. Haraprasad Sastri, p. 134.

२५। तत्रैव पृः १३५।

वयोपरः काश्यपगोत्रभास्करस्तत्पुत्त आचार्यवरो दिवाकरः॥

२६। अक्षयकुमारमैत्रेयः, गौडलेखमाला पृः ७२।

२७। सकृद्दर्शनसम्पीतांश्चतुर्विद्यापयोनिधीन्।

जह्रासागस्त्यसम्पत्तिमुद्गिरन् बाल एव सः॥

गौडलेखमाला पृः ७५।

२८। तत्रैव पृः ८३।८४।

मिश्रोऽयं "महादक्षिणानां यज्ञानां प्रणेता" "अङ्गैः सार्धं श्रुतिष्वधीती" इति च समुपवर्णितः। तथाच गौडलेखमाला ( पृः ६२ )—

य: सर्वासु श्रुतिषु परमः सार्धमङ्गैरधीती
यो यज्ञानां समुदितमहादक्षिणानां प्रणेता॥

इति।

देवपालदेवस्यैव समये प्रादुर्भूतेन नारायणेन विरचितश्छन्दोग-परिशिष्टप्रकाशाख्यो ग्रन्थ उपलब्धस्तस्य च प्रथमांश एशियाटिक सोसाइटीतः प्रकाशितः। ग्रन्थोऽयं कात्यायनकृतस्य छन्दोग-परिशिष्टस्य टीकारूपः। यद्यपि टीकेयं स्मृतिशास्त्रमधिकृत्य प्रवृत्ता तथाप्यत्र रचयितुर्वेदज्ञानस्य प्रकृष्टः परिचय उपलभ्यते। नारायणस्य पूर्वजा अपि वेदविद आसन्। तेन तावट्टीकायाः प्रारम्भे पूर्वपुरुषाणां परिचय उपनिबद्धः। ते ह्युत्तरराढप्रदेशे निवसन्ति स्म। तेषु च परितोषः 'सोमपीथी' 'छन्दसां देहबन्ध' आसीत्। तस्य च धर्माख्य-स्तनयो वैदिकानुष्ठानेषु व्युत्पन्न आसीत्। उक्तं हि नारायणेन—

चरितमहति येषामन्वये सोमपीथी
समजनि परितोषश्छन्दसां देहबन्धः।
अलभत स हि विप्राच्छासनं तालवाटीं
तदिह भजति पूजामुत्तमा येन राढा॥

( छन्दोगपरिशिष्टप्रकाशः श्लो ३, पृः २ )

श्रौते विधौ सततनिर्मलधीप्रसारः ( श्लो ५, पृः २ )

खिस्तीये नवमे शतक उत्तरराढेषु सोमयागस्यानुष्ठानं वेदविद्या-निपुणानां विप्राणां च सद्भावो विस्पष्टमनेन प्रतीयेते।

खिस्तीयदशमशतके महीपालदेवस्य बाणगडलिप्यां निर्दिष्टेन चवटिग्रामनिवासिना कृष्णादित्येन यजुर्वेदस्य वाजसनेयशाखा सम्य-गधीता (२८)। तदुत्तरवर्तिनि च शतके तृतीयविग्रहपालस्यामगाछि-

२८। बाणगडलिपिः पङ्क्ती ४७,४८।—गौडलेखमाला पृः ९७।

शासनस्य ग्रहीता छत्राग्रामनिवासी खोदुल्लदेवशर्मा, मदनपालस्य ताम्रशासनोक्तश्चम्पाहिटिनिवासी वटेश्वरस्वामिशर्मा च सामवेदीय-कौथुमशाखाध्यायिनावास्ताम् (३०)।

८३६ खिस्तीयाब्दे प्रदत्ते साङ्गलिताम्रशासने वर्णितं यद् राष्ट्र-कूटवंशीयेन चतुर्थगोविन्देन केशवदीक्षिताख्याय ब्राह्मणाय ग्राम एको दत्तः। पुण्ड्रवर्धननगरादागतेन केशवपित्रा यजुर्वेदस्य वाजसनेय-शाखाऽधीता (३१)। अत एतदेव प्रतीयते यत् खिस्तीयनवमशतके उत्तरवङ्गाभिजनोऽयं वेदाध्यायी ब्राह्मणो देशान्तरं गत्वा वसतिं चक्र इति।

खिस्तीये द्वादशशतके कामरूपाधीशेन वैद्यदेवेन वरेन्द्र-वासिने सोमनाथाय भूमिर्दत्ता। एतद्गतताम्रशासने च विलिखितम्—

तीर्थेषु भ्रमणाच्छ्रुताध्ययनतो दानात्तथाध्यापनाद्
यज्ञानां करणाद् व्रतैकचरणात् सर्वोत्तरः श्रोत्रियः।
श्रौतस्मार्त्तरहस्येषु वागीश इव विश्रुतः।

( गौडलेखमाला पृः १३४ )

अत्र हि वेदाध्ययन-यज्ञानुष्ठानादिना सोमनाथस्य श्रोत्रियेषूत्तमत्वं प्रतिपाद्यते श्रौतस्मार्त्तविद्यासु च तस्य बृहस्पतिप्रतिमत्वमुपवर्ण्यते।

उद्धृतेभ्यस्ताम्रशासनवचनेभ्यः खिस्तीयपञ्चमशतके तदुत्तरवर्तिनि च काले वङ्गेषु बहूनां वेदविदामवस्थानं संसिध्यति।

खिस्तीयपञ्चमशतकस्यान्ते वा षष्ठशतकस्य प्रारम्भे वा राज्ञो भूतिवर्मणः शासनसमये तदानीन्तनकामरूपान्तर्गते साम्प्रतिकोत्तर-

---

३०। Amgachi Grant of Vigrahapala III, ll. 34—39.—*Epigraphia, Indica*, vol. XV, p. 298.

मनहलिलिपिः, पङ्क्तिः ४३।—गौडलेखमाला पृः १५४।

३१। Sangli Plate of the Rashtrakuta Govinda IV, ll. 46,47.—*Indian Antiquary*, vol. XII, p. 257.

पूर्ववङ्गवर्तिनि कस्मिंश्चिद् ग्रामे बहवो विभिन्नवेदीया ब्राह्मणा न्यूषुरिति भास्करवर्मणस्ताम्रशासनादवगच्छाम: (३२)। एवञ्चेत्, ख्रिस्तीयाष्टमशताब्दीत: पूर्वं वङ्गेषु ब्राह्मणसमाजस्य गगनकुसुमसब्रह्मचारित्वं कथमपि न सङ्गच्छते। शुङ्गनरपते: पुष्यमित्रस्य समयादेव प्राच्येषु देशेषु ब्राह्मण्यधर्मप्रचारणप्रयास: प्रारब्ध इति पूर्वमेव प्रतिपादितम्। अनुमीयते ख्रिस्तीयपञ्चमशतकमध्य एव धर्मोऽयं समग्रे प्राच्यखण्डे प्रसारमलभत, वेदमार्गावलम्बिनश्च ब्राह्मणा वङ्गदेशात् प्राच्यां दिश्याकामरूपं वसतिं विस्तारितवन्त:। त एव भास्करवर्मणस्ताम्रशासने समुल्लिखिता विभिन्नवेदीया ब्राह्मणा:। ताम्रशासनेऽमुष्मिंस्तत्तद्वेदानां तत्तच्छाखावलम्बिनां २०५ ब्राह्मणानां समुल्लेखो दृश्यते। एषु च १०५ ब्राह्मणा वाजसनेयिन:, ७४ बाह्वृच्या:, द्वौ च तैत्तिरीयौ इति वर्णितम् (३३)। ख्रिस्तीयस्य पञ्चमशतकस्यान्ते षष्ठस्य प्रारम्भे वा भास्करवर्मणो वृद्धप्रपितामहेन भूतिवर्मणा ब्राह्मणेभ्य एतेभ्यो भूमिर्दत्ता।

काण्वशाखावलम्बिनाऽध्वर्युणा देवधरभट्टेन यथावद् यागकार्यं सम्पादितमित्युक्तं ख्रिस्तीयदशमशतकीयस्य बलवर्मणस्ताम्रशासने (अध्वर्युणा येन क्रतुं विभज्य वैतानिकं कर्म निराकुलेन—कामरूपशासनावली पृ: ९८)।

प्रायेण शतवर्षोत्तरकालिकस्य रत्नपालस्य ताम्रशासने कथितं यत् त्रयोदशग्रामविषयान्त:पाति-लावुकुटिक्षेत्रवासिनो वाजसनेयदेवदत्तस्याश्रयेण वेदविद्या कृतार्थम्मन्याऽऽसीदिति। देवदत्तस्य पुत्त्र: सद्गङ्गदत्त आहिताग्निरासीदित्यपि तत एव विज्ञायते।

पराशरोऽभूद्भुवि देवदत्त: काण्वोऽग्रजो वाजसनेयकाग्र्य:।
आसाद्य यं वेदविदां परार्ध्यं त्रय्या कृतार्थायितमेव सम्यक्॥

---

३२। श्रीपद्मनाथभट्टाचार्य:, कामरूपशासनावली पृ: ९।

३३। भास्करवर्मणस्ताम्रशासनम्, पङ्क्तय: ५४-१२६।—कामरूपशासनावली पृ: १७-२६।

अग्न्याहितस्तस्य बभूव सूनुः सद्गङ्गदत्तो गुणशीलशाली ।
यं वीक्ष्य षट्कर्मरतं द्विजेशं भृग्वादिषु प्रत्ययितो जनौघः ॥

( कामरूपशासनावली पृः ८८ )

खृस्तीये द्वादशशतके सम्पादिते धर्म्मपालस्य प्रथमताम्रशासने श्रावस्त्याख्यस्य जनपदस्य समुल्लेखो दृश्यते। तत्रत्यकौसञ्जग्रामवास्तव्यानां याज्ञिकानां होमधूमैरन्धीभवत् कलिकल्मषं न तत्र प्रवेशमलभत। सामविदामग्रणी रामदेवो नाम ब्राह्मणस्तत्र न्यवसत्। तथाच कामरूपशासनावल्याम् ( पृः १५५ ) —

ग्रामः कौसञ्जनामास्ति श्रावस्त्यां यत्र यज्वनाम् ।
होमधूमान्धकाराभ्यं नाविशत् कलिकल्मषम् ॥
तत्सम्भवानां प्रवरो द्विजानामुदारधीः कौथुमशाखमुख्यः ।
रामोपमः सामविदामखण्डः शाण्डिल्यगोत्रोऽजनि रामदेवः ॥

बगुडाप्रदेशे प्राप्तायामेकादशशतकीयशिलालिप्यां श्रावस्त्यन्तर्गततर्कारिग्रामो ब्राह्मणप्रधानस्थानत्वेन निर्दिष्टः। ग्रामे चास्मिन् वेदस्मृत्यनुशीलनपरायणैर्द्विजगणैरसकृच्छ्रौतानां गृह्याणां च कर्मणामनुष्ठानं व्यधायि। उक्तं हि तत्र ( ३४ )

तेषामार्यजनाभिपूजितकुलं तर्कारिरित्याख्यया
श्रावस्तिप्रतिबद्धमस्ति विदितं स्थानं पुनर्जन्मनाम् ॥
यस्मिन् वेदस्मृतिपरिचयोद्भिन्नवैतानगार्ह्य-
प्राज्याहूत्ताहुतिषु चरतां कीर्त्तिभिर्व्योम्नि शुभ्रे ।
व्यभ्राजन्तोपरिपरिसरद्धोमधूमा द्विजानां
दुग्धाम्भोधिप्रसृतविलसच्छैवलालीचयाभाः ॥

अत्र च लिप्यां समुल्लिखितस्य सौयम्बकग्रामस्य विप्राः "श्रौतस्मार्तार्थ-

---

३४। Silimpur Stone-slab Inscription, Slokas 1 and 2.—*Epigraphia Indica*, Vol. XIII, p. 290.

विषयजगत्संशयच्छेदकाः” आसन्। तत्रत्यश्च कार्त्तिकेयः श्रुतौ श्रद्धालुरासीत्।

विभिन्नस्थानतः सम्प्राप्ताभ्यां शिलालिपिभ्यामवगतं श्रावस्त्याख्यं स्थानं वेदविद्यावैशारद्येन सविशेषं सुप्रथितमासीत्। अध्यापक-श्रीराधागोविन्दवसाकमहोदयेन शिलिमपुरलिपिं पर्य्यालोचयता स्थिरीकृतं श्रावस्तिर्गौडेष्वेवान्तर्भूत आसीदिति (३५)। पण्डितवर्य्येण श्रीमत्पद्मनाथभट्टाचार्य्यमहोदयेन कामरूपाधिपतेर्धर्म्मपालस्य ताम्रशासनमालोचयता सिद्धान्तितम्—प्रोक्तपूर्व्वो जनपदः कामरूपात् प्रत्यक् पौण्ड्रदेशस्य पूर्व्वसीम्नः सविधे समवस्थित इति (३६)। मतद्वयेनापि श्रावस्तिदेशो वङ्गेष्वेवान्तर्भवति।

धर्म्मपालस्यापरस्मिंस्ताम्रशासने कामरूपान्तर्गतस्य ख्यातिपलिग्रामस्योल्लेखो दृश्यते। स्थानात्तस्माद् याज्ञिकानुष्ठितानां होमानां धूमराजिराक्रामति स्म गगनतलम्, समग्रश्च ग्राम‘श्चतुर्वेदो’-ध्वनिभिर्मुखरित आसीत् (३७)।

खिस्तीयद्वादशशतके राज्ञो भोजवर्म्मणो वैलाव-शासनस्य प्रतिग्रहीता उत्तरराढाभिजनो रामदेवशर्म्मा वाजसनेयचरणाश्रितः काण्वशाखाध्यायी चासीत् (३८)।

हरिवर्म्मदेवामात्यस्य भवदेवभट्टस्य भुवनेश्वरशिलालिपितो विज्ञायते यत् स राढप्रदेशस्य सिद्धलग्रामाभिजने श्रोत्रियवंशे समुत्पन्न

---

३५। *Epigraphia Indica*, Vol. XIII, p. 247. एतत्तु श्रीननीगोपाल-मजुमदारमहोदयस्य नैव सम्मतम् (*Indian Antiquary*, Vol. XLVIII, pp. 208-211)। परं श्रीयोगेन्द्रचन्द्रघोषमहोदयस्यानुमतमेव (*Indian Antiquary*, Vol. LX, pp. 12-11).

३६। कामरूपशासनावली पृ: १६६।

३७। तत्रैव पृ: १७४, १७५।

३८। Belava Coper-plate of Bhojavarman ll. 42-45.—*Inscriptions of Bengal*, Vol III, p. 21.

इति। समग्रे सामवेदे विविधेषु च शास्त्रनिकरेष्वनितरसाधारणं नैपुण्यं समधिगम्य भवदेवेन मीमांसाशास्त्रे धर्मशास्त्रे च प्रबन्धाः प्राणायिषत (३८)। एतद्विरचितं कर्मानुष्ठानपद्धति-प्रायश्चित्तविवेकाख्यं स्मृतिग्रन्थद्वितयं मुद्रितं वर्त्तते।

विजयसेनस्य बाराकपुरताम्रशासने वर्णितम्—मध्यदेशादागतेन कान्तिजोड्गनिवासिना "आश्वलायनाशाखाषडङ्गाध्यायिना" उदयकरदेवशर्मणा राज्ञ्या विलासवत्याः "कनकतुलापुरुषदाने" होमोऽनुष्ठितः (४०)।

वल्लालसेनस्य नैहाटिशासनस्य प्रतिग्रहीता "सामवेद-कौथुमशाखा-चरणानुष्ठायी" वासुदेवशर्मा राजमातुर्विलासवत्या "हेमाश्वमहादाने" आचार्य आसीत् (४१)।

महाराजलक्ष्मणसेनस्य सुन्दरवनशासनस्य ग्रहीता गर्गगोत्रजः कृष्णधरदेवशर्मा ऋग्वेदीयाश्वलायनशाखामधिजगे (४२)।

लक्ष्मणसेनस्यानुलियाशासनस्य ग्रहीता कौशिकगोत्रसम्भवो रघुदेवशर्मा यजुर्वेदीयकाण्वशाखाध्याय्यासीत् (४३)।

तस्यैव राज्ञो गोविन्दपुरशासनस्य ग्रहीता वात्स्यगोत्रीय उपाध्यायो व्यासदेवशर्माऽचिराविष्कृतस्य शक्तिपुरशासनस्य ग्रहीता शाण्डिल्यगोत्रजः कुवेरशर्मा च 'सामवेदीयकौथुमशाखाचरणम्' अनुसस्रतुः (४४)।

---

३८। Bhuvanesvara Inscription of Bhatta Bhavadeva, ll. 15-17.—*Inscriptions of Bengal*, Vol. III, p. 34.

४०। Barrackpur Copper-plate of Vijayasena, ll. 50-51—*Ibid.*, p. 63.

४१। Naihati Copper-plate of Ballalasena, ll.50,51—*Ibid.*, p.78.

४२। *Ibid.*, p. 171.

४३। Anulia Copper-plate of Lakshmanasena. ll. 42-43.—*Ibid.*, p. 87.

४४। Govindapur Copper-plate of Lakshmanasena, ll. 43-44.—

"सामवेदीयकौथुमशाखाचरणानुष्ठायी" भरद्वाजगोत्रज ईश्वरदेवशर्मा लक्ष्मणसेनस्य 'हेमाश्वरथमहादाना'नुष्ठान आचार्यकृत्यमनुष्ठाय दक्षिणारूपेण भूमिं लेभ इति तपनदीघितास्रशासनतोऽवगम्यते (४५)।

लक्ष्मणसेनस्य माधाइनगरतास्रशासनस्य ग्रहीता कौशिकगोत्रसम्भूतो गोविन्ददेवशर्मा अथर्ववेदीय-'पैप्पलादशाखाध्यायी' बभूव (४६)।

ईश्वरघोषस्य रामगञ्जतास्रशासनोक्तो भार्गवगोत्रजो भट्टनिव्वोकशर्मा यजुर्वेदमधिजगे (४७)।

यद्यपि चोदितानामासां लिपीनां वर्णनात् प्राचीनवङ्गेषु चतुर्वेदीयानामेव ब्राह्मणानां सद्भावः प्रतीयते तथापि वाजसनेयशाखावलम्बिनां यजुर्वेदीयानामेव ब्राह्मणानां बाहुल्यं परिलक्ष्यते। महिदासविरचिते चरणव्यूहपरिशिष्टभाष्येऽपि वङ्गेषु वाजसनेयवेदः प्रचलित इति वर्णितमस्ति। देशविशेषेषु वेदशाखाविशेषस्य प्रचारमुपवर्णयता महिदासेन महार्णवात् केचन श्लोकाः समुद्धृताः। तत्र चैकः श्लोकः—

अङ्गवङ्गकलिङ्गश्च कानीनो गुर्जरस्तथा।
वाजसनेयी शाखा च माध्यन्दिनी प्रतिष्ठिता॥
(चरणव्यूहपरिशिष्टम् पृः २)

---

*Inscriptions of Bengal,* Vol. III. p. 96. लक्ष्मणसेनस्य नवाविष्कृत (शक्तिपुर), तास्रशासनम्, पङ्क्तयः ४१-४३।—(वङ्गीय) साहित्यपरिषत्पत्रिका, ३७श भागः, पृः २१४।

४५। Tapanadighi Copper-plate of Lakshmanasena, ll. 42-44. —*Inscriptions of Bengal,* Vol. III, p. 102.

४६। Madhainagar Copper-plate of Lakshamanasena, ll. 46-48.—*Ibid.,* p. 112. एतत्तास्रशासनवचनं खिस्तीयद्वादशशतके वङ्गेष्वथर्ववेदीयब्राह्मणानां सद्भावं प्रमापयति।

४७। Ramganj Copper-plate of Isvara Ghosha, ll. 29-31. —*Ibid.,* p. 154.

विविधानां ग्रन्थानां शासनानां प्रशस्तीनां च प्रमाणेनावगतम्— ख्रिस्तीयपञ्चमशताब्दीतो द्वादशशताब्दीं यावद् वङ्गेषु वेदचर्चा प्रचलिताऽऽसीदिति। एषु च प्राचीनलेखजातेषु समुल्लिखिता ब्राह्मणा अधुनातनब्राह्मणा इव गायत्रीमेव केवलामधीत्य वेदाध्यायीति बिरुदं लेभिर इति न सम्भवकोटिं प्रविशति। निपुणं खलु विचारयत एतदेव प्रतिभाति यद् ब्राह्मणानामेषां परिचयार्थमुपनिबद्धानि विशेषणानि सविशेषविचारपुरःसरमेव प्रयुक्तानि प्राचीनलेखेष्विति। शासनीकृताया भूमेर्ग्रहीतृविशेषस्य वेदाध्ययनगतं विवरणं किमपि नोल्लिखितम्। केशवसेनस्य इदिलपुरताम्रशासने विश्वरूपसेनस्य मदनपाडताम्रशासने च ग्रहीतॄणां गोत्रप्रवराणां परिचयो वर्तते, परं तयोर्वेदाध्ययनविषये किमपि न विलिखितम् (४८)। किञ्च, विश्वरूपसेनस्य साहित्यपरिषत्-ताम्रशासनस्य ग्रहीता यजुर्वेदीयकाण्वशाखाया 'एकदेशाध्यायि'त्वेन निरूपितः (४९)। दामोदरस्य चट्टग्रामताम्रशासनस्य ग्रहीता यजुर्वेदी आसीदित्येतावन्मात्रं वर्णितम्, तस्य वेदाध्ययनस्योल्लेखो नास्ति (५०)। एतदपि विशेषतो द्रष्टव्यं यद् गुरवमिश्रेण स्वशिलालिप्यां येषां पूर्वजानां परिचय उपनिबद्धस्तेषु केवलं प्रपितामहस्य पितुश्च वेदविद्यायां नैपुण्यमुपवर्णितम्, पितामहस्येतरेषां वा पूर्वजानां वेदविद्यामधिकृत्य किमपि नोक्तम् (५१)। अतश्च सुशकमेवानुमातुं यद् येन परमार्थतः समग्र एव वेदोऽधीतः स एव ताम्रशासनेषु वेदाध्यायीति निर्दिष्टः, येन स्वशाखाया अल्पीयानेवांशोऽधीतः स एकदेशाध्यायीति व्यपदिष्टः, यस्य च वेदविद्यया परिचयो नासीत् तस्य गोत्रप्रवरमात्रमुल्लिखितं, यद्वेदानुसारेण वा तेन संस्कारादिकमनुष्ठितं तस्य वा नाम निर्दिष्टमिति।

---

४८। *Inscriptions of Bengal*, Vol. III, pp. 125, 187.

४९। *Ibid.*, p. 147,

५०। *Ibid.*, p. 191.

५१। गौडलेखमाला पृ: ७१-७५।

ख्रिस्तीयद्वादशशतके वङ्गीयविद्वत्प्रवरेण पुरुषोत्तमेन विरचितायां पाणिनिव्याकरणस्य भाषावृत्तौ वैदिकसूत्राणां परित्यागात् ततः प्रागेव वङ्गेषु वेदचर्चायाः शैथिल्यं प्रादुर्भूतमिति केचन मन्यन्ते। भाषावृत्तेष्टीकाकृता सृष्टिधरचक्रवर्तिनोक्तम्—लक्ष्मणसेनस्यादेशेन पुरुषोत्तमदेवेन पाणिनिव्याकरणस्य वैदिकानि सूत्राणि परित्यक्तानीति (५२)। तुष्यतुन्यायेनाभ्युपगतेऽप्यादेशस्य सत्यत्वे न खलु लक्ष्मणसेनेन वेदेषु प्रद्वेषात् तथाऽऽदिष्टमिति सावधारणं वक्तुं शक्यते। बौद्धपण्डितेन पुरुषोत्तमेन वैदिकव्याकरणविरचनमशोभनमेव स्यादित्याकलय्यैव तेन तथाऽऽदिष्टमिति सम्भाव्यते। लक्ष्मणसेनस्य शासनसमये वङ्गेषु वेदचर्चायाः सद्भावविषये ताम्रताम्रशासनोक्तीः परिहायापि प्रमाणान्तराण्युपलभ्यन्ते।

अद्भुतसागरग्रन्थे लक्ष्मणसेनस्य पिता वल्लालसेनो 'वेदायनैकपथिक' इत्याख्ययाऽभिहितः ( ५३ )। चतुर्षु ताम्रशासनेष्वपि स "वेदायनैकाध्वग" इति व्यपदिष्टः ( ५४ )। वल्लालस्य गुरुरनिरुद्धभट्टो हि वरेन्द्र्यां वेदार्थस्योपनिबन्धने स्मृतिव्याख्याने च श्रेष्ठत्वेन प्रथित आसीत्। उक्तं च दानसागरे—

वेदार्थस्मृतिसंकथादिपुरुषः श्लाघ्यो वरेन्द्रीतले
निस्तन्द्रोज्ज्वलधीविलासनयनः सारस्वतब्रह्मणि।
षट्कर्माऽभवदार्यशीलनिलयः प्रख्यातसत्यव्रतो
वृत्रारेरिव गीष्पतिर्नरपतेरस्यानिरुद्धो गुरुः॥ इति ( ५५ )।

---

५२। श्रीश्रीशचन्द्रचक्रवर्ती, भाषावृत्तेर्भूमिका पृ: ५, २०।

५३। मुरलीधरझा सम्पादितोऽद्भुतसागरः पृ: १।

५४। प्रत्यूहः कलिसम्पदामनलसो वेदायनैकाध्वगः सग्रामः स्थितजङ्गमाकृतिरभूद्वल्लालसेनस्ततः। Anulia, Govindpur and Tapanadighi Copper-plates of Lakshmanasena.—*Inscriptions of Bengal*, Vol. III, pp. [illegible]. नवाविष्कृतशक्तिपुर-ताम्रशासनम्, (वङ्गीय) साहित्यपरिषत्पत्रिका, ३७श भाग, पृ: २२१।

५५। दानसागरः, श्लो.क. ६.—*Catalogue of Sanskrit Manuscripts in the Library of the India Office*, Vol. III, p. 543.

अनिरुद्धप्रणीतः स्मृतिग्रन्थः पितृदयिता नचिरात् प्रकाशितः। ग्रन्थाच्चास्मादवगम्यते—अनिरुद्धस्यावस्थितिसमये वङ्गेषु साग्निका ब्राह्मणाः श्राद्धवाटे समुपस्थाय स्वयं कर्म निर्वर्तयामासुरिति, न खलु साम्प्रतमिव तदानीं श्राद्धे अग्निहोत्रिणामभाव आसीद् येन कुशमया ब्राह्मणा अपेक्ष्येरन् (५६)।

अनिरुद्धादनन्तरं भट्टगुणविष्णुना छान्दोग्यमन्त्रभाष्यं विरचितम्, लक्ष्मणसेनस्य च धर्माध्यक्षेण हलायुधभट्टेन ब्राह्मणसर्वस्वाख्ये ग्रन्थे मन्त्रा व्याख्याताः।

ख्रिस्तीयद्वादशशतकादूर्ध्वं रामनाथकृतं मन्त्रव्याख्यानं वर्जयित्वा वङ्गेषु वेदानुशीलनस्य किमपि विशिष्टं निदर्शनं नोपलभ्यते। भक्तिरसस्योन्मादनया वा नव्यन्यायस्योद्दीपनया वाऽन्येन वा केनचित् कारणकलापेन कालेऽस्मिन् वेदविद्याया ह्रासः समजनि। वङ्गीया बुद्धिमन्त इति प्रथिताः। वेदविद्याया अनुशीलनेऽपि वङ्गीय-ब्राह्मणैर्बुद्धिवृत्तिरेव समधिकं प्रायोजीति प्रतीयते। एते हि वेदार्थमनुशीलयामासुः, परं मन्त्राणामावृत्तौ नाऽभिनिविष्टाः। इतरेषु प्रदेशेषु वेदाः कण्ठेक्रियन्ते स्म (५७)। बहुत्राद्यापि ब्राह्मणा वेदमन्त्रान् कण्ठे कुर्वन्ति। नवमशतके वङ्गेष्वपि शूरपालमन्त्री केदारमिश्रश्चतुर्वेदस्योर्मिरणेऽलमासीत्, दशमशतके च कामरूपान्तर्गतख्यातिपल्लिग्रामश्चतुर्वेदध्वनिभिर्मुखरित आसीदिति पूर्वमेव दृष्टमस्माभिः। परं वङ्गेष्वध्ययनपूर्ववेदार्थाव-

---

५६। संस्कृतसाहित्यपरिषदः प्रकाशिता पितृदयिता पृः २०, २५।

५७। स्वर्गतेन हरप्रसादशास्त्रिमहोदयेन विलिखितम्—

Their mode of study differed widely from that of other provinces where they memorized the Vedas or at least the Veda which they professed. But they cared very little for the meaning. In Bengal, however, the Brahmanas never memorized even one of the Vedas. They memorized only such of the mantras as were used in their religious performances, but insisted on knowing their meaning.—*Journal of the Bihar and Orissa Research Society*, Vol. V, p. 172.

बोधशैली नैव बाहुल्येन प्रचलितेति सम्भाव्यते। अत एव ख्रिस्तीयद्वादश-शतके ब्राह्मणसर्वस्वप्रणेत्रा हलायुधभट्टेन विलिखितं यद् तत्कालीयाः प्रतीच्याश्च प्रथमं वेदमधीयते, राढीयैर्वारेन्द्रैश्च कर्ममीमांसासाहाय्येन यज्ञानुष्ठानस्येतिकर्त्तव्यतावधारणार्थमंशतो वेदार्थमात्रं विचार्यत इति (५८)। तेन पुनरप्युक्तम्—न खलु केवलेनार्थज्ञानेन वेदपाठः सिध्यति, यथाविध्यध्ययनपूर्वक एवार्थावबोधः सम्पादनीय इति (५९)। एतस्या एव उक्तेर्विज्ञायते यद्धलायुधस्यावस्थितिसमये वङ्गीया ब्राह्मणा देशान्तरीया इव आवृत्तिपूर्वकं वेदं नाधिजगिर इति। हलायुधस्य मतेन तादृशमध्ययनमन्तरेण वेदविद्या न साफल्यं व्रजति। वस्तुतो वाल्य आवृत्तिप्रयासमुच्छेदो वङ्गीयानां वेदज्ञानस्याल्पत्व एकं कारणम्।

देशविशेषे शास्त्रविशेषगतानां हस्तलिखितपुस्तकानामाधिक्य-मल्पत्वं वा तत्र तच्छास्त्रस्य पठनपाठनयोराधिक्यमल्पत्वं वाऽनुमापयति। यद्यपि वङ्गेषु पुरातनानि हस्तलिखितानि मूलवेद-पुस्तकानि नैवोपलभ्यन्ते, तथापि देशेऽस्मिन् वेदस्याध्ययनाध्यापने नैवास्तामिति सिद्धान्तयितुं न युज्यते। वङ्गेषु हि जलार्द्र-समीरसम्पर्कदोषेण ख्रिस्तीयद्वादशशतकतः प्राचीनानि प्रायेण सर्वाण्येव पुस्तकानि प्रनष्टानि। गृहस्थस्यावधानातिशयेन कदाचिदेकद्वानि रक्षितानि। द्वादशशतकत ऊर्ध्वं वङ्गेषु वेदालोचनं शैथिल्य-मुपगतमिति पूर्वमेवोक्तम्। उत्तरकाले मूलवैदिकग्रन्थानामध्ययन-मुच्छिन्नमेव। अत एव मूलवेदानां हस्तलिखितपुस्तकानामनुपलम्भो द्वादशशतकतः पूर्वं मूलग्रन्थानामालोचानाभावे प्रमाणमिति वक्तुं न शक्यते।

( अवशिष्यते )

---

५८। तेजश्चन्द्रविद्यानन्दसम्पादितं ब्राह्मणसर्वस्वम् पृः ११।

५९। तत्रैव पृः १२।

# सहधर्मिणीचर्य्या *

प्रियपाठकमहाभागाः, सम्प्रति किल सर्वत्रैव सावेगं प्रसर्पति दुरितमात्रविपाकिनि कलौ सुदुर्लभ एवास्मिन् भारते वर्षे नारीणां प्राचीन आचारः। सम्प्रति हि प्रायेण शालासु प्रयाणं विप्रतीपं केशप्रसाधनं हित्रकाचकङ्कणधारणं चित्रवसनपरिधानं चेत्येवंविधा एव सन्दृश्यन्ते कुलाङ्गनानामाचाराः। न चैतदाश्चर्य्यम्। एष हि स्वभाव एव चरमस्य युगस्येति प्रागेव चैतत् साक्षात्कृत्य प्रतीक्षा दृष्ट्या समुपन्यबध्नन्नूर्ध्वस्रोतसो मुनयः 'वेश्यालावण्यशोलेषु स्पृहां कुर्वन्ति योषितः' इति। भवतु नामैतत् केषाञ्चिदाधुनिकानां संस्कृतम्मन्यानां ब्रह्मरसास्वादाय, प्राचीनाचारपरायणा भारतवर्षभव्यैषिणः पुनरेवंविधेनामुना भारतीययोषितामाचारेण मर्मस्युपहन्यमाना दीर्घदीर्घं निःश्वसन्तो 'हा धिग् दैवम्' इत्येव निरन्तरं विलपेयुः। नेदानीं नारीणां गुरुषु बहुमानो न पत्यौ दैवतबुद्धिर्न विनीतत्वं न प्रगाढा प्रीतिर्न चाञ्चल्याभावो नापि वा भारतीयललनोचिता आदर्शभूता अपरेऽपि गुणव्राताःस्तथोपलभ्यन्ते यथा पूर्वम्। एवं च दुष्टासु नारीषु कथङ्कारं वा सम्भव्यतामभ्युदयो भारतस्य वर्षस्य। दुष्टासु हि नारीषु सङ्करस्ततश्च निरयावपातोऽर्थादधःपात एव लोकानां नियतः। उक्तं चैतद् भगवता—'स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः। सङ्करो नरकायैव' [गी १।४१] इति। तदिदानीं कीदृशं वा भार्य्यात्वमापन्नानां प्राचीननारीणामाचरितम्, कीदृशी च पत्यौ प्रीतिः, कीदृग्विधा च गुरुजनादिषु वृत्तिः, किमेतासां कर्म, कियच्चासां

* योषिद्धर्ममधिकृत्य केचन प्रबन्धाः क्रमशः परिषत्पत्रिकाया प्रकाशयिष्यन्ते। अस्मिन् प्रबन्धे सहधर्मिणीचर्य्याविषये महर्षिवात्स्यायनप्रणीतानि सूत्राणि, राशिवडेकरोपनामश्रीमदप्पाशास्त्रिप्रणीतं सोपोद्घातं तद्व्याख्यानं जयमङ्गलविरचिता च टीका सन्निविष्टा। स० सा० प० स०

दाच्य' किंविधं च वैदुष्यमित्यादिकं समासतः प्रदर्शयितुमिच्छामः। कामसूत्रगतं भार्य्याधिकरणमवलम्ब्यैव विवरीतुमेतदभिलष्यामः। उदाहृत्य चात्र भगवतो वात्स्यायनस्य सूत्रं व्याख्यामुखेन तदेतदुपदर्शयिष्यामः।

तत्र तावदेतद् भगवतो वात्स्यायनस्यादिमं सूत्रम्—

**भार्य्यैकचारिणी* रूढविश्रम्भा देववत्† पतिमनुवर्तेत॥१॥**

जय॥ भार्य्या च द्विविधा—एकचारिणी सपत्निका चेति। तत्र प्राधान्येनैकचारिणीवृत्तमुच्यते—भार्य्येति। गूढविश्रम्भा। इतरस्याः कपटव्यवहारः। सम्भावितत्वाद्देववत्। "भर्त्ता तु देवता स्त्रीणाम्" इति न्यायात्। आनुकूल्येन चित्तानुविधानेनैव। वर्त्तेतेत्यन्तर्भावितो ण्यर्थः। शरीरस्थितिविषयमेतत्॥१॥

शास्त्री॥ द्विविधाः खलु भार्य्याः—एकचारिण्यः सपत्न्यश्चेति। ताः खल्वेकचारिण्यो यासामेकमात्रपरिग्रहो भर्त्ता, सपत्न्यः पुनरनेकपरिग्रहस्य पुरुषस्य भार्य्या इति। तत्रैकचारिण्या वृत्तमनुशिष्यते। न चैतत् पुंश्चलीनां भवति। तदाह—भार्य्येति। यथाविधिकृतपाणिग्रहसंस्कारा भार्य्या। सा चैकचारिणी चेदतः परमभिधीयमानमाचारमनुवर्तेत। स चायमाचारो रूढविश्रम्भेत्यादि। पत्याविति शेषः। पत्यौ रूढविस्रम्भा सती तं देववदनुवर्तेत पत्यनुकूलमाचारमासेवेतेति भावः। न ह्यरूढविश्रम्भाया आनुकूल्यं सम्भवति। न चाप्यननुकूलायामैकमत्यम्। नाप्यनैकमत्ये सुखावाप्तिरिति। पतिसालोक्यमेव हि समधिगन्तव्यं नारीणाम्। तच्च न हि विना

---

* "गूढविश्रम्भा" इति जयमङ्गलायाः पाठः।

† तदुक्तं मनुना ( ५।१५४ )—

विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः।
उपचर्यः स्त्रिया साध्व्या सततं देववत् पतिः॥

विशुद्धपरिचर्य्यां घटते। विशुद्धा च परिचर्य्या न हि विनार्ह-णीयताबुद्धिम्। सा च परा दैवत एवेति। तत उक्तं देववदिति ॥१॥

**तन्मतेन कुटुम्बचिन्तामात्मनि सन्निवेशयेत् ॥२॥**

जय ॥ वृत्तं सूचयति—तन्मतेनेति। यदा तु नायकेनानुज्ञाता। कुटुम्बचिन्तां गृहचिन्ताम्। बाह्यवस्तुविषयमेतत्। आत्मनि सन्निवेशयेत् आत्माधीनां कुर्य्यात्। वृत्तमुभयमुत्तरत्र यथायोगं योज्यम् ॥ २ ॥

शास्त्री ॥ तन्मतेन पत्युरनुज्ञया नैव तु तं विगणय्य 'अक्षमोऽसि कुटुम्बचिन्तायाम्' इति। नापि विरुध्य, अपि तु साहाय्यमस्या-धातुमानुकूल्यं च सम्पादयितुम्। अवश्यं हि भार्य्यया पत्युः साहाय्यमाधेयम्। अर्धं हि तस्येयमिति। तत एव चेयमेव कुटुम्ब-चिन्तायामधिक्रियते। आमनन्ति चैवं स्मृतिकाराः—सा भार्य्या या गृहे दक्षेति। उपार्जनं तु द्रव्यस्य पुरुषैरनुष्ठीयते। संग्रहे चास्य व्ययेऽपि च भार्य्यैवाधिक्रियते। तदप्युक्तम्—"अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्" [मनु ९।११] इति। आत्मनि सन्निवेशयेत् इति आत्मायत्तां कुर्य्यादित्यर्थः ॥२॥

**वेश्म च शुचि सुसंमृष्टस्थानं विरचितविविधकुसुमं श्लक्ष्णभूमितलं हृद्यदर्शनं त्रिषवणाचरितबलिकर्मं पूजितदेवायतनं कुर्य्यात् ॥३॥**

जय ॥ तत्र गृहप्रतिबद्धत्वाद् वृत्तस्य गृहचिन्तामाह—वेश्म चेति। कुर्य्यादित्यनेन सम्बन्धः। सुसंमृष्टं सुशोधितम्। स्थानेषु भोग्येषु विरचितानि विप्रकीर्णानि विविधानि कुसुमानि यस्य। संश्लक्ष्णभूमितलमिति। मसृणभूतलम्। हृद्यं हृदयप्रियं दर्शनं यस्य। त्रिषवणं त्रिसन्ध्यम् आचरितं कारितं बलिकर्म यत्र। देवायतनं देवगृहं तत् पूजितं यस्मिन् ॥ ३ ॥

शास्त्री ॥ वेश्मैवंविधं कुर्य्यात्। कीदृशम्? शुचि निर्मलम्। अशुचयो हि स्थानानि भवन्ति मलवन्ति गेहानि। रोगाणां च भाजनान्येतानि सम्पद्यन्ते। अपनयन्ति चैतानि प्रसादं हृदयस्येति। किंच सुसंमृष्टस्थानम्। सुतरां संमृष्टानि कृतसम्मार्जनानि स्थानान्य-वस्थानभूमयोऽस्येति। एवं ह्यारोग्यमुपचीयते। किंच विरचित-विविधकुसुमम्। विरचितानि श्रेणीकृत्य तत्तदाकारेणावस्थापितानि विविधानि कुसुमान्यस्मिन्। एष हि गृहस्थानां मनसः प्रसादनो-पायः। श्लक्ष्णभूमितलमिति स्पष्टम्। हृद्यदर्शनम् हृद्यं हृदयप्रियं दर्शनं यस्येति। तथा किल वेश्म परिमण्डयेद् यथैतद्दृष्टमात्रमेवा-न्तरङ्गमपहरतीति। एतेन तत्तद्वर्णैर्भित्तिरञ्जनादिकर्माभिद्योत्यते। त्रिषवणाचरितबलिकर्मेति। त्रिसन्ध्यं कृतबलिकर्म। पूजित-देवायतनमिति। पूजितं देवगृहं यत्रेति। एवं हि कृते वेश्मनि प्रसीदत्यन्तरङ्गं गृहस्थानाम्। रज्यति चैतदत्रेति ॥३॥

## न ह्यतोऽन्यद् गृहस्थानां चित्तग्राहकमस्तीति गोनर्दीयः ॥ ४ ॥

जय ॥ अतोऽन्यदिति। यथोपवर्णितवेश्मनः। चित्तग्राहकं मनोहारि। गोनर्दीय इति पूजार्थमधिकरणेऽधिज्ञातत्वात् ॥ ४ ॥

शास्त्री ॥ तदाह—न हीत्यादि। गोनर्दीयो नामाचार्य्य एतदपेक्षयान्यन्नास्ति गृहस्थानां चित्तग्राहकमित्यभिप्रैति। एतेन भार्य्याणां सदनविषयकं कर्तव्यमवबोधितं भवति। कौशलं चैतासां स्फुटीक्रियते। बुद्धिमत्तरत्वं चैतासां विशदीभवति। न हि विना बुद्धिमत्त्वं शक्यं सदनं हृद्यदर्शनं सम्पादयितुमिति ॥ ४ ॥

## गुरुषु मन्त्रवर्ग्येषु भृत्यवर्गेषु नायकभगिनीषु तत्पतिषु च यथार्हं प्रतिपत्तिः ॥५॥

जय ॥ तत्र वृत्तद्वयं दर्शयन्नाह—गुरुष्विति । गुरुषु श्वशुरादिषु । नायकभगिनीषु ननान्दृषु । तत्पतिषु ननान्दृपतिषु यथार्हं प्रतिपत्तिरिति यथा चास्यां प्रतिपत्तिर्वाक्कायाभ्यामनुष्ठानम् ॥५॥

शास्त्री ॥ अथेदानीं सदनवर्तिषु वृत्तिमाह—गुरुष्विति । गुरुषु श्वश्रूश्वशुरप्रभृतिषु । भृत्यवर्गेषु पोष्यजनसङ्घेषु । नायकस्य पत्युः भगिनीषु । तासां पतिषु च यथार्हं यथायोग्यं प्रतिपत्तिराचारः । एतस्य च प्रकारं स्वयमेव वक्ष्यति । अनुपास्यमाना गुरवोऽननुगृह्यमाणा भृत्याः अस्नेहभाजनीक्रियमाणाश्च ननान्दारोऽसम्भाविताश्च तत्पतयः प्रायेण नायके प्रातिकूल्यं जनयन्तीति ॥ ५ ॥

**परिपूतेषु च हरितशाकवप्रानिक्षुस्तम्बाञ्जीरकसर्षपाजमोदशतपुष्पातमालगुल्मांश्च कारयेत् ॥ ६ ॥**

जय ॥ परिपूतेषु चेति । परिपूतेषु पवित्रेषु । हरितं धान्यकार्द्रकादि । शाकं पालङ्क्यादि । एषां वप्रान् केदारान् । इक्षुस्तम्बान् इक्षुविटपान् । जीरकादीञ्छतपुष्पापर्यन्तान् कारयेत् । तत्राजमोदोऽनेनैव नाम्ना प्रतीतः । तमालगुल्मान् तमालविटपान् ॥६॥

शास्त्री ॥ अथ पुनः सदनविषयिणीं व्यवस्थां प्रस्तौति—परिपूतेष्विति । परिपूतेषु विशुद्धेषु प्रदेशेष्वित्यर्थः । हरितवर्णानां शाकानां वप्रान् चेत्राणि । स्पष्टमन्यत् । अभ्यवहार्य्याणि खल्वेतानि शाकादीनि । तत एव चापेक्ष्यते परिपूतस्थानावस्थायित्वमेतदीयवप्राणाम् । अपरिपूतेषु हि स्थानेषु क्रियमाणान्येतानि दुष्टैः समीरणादिभिः संसृज्यन्ते । तथाविधानि चास्वाद्यमानानि क्षपयन्त्यारोग्यमिति ॥ ६ ॥

**कुब्जकामलकमल्लिकाजातीकुरण्टकनवमालिकातगरनन्द्यावर्तजपागुल्मानन्यांश्च बहुपुष्पान् बालकी-**

**शीरकपातालिकाश्च वृक्षवाटिकायां च स्थण्डिलानि मनोज्ञानि कारयेत् ॥ ७ ॥**

जय ॥ कुब्जकेति। तत्र कुब्जकादीनां गुल्मान्। तगरः पिण्डीतगरः। जपा ओड्रपुष्पम्, बहुपुष्पा ये निर्भरं पुष्प्यन्ति। बालकोशीरयोः पातालिका केदारः। स्थण्डिलानि अवपट्टकानि ॥ ७ ॥

शास्त्री ॥ कुब्जकेति। कुब्जकादयो जपान्ताः कुसुमतरुविशेषाः, तेषां गुल्मान्। बहुपुष्पानिति गुल्मानित्यनुवर्तते। पातालिकाः केदाराः। स्थण्डिलानि वेदिकाः। एतेन पूर्वस्मिन् समये प्रतिसदन-सुपवनादीनामस्तित्वं द्योत्यते। नारीणां च क्षेत्रकर्मणि पाटवमभि-व्यज्यते। कुसुमसंसर्गवशात् सुगन्धिना समीरेण निरन्तरमासेव्य-मानतया सदनानामारोग्यवैशिष्ट्यमपि प्रतीयते ॥७॥

**मध्ये कूपं वापीं दीर्घिकां वा खानयेत् ॥८॥**

जय ॥ मध्य इति। वापीं समचतुरस्रां पुष्करिणीम्। दीर्घि-काम् आयतचतुरस्राम्। खानयेद् वास्तुवशात् ॥ ८ ॥

शास्त्री ॥ उपवनस्य सलिलसेकाद्यर्थं कूपादिखननमाह—मध्य इति। मध्ये वृक्षवाटिकायाः 'कूपं' वृत्तं जलगर्तं 'वापीं' समचतुरस्रां 'दीर्घिकाम्' आयतचतुरस्रां खानयेद् भृत्यादिद्वारेत्यर्थः। एवं हि संस्कृते सदने न हि नायकस्य विमनीभावसम्भावना नामास्ति। प्रत्युता-वेक्ष्य भार्य्याया गृहकर्मणि नैपुण्यातिशयं प्रसीदेदेवायमिति ॥ ८ ॥

**भिक्षुकीश्रमणाक्षपणाकुलटाकुहकेक्षणिकामूल-कारिकाभिर्न संसृजेत ॥९॥**

जय ॥ भिक्षुकी भिक्षणशीला। श्रमणा क्षपणा प्रव्रजिता रक्त-पटिका च। कुलटा प्रच्छन्नं खण्डितचारित्रा। कुहका कौतुक-

कारिका। ईक्षणिका विप्रश्निका। मूलकारिका वशीकरणेन मूलेन या कर्म करोति। ताभिर्न संसृज्येत। भर्तुर्विकल्पहेतुत्वात् ॥८॥

शास्त्री ॥ एवमपि गृहकर्मणि दक्षा चेत् कुलटादिभिः संसृज्येत तदा विशुद्धशीलापि संशयास्पदत्वमापद्येत, स्याच्च नायकस्य प्रद्वेष-भाजनमित्यवश्यं परिवर्जनीयः कुलटादिसंसर्ग इति। तदेतदाचष्टे —भिक्षुकीति। भिक्षुकी भिक्षणशीला। न चानया संसृज्येत। एषा हि द्रव्योपार्जनाभिलाषिणी स्वीकृत्य कामुकेभ्यो द्रविणं प्रलोभयति तैस्तैरुपायैः कुलजाः, चारित्राच्च भ्रंशयतीति। श्रमणाक्षपणी बौद्धपरिव्राजिकाविशेषौ। एतयोश्च विश्रम्भणीयाकारतया क्रियमाणो विश्वासः समुन्मूलयति च शीलमपथे च प्रवर्त्तयतीति। प्रायेण श्रमणादयः कुट्टिनीकर्म्मोपजीविन्यो दृश्यन्ते। यथा मालविकादौ कौशिक्यादयः। तत एव च नैताभिः संसृज्येतेति। कुहका ऐन्द्र-जालिकी। न चानया संसृज्येत। एषा ह्यन्यथा स्थितमेव वस्तु अन्यथा प्रदर्शयितुं प्रभवतीन्द्रजालबलात्। ततश्च संसृज्यमाना सेयं पतिविभिन्नमपि पुमांसं पतिवदवभासयेदर्थार्थिनी। रमयेच्च तेनाविशङ्कमेवेति। ततश्च शीलभ्रंशः। ईक्षणिका विप्रश्निका। नाप्यनया संसृज्येत। एषा हि पृच्छ्यमाना कदाचित्तथोत्तरयेदपरेण कामुकेन वशीकृता यथा पृच्छन्त्याः पत्यौ वैराग्यमुत्पद्येत। यथा वा सञ्जायेतापरत्र प्रीतिरिति। मूलकारिका वशीकरणोपजीविनी। न चानया संसृजेत। अनया हि संसृष्टा नायिका नायकस्य संशया-स्पदं भवतीति। एतच्च संसर्गवर्जनं शीलरक्षणोपाय इति।

एवं किल सदनकर्मणि दक्षतमायामसत्संसर्गतो दूरे वर्त्त-मानायां नायिकायां स्वयमेव स्निह्यति नायकः। तदेतद् बाह्याङ्गं नायकप्रीतिसाधनम्। अथान्तरङ्गमप्युपदिशति—

**भोजने च रुचितमिदमस्मै द्वेष्यमिदं पथ्यमिद-मपथ्यमिदमिति च विद्यात् त्यागोपादानार्थम् ॥१०॥**

जय ॥ भोजने चेति । भोजनकाले रुचितादीनि विद्यात् ॥१०॥

शास्त्री ॥ भोजनपदं भोज्यवस्तुनि लाक्षणिकम्। तत्रेदं वस्तु नायकाय रुचितं द्वेष्यमिदमेतस्य पथ्यमिदमित्यादि जानीयात्। एवं हि जानती तदेव परिवेषयेद् यदस्मै रुचितं यच्चास्याद्वेष्यं यच्च पथ्यं स्यात्। अजानती पुनः परिवेषयन्ती स्वयं स्वादिष्ठतया गृह्यमाणं भोज्यं परिवेषयेत्। स्यादपि कदाचिदेतन्नायकस्य द्वेष्यमनभीष्टं चापथ्यं च। यदृच्छयापि परिवेष्यमाणमिदं नायकस्य हृदि संशयं जनयेत्। अप्रीतिं चास्य नायिकायामुत्पादयेदिति। जानत्या पुनः परिवेषितं रुचितादि प्रीतिमस्यां तस्य विनैव प्रयासं जनयतीति ॥ १० ॥

**स्वरं बहिरुपश्रुत्य भवनमागच्छतः किं कृत्यमिति ब्रुवती सज्जा भवनमध्ये तिष्ठेत् ॥ ११ ॥**

जय ॥ किं कृत्यमिति। आदिश्यमानकार्यस्यानुष्ठानबुद्ध्या। सज्जा सावधाना। भवनमध्येऽङ्गनके ॥ ११ ॥

शास्त्री ॥ अथान्यदप्याह—स्वरमिति। एवं हि मदेकचित्तेय-मित्यवगच्छन् नायकः सविशेषमेवास्यां प्रणयमाचरतीति। सज्जेति—नायकादेशानुष्ठान इति शेषः। भवनमध्य इति न तु द्वारदेशे। द्वारदेशादिषु ह्यवतिष्ठमानां निर्लज्जामिमां सम्भावयेदिति ॥ ११ ॥

**परिचारिकामपनुद्य स्वयं पादौ प्रक्षालयेत् ॥१२॥**

जय ॥ परिचारिकामिति। पादप्रक्षालनोद्यताम् अपनुद्य अपास्य ॥ १२ ॥

शास्त्री ॥ सदनं च प्रविष्टस्य पादप्रक्षालने समुद्यतां दासीमप-नुद्य स्वयमेव चरणावस्य प्रक्षालयेत्। एवं हि प्रीतिः स्फुटीभवति। अन्यथा पुनरौदासीन्यम्। तच्च न श्रेयसे सम्पद्यत इति ॥ १२ ॥

**नायकस्य च न विमुक्तभूषणा विजने सन्दर्शने तिष्ठेत् ॥ १३ ॥**

जय ॥ सन्दर्शन इति। अग्रतो न तिष्ठेत्। अकृतशरीरसंस्कारां दृष्ट्वा वैराग्यमपि स्यात् ॥ १३ ॥

शास्त्री ॥ किंच, विमुक्तानि भूषणानि यस्मिंस्तद् यथा विजने एकान्ते नायकस्य सन्दर्शने न तिष्ठेत्। विजने हि प्रणयः समुच्छलति कामयते च नायक इति। भूषणानि च शरीरसौष्ठवातिशयं जनयन्ति नायकस्य चित्तापहरणे प्रभवन्तीति। विमुक्तानि पुनरेतानि क्षमयन्ति शोभां शरीरस्य। क्षमितायां चास्यामपरज्यति नायक इति। उदासीनां ह्येवमेनामेष सम्भावयतीति। तत एव न विमुक्तभूषणमस्य सन्दर्शने तिष्ठेद्विजने इति ॥१३॥

**अतिव्ययमसद्व्ययं वा कुर्वाणं रहसि बोधयेत् ॥१४॥**

जय ॥ अतिव्ययमिति। अतिव्ययमुचितव्ययादधिकम्। असद्व्ययं यदनर्थिजने प्रतिपाद्यते। रहसि बोधयेत् लोकमध्ये हि लज्जित एव स्यात् ॥ १४ ॥

शास्त्री ॥ अतिरिक्तं वाऽसति वा कर्मण्यसन्तं वा व्ययं कुर्वाणं बोधयेत्। तत् पुना रहस्येव न तु प्रकाशे। प्रकाशे हि बोधो नायकस्य लज्जां जनयेत्, नायिकायाश्च मदमवबोधयेत्। ततश्च नायकस्य प्रीतिर्हीयेतेति। स एव तु रहसि प्रणयपरिप्लुतैः कोमलकोमलैर्हृदयहारिभिः पदैः क्रियमाणो नायकस्य चित्तमावर्जयति, विनयमेव च नायिकायाः प्रकाशयति, साधयति चाभीष्टम्, अभिवर्धयति च नायकस्य प्रेमाणमिति। अत एव कान्तासम्मिततयोपदेशम् आलङ्कारिका बहुमन्यन्ते ॥ १४ ॥

**आवाहे विवाहे यज्ञे गमनं सखीभिः सह गोष्ठीं देवताभिगमनमित्यनुज्ञाता कुर्य्यात् ॥ १५ ॥**

जय ॥ आवाहे वरगृहे। विवाहे कन्यागृहे। गोष्ठीं सम्भूय पानभोजनम्। देवताभिगमनम् द्रष्टुमनुज्ञाता कुर्य्यात्। अन्यथा स्वैरिणीत्याशङ्केत ॥ १५ ॥

शास्त्री ॥ आवाहो वरगृहम्, विवाहो वधूगृहम्: तत्र, यज्ञप्रदेशे च गमनम्, नायकेनानुज्ञातैव कुर्य्यात्। एतानि हि कामुकानां कामिनीसंवीक्षणस्थानानि भवन्तीति। तत्र च विनैवानुज्ञां गता नायकस्य मनसि सन्देहं जनयेत्। देवताभिगमनेऽप्येवम्। सखीभिः सह गोष्ठीं सभां सहावस्थानमिति यावत्। एतदप्यननुज्ञाप्य नायकं क्रियमाणमन्यादृशीमिवास्य मनसि कदाचित् सम्भावनां प्रादुर्भावयतीति। स्वैरिण्यो हि विना पत्युरनुज्ञां तत्र तत्र भ्रमन्तीति ॥१५॥

## सर्वक्रीडासु च तदानुलोम्येन प्रवृत्तिः ॥१६॥

जय ॥ सर्वक्रीडासु चेति। यज्ञरात्र्यादिषु लोके प्रवृत्तासु तच्चित्तानुविधानेन प्रवृत्तिः ॥१५॥

शास्त्री ॥ सर्वासु च क्रीडासु नायकस्यानुकूलतयैव प्रवृत्तिः कर्तव्या, नैव पुनः प्रतिकूलतया। प्रातिकूल्यं हि नायकस्य न नायिकायाः श्रेयसे भवति। तद्धि समूलघातमेव विनिहन्ति प्रेमाणमिति ॥१६॥

## पश्चात् संवेशनं पूर्वमुत्थानमनवबोधनं च सुप्तस्य * ॥१७॥

जयः ॥ पश्चात् संवेशनं शयितस्य नायकस्य। पूर्वम् उत्थानम् अनुत्थितान्नायकाद्, अहनि यावन्न प्रतिबुध्येत ॥१७॥

---

* तथाचोक्तम्—

सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते।
नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता ॥

**नायकस्य च न विमुक्तभूषणं विजने सन्दर्शने तिष्ठेत् ॥ १३ ॥**

जय ॥ सन्दर्शन इति । अग्रतो न तिष्ठेत् । अकृतशरीरसंस्कारां दृष्ट्वा वैराग्यमपि स्यात् ॥ १३ ॥

शास्त्री ॥ किंच, विमुक्तानि भूषणानि यस्मिंस्तद् यथा विजने एकान्ते नायकस्य सन्दर्शने न तिष्ठेत् । विजने हि प्रणयः समुच्छलति कामयते च नायक इति । भूषणानि च शरीरसौष्ठवातिशयं जनयन्ति नायकस्य चित्तापहरणे प्रभवन्तीति । विमुक्तानि पुनरेतानि क्लमयन्ति शोभां शरीरस्य । क्लसितायां चास्यामपरज्यति नायक इति । उदासीनां च्चेवमेनामेष सम्भावयतीति । तत एव न विमुक्तभूषणमस्य सन्दर्शने तिष्ठेद्विजने इति ॥१३॥

**अतिव्ययमसद्व्ययं वा कुर्वाणं रहसि बोधयेत् ॥१४॥**

जय ॥ अतिव्ययमिति । अतिव्ययमुचितव्ययादधिकम् । असद्व्ययं यदनर्थिजने प्रतिपाद्यते । रहसि बोधयेत् लोकमध्ये हि लज्जित एव स्यात् ॥ १४ ॥

शास्त्री ॥ अतिरिक्तं वाऽसति वा कर्मण्यसन्तं वा व्ययं कुर्वाणं बोधयेत् । तत् पुना रहस्येव न तु प्रकाशे । प्रकाशे हि बोधो नायकस्य लज्जां जनयेत्, नायिकायाश्च मदमवबोधयेत् । ततश्च नायकस्य प्रीतिर्हीयेतेति । स एव तु रहसि प्रणयपरिप्लुतः कोमलकोमलैर्हृदयहारिभिः पदैः क्रियमाणो नायकस्य चित्तमावर्जयति, विनयमेव च नायिकायाः प्रकाशयति, साधयति चाभीष्टम्, अभिवर्धयति च नायकस्य प्रेमाणमिति । अत एव कान्तासम्मिततयोपदेशम् आलङ्कारिका बहुमन्यन्ते ॥ १४ ॥

**आवाहे विवाहे यज्ञे गमनं सखीभिः सह गोष्ठीं देवताभिगमनमित्यनुज्ञाता कुर्य्यात् ॥ १५ ॥**

जय ॥ आवाहे वरगृहे। विवाहे कन्यागृहे। गोष्ठीं सम्भूय पानभोजनम्। देवताभिगमनम् द्रष्टुमनुज्ञाता कुर्य्यात्। अन्यथा स्वैरिणीत्याशङ्केत ॥ १५ ॥

शास्त्री ॥ आवाहो वरगृहम्, विवाहो वधूगृहम्; तत्र, यज्ञप्रदेशे च गमनम्, नायकेनानुज्ञातेव कुर्य्यात्। एतानि हि कामुकानां कामिनीसंवीक्षणस्थानानि भवन्तीति। तत्र च विनैवानुज्ञां गता नायकस्य मनसि सन्देहं जनयेत्। देवताभिगमनेऽप्येवम्। सखीभिः सह गोष्ठीं सभां सद्भावस्थानमिति यावत्। एतदप्यननुज्ञाप्य नायकं क्रियमाणमन्यादृशीमेवास्य मनसि कदाचित् सम्भावनां प्रादुर्भावयतीति। स्वैरिण्यो हि विना पत्युरनुज्ञां तत्र तत्र भ्रमन्तीति ॥१५॥

## सर्वक्रीडासु च तदानुलोम्येन प्रवृत्तिः ॥१६॥

जय ॥ सर्वक्रीडासु चेति। यच्चरात्रादिषु लोके प्रवृत्तासु तच्चित्तानुविधानेन प्रवृत्तिः ॥१५॥

शास्त्री ॥ सर्वासु च क्रीडासु नायकस्यानुकूलतयैव प्रवृत्तिः कर्तव्या, नैव पुनः प्रतिकूलतया। प्रातिकूल्यं हि नायकस्य न नायिकायाः श्रेयसे भवति। तद्धि समूलघातमेव विनिहन्ति प्रेमाणमिति ॥१६॥

## पश्चात् संवेशनं पूर्वमुत्थानमनवबोधनं च सुप्तस्य * ॥१७॥

जयः ॥ पश्चात् संवेशनं शयितस्य नायकस्य। पूर्वम् उत्थानम् अनुत्थितान्नायकाद, अहनि यावन्न प्रतिबुध्येत ॥१७॥

---

* तथाचोक्तम्—

सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते।
नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता ॥

शास्त्री ॥ संवेशनं स्वापः। प्राङ् नायके सुप्ते पश्चात् स्वयं स्वप्यात्। पूर्वं हि सुप्तामुदासीनामेष सम्भावयिष्यति, अपरागं च ग्रहीष्यति। पूर्वम् अस्मादुत्तिष्ठेत्। एवं ह्येष दत्तामिमामात्मनः सेवायामाकलयेत् प्रीतश्च स्यादिति। पश्चादुत्थितायां पुनस्तदेतद्विपरीतमेव सम्पद्येत। न चापि सुप्तं नायकमवबोधयेत्। सुप्तो हि प्रतिबोध्यमानः प्रभुत्वावलिप्तामिमां सम्भावयेत्। ततश्च विरक्ततामङ्गीकुर्यादिति ॥ १७ ॥

## महानसं च सुगुप्तं स्याद्दर्शनीयं च ॥१८॥

जय ॥ महानसं सुगुप्तं स्यात्। यथान्योऽत्र परकीयो न विशेत्। दर्शनीयं चान्धकाराभावात् ॥ १८ ॥

शास्त्री ॥ महानसं पाकशाला। तच्च सुतरां गुप्तं रचितं स्याद् यथात्र दुष्टानां दृशो न निपतेयुः। दर्शनीयेन चामुना भवितव्यम्। यत् किल दृष्टमात्रमेवापहरेद् द्रष्टुश्चेतः। अवश्यं ह्यपेक्ष्यते प्रसादो भुञ्जानानाम्। न चैष कुत्सिते चादर्शनीये च महानसे सम्भवति। तदुक्तं दर्शनीयमिति। नायिकायत्तं चास्य दर्शनीयतायापादनम्। तन्नायिकयैतत् सुगुप्तं च दर्शनीयं च कर्त्तव्यमिति। तत एव च नायिकायाः कर्त्तव्येषु कर्मणोऽस्य निर्देशः ॥ १८ ॥

## नायकापचारेषु किञ्चित् कलुषिता नात्यर्थं निर्वदेत् ॥१९॥

जय ॥ नायकापचारेष्विति। नायकापराधेषु। किञ्चित् कलुषिता धीरात्वख्यापनार्थम्। निर्वदेत् पुनर्मा कार्षीरिति। तत्रापि नात्यर्थं मा भूद् वैलक्ष्यमस्येति ॥ १९ ॥

शास्त्री ॥ अथ चेन्नायकोऽपचरति कथं तदा वर्त्तितव्यम्? तदाह—नायकापचारेष्विति। नायकश्चेदपकुर्य्यात् तदात्यल्पमेव

कालुष्यं स्वीकुर्य्यात्, भूयिष्ठं हि तत् स्वीक्रियमाणं कलहमुत्पादयेत्, भञ्जयेच्च प्रणयमिति। न चात्यर्थं निर्वदेत् नातिमात्रं विवदेत। अतिमात्रं हि विवदमानाया नैरपेक्ष्यं सम्भाव्येत। ततश्चास्यां नायकः शिथिलादरो भवतीति ॥ १८ ॥

**साधिक्षेपवचनं त्वेनं मित्रजनमध्यस्थमेकाकिनं वाप्युपालभेत न च मूलकारिका स्यात् ॥२०॥** *

जय ॥ मित्रजनमध्यस्थं यदि कार्य्यवशात् साधिक्षेपवचनम् उपालभेत, न च मूलकारिका स्यात् ॥२०॥

शास्त्री ॥ यदि नायकः साधिक्षेपं ब्रूयात् तदेनं मित्रजनमध्यस्थमुपालभेत दूषयेत्। सुहृदां हि पुरस्तात् विव्रियमाणा दोषा न वैमनस्यं जनयन्ति प्रत्युत तिरोभवन्ति। समाकर्णयन्तो हि दोषान् समुपदिशन्तः सुहृदो वारयन्त्यनुचितात् कर्मण इति। यस्तु मित्रमध्येऽपि दोषप्रकाशनमात्मनो न सहते नैनं तत्रोपालभेत। किं

---

* तथाच महाभारते वनपर्वणि द्रौपदीं प्रति सत्यभामावचनम्—

यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम्।
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥ १२ ॥
उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः सुखम्।
न जातु वशगो भर्त्ता स्त्रियाः स्यान्मन्त्रकर्मणा ॥ १३ ॥
अमित्रप्रहितांश्चापि गदान् परमदारुणान्।
मूलप्रवादैर्हि विषान् प्रयच्छन्ति जिघांसवः ॥ १४ ॥
जिह्वया यानि पुरुषस्त्वचा वाप्युपसेवते।
तत्र चूर्णानि दत्तानि हन्युः क्षिप्रमसंशयम् ॥ १५ ॥
जलोदरसमायुक्ताः श्वित्रिणः पलितास्तथा।
अपुमांसः कृताः स्त्रीभिर्जड़ान्धवधिरास्तथा ॥ १६ ॥
पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत।
न जातु विप्रियं भर्त्तुः स्त्रिया कार्य्यं कथञ्चन ॥ १७ ॥

तर्हि विजन एवेति। तदुक्तम् एकाकिनमिति। साधिक्षेपैः पुनर्वचनैरेतस्यापरागं सम्भावयन्ती न वशीकरणाद्युपायेषु प्रवर्त्तेतेत्याह —न मूलकारिका स्यात्। मूलकारिका मूलकर्मणि प्रवृत्ता। मूलकर्म च वशीकरणम्। न च मणिमन्त्रादिभिरेनं वशीकर्त्तुं प्रयतेतेति। एतद्धि नूनमप्रत्ययकारणमत एव चाश्रेयस्करं भवतीति ॥२०॥

तदाह—

**न ह्यतोऽन्यदप्रत्ययकारणमस्तीति गोनर्दीयः ॥२१॥**

जय॥ न ह्यत इति। मूलकर्मणः। अप्रत्ययकारणम् अविश्वासकारणम्। गोनर्दीयमतमनुमतमप्रतिषिद्धत्वात् ॥ २१ ॥

शास्त्री॥ गोनर्दीयग्रहणं पूजार्थम्। अतो मूलकर्मणोऽन्यत् अप्रत्ययकारणम् अविश्वासजनकं नास्तीति ॥२१॥

अन्यदपि वर्ज्यं निर्दिशति—

**दुर्व्याहृतं दुर्निरीक्षितमन्यतो मन्त्रणं द्वारदेशावस्थानं निरीक्षणं वा निष्कुटेषु मन्त्रणं विविक्तेषु चिरमवस्थानमिति वर्जयेत् ॥२२॥ ***

जयः॥ दुर्व्याहृतं दुर्मन्त्रितम्। दुर्निरीक्षितम् अस्निग्धवीक्षणम्। अन्यतो मन्त्रणं तिर्य्यङ्मुखं कृत्वा भाषणम्। एतत्त्रितयं वैराग्यजनकम्। द्वारदेशावस्थानं गृहद्वारस्थितिः निरीक्षणं च तदुभयम् अयत्नसाध्यत्वसूचकम्। निष्कुटेष्विति। गृहवाटिकायां निर्गत्य कयाचित्

---

* परवेश्मरुचिर्न स्यान्न स्यात् कलहकारिणी।
न च तिष्ठेद् गृहद्वारि न च राम गवाक्षके॥
( विष्णुधर्मोत्तरे २।२४।३० )

सह मन्त्रणम्। विविक्तेषु निर्जनेषु गृहप्रदेशेषु चिरमवस्थानं तदुभय-मसद्दिकल्पजनकं भवेत् ॥ २२ ॥

शास्त्री ॥ दुर्व्याहृतं दुष्टं भाषितम्। दुर्निरीचितं दुष्टम् आलोकनं येन पश्यन्त्या दुराशयकलुषितत्वमभिव्यज्येत। अन्यतो मन्त्रणं नायकभिन्नेन समं मन्त्रकरणम्। एतच्च त्रितयं नायकस्य प्रीतिमपनुदति। द्वारदेशेऽवस्थानं चायत्नसाध्यत्वं नायिकाया अभिव्यञ्जयिष्यतीति। निरीचितमप्येवम्। नार्य्यो हि निपुणं निरीच्यमाणाः कामिनः स्वस्मिन्निमामनुरक्तामाकलयन्तः साधयितुमेनां प्रवर्तन्त इति। निष्कुटा गृहारामाः। तत्र च मन्त्रणमन्यैर्जनैः समं गुप्तपरिभाषणं विजने च चिरमवस्थानं नायिकामन्यथैव सम्भा-वयति। अन्यथा च सम्भावयन्नायकोऽपरक्तो भवतीति ॥ २२ ॥

स्वेददन्तपङ्कदुर्गन्धांश्च बुध्येतेति * विरागकार-णम् ॥२३॥

जय ॥ स्वेदेति। स्वेदादीन् बुध्येतापनयनार्थम्। दन्तपङ्को दन्तमलः। विरागकारणमिति वैराग्यजनकं भवेद् भर्त्तुः ॥ २२ ॥

शास्त्री ॥ आत्मनश्च गात्रगतं स्वेदं दन्तपङ्कं दुर्गन्धं चाव-बुध्येत। अवबुध्यमाना च निराकुर्य्यात्। स्वेदादयो हि विरागकारणं भवन्तीति। एतैर्हि मलीमसां चानुपगमनीयां चैनां नायकः सम्भावयतीति ॥२३॥

बहुभूषणं विविधकुसुमानुलेपनं विविधाङ्गराग-समुज्ज्वलं वास इत्याभिगामिको वेषः ॥२४॥ प्रतनु-श्लक्ष्णाल्पदुकूलता परिमितमाभरणं सुगन्धिता नात्युल्बण-

---

* तैतद्वि—शास्त्रिधृतः पाठः।

तर्हि विजन एवेति। तदुक्तम् एकाकिनमिति। साधिक्षेपैः पुनर्वचनैरेतस्यापरागं सम्भावयन्ती न वशीकरणादुपायेषु प्रवर्त्ततेत्याह —न मूलकारिका स्यात्। मूलकारिका मूलकर्मणि प्रवृत्ता। मूलकर्म च वशीकरणम्। न च मणिमन्त्रादिभिरेनं वशीकर्त्तुं प्रयतेतेति। एतद्धि नूनमप्रत्ययकारणमत एव चाश्रेयस्करं भवतीति ॥२०॥

तदाह—

**न ह्यतोऽन्यदप्रत्ययकारणमस्तीति गोनर्दीयः ॥२१॥**

जय॥ न ह्यत इति। मूलकर्मणः। अप्रत्ययकारणम् अविश्वासकारणम्। गोनर्दीयमतमनुमतमप्रतिषिद्धत्वात् ॥ २१ ॥

शास्त्री॥ गोनर्दीयग्रहणं पूजार्थम्। अतो मूलकर्मणोऽन्यत् अप्रत्ययकारणम् अविश्वासजनकं नास्तीति ॥२१॥

अन्यदपि वर्ज्यं निर्दिशति—

**दुर्व्याहृतं दुर्निरीक्षितमन्यतो मन्त्रणं द्वारदेशावस्थानं निरीक्षणं वा निष्कुटेषु मन्त्रणं विविक्तेषु चिरमवस्थानमिति वर्जयेत् ॥२२॥ ***

जयः॥ दुर्व्याहृतं दुर्मन्त्रितम्। दुर्निरीक्षितम् अस्निग्धवीक्षणम्। अन्यतो मन्त्रणं तिर्य्यङ्मुखं कृत्वा भाषणम्। एतत्त्रितयं वैराग्यजनकम्। द्वारदेशावस्थानं गृहद्वारस्थितिः निरीक्षणं च तदुभयम् अयत्नसाध्यत्वसूचकम्। निष्कुटेष्विति। गृहवाटिकायां निर्गत्य कयाचित्

---

* परवेश्मरुचिर्न स्यान्न स्यात् कलहकारिणी।
न च तिष्ठेद् गृहद्वारि न च राम गवाक्षके॥
( विष्णुधर्मोत्तरे २।३४।३० )

सह मन्त्रणम्। विविक्तेषु निर्जनेषु गृहप्रदेशेषु चिरमवस्थानं तदुभय-मसद्विकल्पजनकं भवेत् ॥ २२ ॥

शास्त्री ॥ दुर्व्याहृतं दुष्टं भाषितम्। दुर्निरीक्षितं दुष्टम् आलोकनं येन पश्यन्त्या दुराशयकलुषितत्वमभिव्यज्येत। अन्यतो मन्त्रणं नायकभिन्नेन समं मन्त्रकरणम्। एतच्च त्रितयं नायकस्य प्रीतिमपनुदति। द्वारदेशेऽवस्थानं चायत्नसाध्यत्वं नायिकाया अभिव्यञ्जयिष्यतीति। निरीक्षितमप्येवम्। नार्य्यो हि निपुणं निरीक्ष्यमाणाः कामिनः स्वस्मिन्निमामनुरक्तामाकलयन्तः साधयितुमेनां प्रवर्तन्त इति। निष्कुटा गृहारामाः। तत्र च मन्त्रणमन्यैर्जनैः समं गुप्तपरिभाषणं विजने च चिरमवस्थानं नायिकामन्यथैव सम्भा-वयति। अन्यथा च सम्भावयन्नायकोऽपरक्तो भवतीति ॥ २२ ॥

स्वेदद‌न्तपङ्कदुर्गन्धांश्च बुध्येतेति * विरागकार-णम् ॥२३॥

जय ॥ स्वेदेति। स्वेदादीन् बुध्येतापनयनार्थम्। दन्तपङ्को दन्तमलः। विरागकारणमिति वैराग्यजनकं भवेद् भर्त्तुः ॥ २२ ॥

शास्त्री ॥ आत्मनश्च गात्रगतं स्वेदं दन्तपङ्कं दुर्गन्धं चाव-बुध्येत। अवबुध्यमाना च निराकुर्य्यात्। स्वेदादयो हि विरागकारणं भवन्तीति। एतैर्हि मलीमसां चानुपगमनीयां चैनां नायकः सम्भावयतीति ॥२३॥

बहुभूषणं विविधकुसुमानुलेपनं विविधाङ्गराग-समुज्ज्वलं वास इत्याभिगामिको वेषः ॥२४॥ प्रतनु-श्लक्ष्णाल्पदुकूलता परिमितमाभरणं सुगन्धिता नात्युल्बण-

* नैतद्धि—शास्त्रिधृतः पाठः।

मनुलेपनं तथा शुक्लान्यन्यानि पुष्पाणीति वैहारिको वेषः ॥२५॥

जय ॥ नानावर्णं कालवशाद् यद् यद् विराजते वर्णतस्तत्तदुपादेयमिति। आभिगामिको नायकाभिगमनप्रयोजनकः। तदा हि बहुभूषणादिभिः कालौपयिकेन च रक्तवाससा प्रसाधिता मनोहरेति। प्रतनु श्लक्ष्णम् अल्पं सूक्ष्मं यत् संयन्तुं शक्यं वस्त्रम्। परिमितं कर्णयोर्ग्रीवायां च। नातुग्रवतं वर्णविन्यासाभ्यां चेति। वैहारिको यात्राक्रीडाविहारप्रयोजनकः ॥२४।२५॥

शास्त्री ॥ आभिगामिको नायकाभिगमनकालिकः। वैहारिकश्च विहारकालिकः। एवंविधो हि कालोचितवेषो नायकस्य मनसि प्रीतिमुपजनयतीति। दिङ्मात्रं चेदम्। यथा यथा नायकः प्रीयते तथा तथा वेषमासेवेतेति। न ह्येषोऽस्ति नियमो यदमुनैवामुकः प्रीयेतेति। विलक्षणा हि नायकानां स्वभावाः सन्दृश्यन्ते। तत् तदीयां रुचिमवबुध्यैव वेषं प्रयुञ्जीत। प्रायेण चैष हृदयहारी भवतीति निर्दिष्टः ॥२४।२५॥

नायकस्य व्रतमुपवासं च स्वयमपि करणेनानुवर्तेत। वारितायाश्च* नाहमत्र निर्बन्धनीयेति तद्वचसो निवर्तनम् ॥२६॥

जय ॥ व्रतं नियमं स्वयम् अनुकरणेनानुवर्तेत भक्तिख्यापनार्थम्। वारितायां नायकेन व्रतोपवासाभ्याम्। नाहमत्र निर्बन्धनीया निषेधनीया इति वाक्येन नायकवचसो निवर्तनं भक्तेर्नाव्यार्थम् ॥२६॥

शास्त्री ॥ नायककृतानां हि व्रतानामनुवृत्तिरनुकूलयति नायकं

* 'वारितायाश्च' इति पाठान्तरम्।

प्रणयं चास्य समेधयति। एवं ह्यात्मैकजीवितामयमिमां सम्भावयतीति ॥२६॥

**मृद्विदलकाष्ठचर्मलोहभाण्डानां काले समर्घ-ग्रहणम् ॥२७॥**

जय॥ मृद्भाण्डं घटादि। विदलभाण्डं पिटकादि। काष्ठ-भाण्डं पीठखट्वादि। लोहभाण्डं ताम्रादिमयम्। काले ह्रतुप्रयोगकाले। तत्रापि यत् समर्घं प्राप्यते॥ २७॥

शास्त्री॥ भाण्डपदं च मृदादिभिः प्रत्येकं सम्बध्यते। द्वन्द्वान्ते हि श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति। विदलं वेत्रादि। काले ग्रहणोचिते समये न तूपयोगकाले। उपयोगकाले हि गृह्यमाणान्येतानि न हि समर्घतया ग्रहीतुं शक्यानीति। संग्रहकाले पुनः संगृह्यमाणान्येतानि समर्घतया लभ्यन्ते। स एव चैतेषां ग्रहणकालो यदेतानि भूयांस्येव विक्रयार्थं विक्रेतृभिरानीयन्ते। तदा च समर्घं यथा तथैतेषां ग्रहणं कुर्य्यात् ॥२७॥

**तथा लवणस्नेहयोश्च गन्धद्रव्यकटुकभाण्डौषधानां च दुर्लभानां भवनेषु प्रच्छन्नं निधानम् ॥२८॥**

जय॥ लवणम् सैन्धवादि। स्नेहा घृततैलवसामज्जानः। गन्धद्रव्यं तगरादि। कटुकं तुम्बयादि। औषधं द्विपञ्चमूलादि। दुर्लभा ये न तत्रत्या अपि तु दुःखेन लभ्यन्ते। प्रच्छन्नं निधानं यत्र तानि भवन्ति, न विनश्यन्ति वा।

शास्त्री॥ लवणं सैन्धवादि, स्नेहा घृततैलादयः। गन्धद्रव्याणि कस्तूर्य्यादीनि। कटुकभाण्डानि तुम्बीपात्रादीनि। औषधानि प्रसिद्धानि। एतेषां भवने प्रच्छन्नम् अप्रकाशं निधानम्। अप्रच्छन्ने हि प्रदेशे निहितान्येतानि शीतलसमीरसम्पर्कादिना विक्रियन्ते.

ततश्चानुपयुक्तानि भवन्तीति। अप्रच्छन्नं च निहिताः कर्पूरादयः स्वयमेव विनश्यन्तीति च सन्दृश्यते। तत उक्तं प्रच्छन्नं निधानमिति॥

**मूलकालुकपालङ्कीदमनकाम्रातकैर्वारुकत्रपुसवार्त्ताककूष्माण्डालाबुसूरणशुकनासास्वयंगुप्तातिलपर्णिकाग्निमन्थलशुनपलाण्डुप्रभृतीनां सर्वौषधीनां च बीजग्रहणं काले वापश्च ॥२९॥**

जय॥ मूलकादीनां च बीजग्रहणमिति सम्बन्धः। एर्वारुकः कर्कटिका। अलाबुस्तुम्बी। सूरणः कन्दः। शुकनासा सर्वतोभद्रा। स्वयंगुप्ता कपिकच्छूः। तिलपर्णिका काश्मरी। अग्निमन्थोऽनेनैव नाम्ना प्रथितः। पलाण्डुर्लशुनाकारो लोहितः॥२९॥

शास्त्री॥ मूलकादीनां बीजानि काले गृह्णीयात् काले च तानि क्षेत्रे वापयेत्। काले हि संगृह्यमाणानि बीजान्यङ्कुरग्रहणे सम्यक् क्षमन्त इति। काले चोप्तान्येवम्। काल इति काकाक्षिगोलकवदुभयत्र सम्बध्यते॥२९॥

**स्वयं च सारस्य परेभ्योऽनाख्यानं भर्त्तृमन्त्रितस्य च ॥३०॥**

जय॥ सारस्य द्रव्यस्य परेभ्यो नाख्यानं "धनायुषी गुप्ततमे कार्ये" इति वचनात्। भर्त्तृमन्त्रितस्य च नाख्यानं मा ज्ञासीद्भिन्नरहस्येति॥ ३०॥

शास्त्री॥ आत्मनः सारस्य द्रव्यादेः परेभ्योऽनाख्यानम्। नात्मनः सारं परेभ्य आचक्षीतैतावन्मे द्रव्यमेतावत् सामर्थ्यम् इति। आख्यातं ह्येतद् विद्वेषिणामुपकाराय स्वस्य च हानये प्रकल्पत इति। एवं भर्त्तुरपि गुप्तं परिभाषणं नान्यस्मै समाचक्षीत। एतद्धि समाख्यायमानं पत्युरनुरागं निरासयतीति॥३०॥

**समानाश्च स्त्रियः कौशलेनोज्ज्वलतया पाकेन मानेन तथोपचारैरतिशयीत ॥३१॥**

जय ॥ समानास्तुल्याभिजनाः। कौशलेन कलासु। मानेन मनस्वितया। उपचारैः भर्तरि क्रियमाणैरुपचारैरतिशयीतात्मनोऽधिकत्वख्यापनार्थम् ॥३१॥

शास्त्री। समाना आत्मनस्तुल्याः स्त्रियोऽतिशयीत। ताभ्यः सुष्ठुतममात्मानं कुर्यात्। केन केनेत्याह कौशलेनेत्यादि। कौशलेनातिशयीत तदपेक्षया समधिकमात्मनः कौशलं प्रकाशयेत्। उज्ज्वलतमं चात्मानं कुर्य्यात्। यादृशश्च ताभिः पाको निष्पाद्यते ततः स्वादिष्ठं स्वयं निष्पादयेत्। मानं च तदपेक्षया भूयिष्ठमात्मनः प्रदर्शयेत्। यादृशो वा भर्तरि प्रयुज्यते बहुमान एताभिस्तदपेक्षयातिमात्रमेव स्वयं प्रयुञ्जीत। उपचारानपि भर्तर्य्येवमिति। एवं हि प्रीतस्य भर्तुर्नान्यत्र मनः संक्रामतीति ॥३१॥

**सांवत्सरिकमायं संख्याय तदनुरूपं व्ययं कुर्य्यात् ॥३२॥**

जय ॥ संख्यायेति। आ मुखाद् वर्षेणैतावदुत्पद्यत इति व्ययं कुर्यात्। तदनुरूपम् आयानुरूपं कालयापनार्थम् ॥३२॥

शास्त्री ॥ एतेन चायव्ययपर्याप्तं नारीणामध्ययनमावश्यकमिति प्रतीयते। स्मर्यते चैवं मुनिभिः—"अर्थस्य संग्रहे चैनां नियुञ्जीत व्यये तथा" [मनु ९।११] इति। आयानुरूपं च व्ययं कुर्यान्न त्वभ्यधिकम्। स हि नैर्धन्याय कल्पत इति। स्मृतिकृतोऽप्याहुः—"व्यये चामुक्तहस्तया" [मनु ५।१५०] इति। स्त्रिया भाव्यमिति सम्बध्यते। "आयादल्पतरो व्ययः" * इति चार्थशास्त्रकृतां वचनम् ॥ ३२ ॥

---

* सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥

ततश्चानुपयुक्तानि भवन्तीति। अप्रच्छन्नं च निहिताः कर्पूरादयः स्वयमेव विनश्यन्तीति च सन्दृश्यते। तत उक्तं प्रच्छन्नं निधानमिति॥

**मूलकालुकपालङ्कीदमनकाम्रातकैर्वारुकत्रपुस-वार्त्ताककूष्माण्डालाबुसूरणशुकनासास्वयंगुप्तातिलपर्णि-काग्निमन्थलशुनपलाण्डुप्रभृतीनां सर्वौषधीनां च बीजग्रहणं काले वापश्च ॥२९॥**

जय ॥ मूलकादीनां च बीजग्रहणमिति सम्बन्धः। एर्वारुकः कर्कटिका। अलाबुस्तुम्बी। सूरणः कन्दः। शुकनासा सर्वतोभद्रा। स्वयंगुप्ता कपिकच्छूः। तिलपर्णिका काश्मरी। अग्निमन्थोऽनेनैव नाम्ना प्रथितः। पलाण्डुर्लशुनाकारो लोहितः ॥२९॥

शास्त्री ॥ मूलकादीनां बीजानि काले गृह्णीयात् काले च तानि क्षेत्रे वापयेत्। काले हि संगृह्यमाणानि बीजान्यङ्कुरग्रहणे सम्यक् क्षमन्त इति। काले चोप्तान्येवम्। काल इति काकाक्षिगोलकवदुभयत्र सम्बध्यते ॥२९॥

**स्वयं च सारस्य परेभ्योऽनाख्यानं भर्त्तृमन्त्रि-तस्य च ॥३०॥**

जय ॥ सारस्य द्रव्यस्य परेभ्यो नाख्यानं "धनायुषी गुप्ततमे कार्ये" इति वचनात्। भर्त्तृमन्त्रितस्य च नाख्यानं मा न्नासोद्भिन्न-रहस्येति ॥ ३० ॥

शास्त्री ॥ आत्मनः सारस्य द्रव्यादेः परेभ्योऽनाख्यानम्। नात्मनः सारं परेभ्य आचक्षीतैतावन्मे द्रव्यमेतावत् सामर्थ्यम् इति। आख्यातं ह्येतद् विद्वेषिणामुपकाराय स्वस्य च हानये प्रकल्पत इति। एवं भर्त्तुरपि गुप्तं परिभाषणं नान्यस्मै समाचक्षीत। एतद्धि समाख्याय-मानं पत्युरनुरागं निरासयतीति ॥३०॥

**समानाश्च स्त्रियः कौशलेनोज्ज्वलतया पाकेन मानेन तथोपचारैरतिशयीत ॥३१॥**

जय ॥ समानास्तुल्याभिजनाः। कौशलेन कलासु। मानेन मनस्वितया। उपचारैः भर्तरि क्रियमाणैरुपचारैरतिशयीतात्मनोऽधिकत्वख्यापनार्थम् ॥३१॥

शास्त्री। समाना आत्मनस्तुल्याः स्त्रियोऽतिशयीत। ताभ्यः सुष्ठुतममात्मानं कुर्यात्। केन केनेत्याह कौशलेनेत्यादि। कौशलेनातिशयीत तदपेक्षया समधिकमात्मनः कौशलं प्रकाशयेत्। उज्ज्वलतमं चात्मानं कुर्य्यात्। यादृशश्च ताभिः पाको निष्पाद्यते ततः स्वादिष्ठं स्वयं निष्पादयेत्। मानं च तदपेक्षया भूयिष्ठमात्मनः प्रदर्शयेत्। यादृशो वा भर्तरि प्रयुज्यते बहुमान एताभिस्तदपेक्षयातिमात्रमेव स्वयं प्रयुञ्जीत। उपचारानपि भर्तर्य्येवमिति। एवं हि प्रीतस्य भर्तुर्नान्यत्र मनः संक्रामतीति ॥३१॥

**सांवत्सरिकमायं संख्याय तदनुरूपं व्ययं कुर्य्यात् ॥३२॥**

जय ॥ संख्यायेति। आ मुखाद् वर्षेणैतावदुत्पद्यत इति व्ययं कुर्यात्। तदनुरूपम् आयानुरूपं कालयापनार्थम् ॥३२॥

शास्त्री ॥ एतेन चायव्ययपर्याप्तं नारीणामध्ययनमावश्यकमिति प्रतीयते। स्मर्यते चैवं मुनिभिः—"अर्थस्य संग्रहे चैनां नियुञ्जीत व्यये तथा" [मनु ९।११] इति। आयानुरूपं च व्ययं कुर्यान्न लभ्याधिकम्। स हि नैर्धन्याय कल्पत इति। स्मृतिकृतोऽप्याहुः—"व्यये चामुक्तहस्तया" [मनु ५।१५०] इति। स्त्रिया भाव्यमिति सम्बध्यते। "आयादल्पतरो व्ययः" * इति चार्थशास्त्रकृतां वचनम् ॥ ३२ ॥

---

* सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥

भोजनावशिष्टाद् गोरसात् सारग्रहणं * तथा तैल-गुडयोः, कार्पासस्य च सूत्रकर्त्तनम्, सूत्रस्य वानम्, शिक्यरज्जुपाशवल्कलसंग्रहणम्, कुट्टनकण्डनावेक्षणम्, आचाममण्डतुषकणकुट्यङ्गाराणामुपयोजनम्, भृत्य-वेतनभरणज्ञानम्, वाहनविधियोगाः, मेषकुक्कुटलावक-शुकसारिकापरभृतमयूरवानरमृगाणामवेक्षणम् दैवसि-कायव्ययपिण्डीकरणमिति च विद्यात् ॥३३॥

जय ॥ सारग्रहणमिति। यज्ञादिषु ब्राह्मणान् भोजयित्वा भोजयित्वा यदवशिष्टं तस्मात् सारग्रहणम्, मथितं चापरं भवति। तैलगुडयोः सारग्रहणं सर्षपेक्षुकाण्डपीडनात्। कार्पासस्य सूत्रकरणम्। वानमाच्छादनार्थम् शिक्यस्य भाण्डारोपणार्थम्। रज्ज्वा जलोद्धर-णार्थम्। पाशस्य पशुबन्धनार्थम्। वल्कलस्य रज्ज्वाद्यर्थं संग्रहणम्। कुट्टनं धान्यानाम्। कण्डनं तण्डुलानाम्। तयोरवेक्षणं परीक्षणम्। आयामस्य मण्डस्य च पानार्थं चेटिकादिषूपयोजनम्। तुषाणां धारणं कुण्डलेपनादिषु। कणानां क्षुद्रतण्डुलानां कुक्कुटाद्यर्थम्। कुटीनां तण्डुलपरागाणां गोमेषाद्यर्थम्। अङ्गाराणां महानसादुत्-पन्नानां लोहभाण्डकरणादिषु। भृत्या ये बहिरन्तःकर्मसु नियुक्ताः तेषां वेतनं प्रतिमासं प्रतिवर्षं वा यो निबन्धः। भरणं प्रतिदिनं भक्तकं तयोर्ज्ञानं देशकालकर्मवशेन। कृषिपशुपालनचिन्तेति। कर्षणवपनरोपणादिप्रत्यवेक्षणं कृषिचिन्ता। मुष्टिव्याधिचिकित्साद्य-नुष्ठानचिन्ता पशुपालनचिन्ता। वाहनविधानयोगा अश्वादीनां विधानयोजनम्। मेषादीनां क्रीडनार्थं नायकपरिगृहीतानामवेक्षण-

---

* 'घृतकरणम्' इति शास्त्रिधृतः पाठः।

मशनपानरक्षणैः। प्रत्यहायव्ययस्य पिण्डीकरणमेकीकरणमिति। विद्यादिति सारग्रहणादि ॥ ३२ ॥

शास्त्री ॥ विद्यान्नायिका जानीयात्। किं तत्? भोजनावशिष्टाद् गोरसाद् घृतकरणम्, भोजन उपयुज्य योऽवशिष्यते गोरसस्तस्य घृतकरणं जानीयात्। तैलगुडयोश्च करणमित्यनुवर्तते। भोजनावशिष्टादिति निवृत्तम्। तैलगुडयोश्च निष्पादनविधिं जानीयादित्यर्थः। कार्पासस्य सूत्रनिर्माणं निर्मितानां च सूत्राणां वसननिर्माणं शिक्यादीनां संग्रहणं धान्यानां कुट्टनकण्डनाद्यवेक्षणं च जानीयात्। अविज्ञाते ह्यवेक्षणे तत्र नियुक्ता दासा दास्यश्च प्रतार्य्य हानिं जनयन्तीति। आचामा आचमनोचितानि द्रव्याणि। मण्डः पेयानि। तेषां चेटचेट्यादीनां पानादिषूपयोजनम्। एवं ह्युपयुक्तैरेतैश्चेटाः प्रसीदन्ति अनुपयुक्तानि पुनरेतानि नान्यत्रोपयोक्तुं शक्यन्ते इति। तुषाणां रन्धनादिकर्मसूपयोजनम्। कणा धान्यानाम्। कुट्यस्तण्डुलादिपरागाः। अङ्गाराः प्रशान्तदग्धकाष्ठशकलानि। भृत्यानां वेतनस्य पोषणस्य ज्ञानोपायं जानीयात्। कृषिविषयिणी पशुपालनविषयिणी च चिन्ता। अतः परं निखिलमपीतिना सम्बध्यते। तत एव च न द्वितीया 'क्रमादमुं नारद इत्यबोधि सः' इतिवत्। वाहनविधेर्योगाः प्रकाराः। मेषादीनामवेक्षणम्। दैवसिकस्य दिवसे निष्पन्नस्य आयस्य व्ययस्य पिण्डीकरणमेकीकरणम् इत्येतद्विद्यात्। एतच्च प्रत्याययत्यार्य्याणां नारीणां सदनकर्मसु दाक्ष्यं च बुद्धिपाटवं च वैदुष्यं चेति ॥ ३२ ॥

**तज्जघन्यानां च जीर्णवाससां सञ्चयस्तैर्विविधरागैः शुद्धैर्वा कृतकर्मणां परिचारकाणामनुग्रहो मानार्थेषु च दानमन्यत्र वोपयोगः ॥३४॥**

जय ॥ तज्जघन्यानामिति। नायकोपभुक्तानाम्। तैः सञ्चितैः।

कृतकर्मणामिति यैः कर्म कृतम्। मानार्थेषु चेति। मान एवार्थो येषाम्। ते हि तैर्दत्तैर्मानिता भवन्ति। अन्यत्र वेति दीपवर्त्यादिषु॥

शास्त्री॥ तज्जघन्यानां नायकपरिहितानां जीर्णानां वाससां संग्रहस्तैश्च नानाविधे रागे रञ्जितैः शुद्धैर्निर्णिज्य शोधितैर्वा कृतकर्मणामनुष्ठितादेशानां सेवकानामनुग्रहः। तत्प्रदानेन परिचारकाननुगृह्णीयादिति भावः। परिचारकाणां बहुमानकर्मणि वा तानुपयुञ्जीत। अन्यत्र वा वर्तिकादिष्विति॥ ३४॥

**सुराकुम्भीनामासवकुम्भीनां च स्थापनं तदुपयोगः क्रयविक्रयायव्ययावेक्षणम्॥३५॥**

जय॥ स्थापनमिति प्रच्छन्नम्। तदुपयोग इति। कार्य्यवशात् सुरादीनामुपयोजनम्। क्रयविक्रयौ समर्घमहार्घतया। आयव्ययावल्पमहत्तयावेक्षेत॥ ३५॥

शास्त्री॥ एतच्च तासामेव या न ब्राह्मण्यो भवन्ति। सर्वथा हि सुरा प्रतिषिद्धा ब्राह्मणानामिति। स्पर्शोऽप्यस्या निषिध्यते॥३५॥

अथ नायकस्य मित्रादिषु प्रतिपत्तिमाचष्टे—

**नायकमित्राणां च स्रगनुलेपनताम्बूलदानैः पूजनं न्यायतः॥३६॥ * श्वश्रूश्वशुरपरिचर्या तत्पारतन्त्र्यमनुत्तरवादिता परिमिताप्रचण्डालापकरणमनुच्चैर्हासः॥३७॥ तत्प्रियाप्रियेषु स्वप्रियाप्रियेष्विव वृत्तिः।**

---

* एतत् सर्वमभिसन्धाय कविकुलचूडामणिनोक्तम्—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥

**भोगेष्वनुत्सेकः ॥३९॥ परिजने दाक्षिण्यम् ॥४०॥ नायकस्यानिवेद्य न कस्मैचिद्दानम् ॥४१॥ स्वकर्मसु भृत्यजननियमनमुत्सवेषु चास्य पूजनमित्येकचारिणीवृत्तम् ॥४२॥**

जय ॥ न्यायत इति। गुणजातिवयोऽपेक्षया। पूजनं स्वीकरणार्थं परिचयधर्मार्थं भक्तिख्यापनार्थं च। तत्पारतन्त्र्यं तद्वचनानुष्ठानात्। अनुत्तरवादिता तयोः प्रत्युत्तरं न देयम्। परिमिताप्रचण्डालापकरणमिति। तयोरग्रतः स्वल्पं च मृदु च ब्रूयात्। अनुच्चैर्हासस्तत्समीपे। तत्प्रियाप्रियेष्विति। तयोरिष्टानिष्टेषु स्वप्रियाप्रियेष्विव वृत्तिर्यथात्मनः प्रियाप्रियौ भवतः। भोगेषु महत्स्वपि सत्स्वनुत्सेको लाघवपरिहारार्थं चित्तविकारो न कर्तव्यः। परिजने नायकस्य सर्वदा दाक्षिण्यमुपसंग्रहार्थम्। अनिवेद्य न कस्मैचिद्दानम् सपुत्राया अपि स्वातन्त्र्यपरिहारार्थम्। स्वकर्मस्विति। यो यत्र नियुक्तस्तत्र तस्य नियमनं कर्मानतिपातनार्थम्। अस्येति भृत्यजनस्य। पूजनं पानभोजनादिना ॥ ३५—४२ ॥

शास्त्री। नायकस्य मित्रादीनां स्रगादिदानैर्बहुमाननम्, तच्च न्यायतो योग्यतानुरूपमित्यर्थः। किं च यन्न्यायतस्तदेव पूजनमेषां कुर्याद् यत् पुनस्तद्विरोधि नैतदाचरेत्। भवन्ति किल दुराशयान्यपि कियन्तिचिन्मित्राणि न च तेषां पूजनं न्याय्यम्। ततश्च नैतत् कुर्यात्। सर्वमपि वा यथानुरूपं पत्युः समक्षं क्रियमाणं न दुष्यतीति। श्वश्रूश्वशुरयोः परिचर्य्या। ताभ्यां पारतन्त्र्यम्। तदधीनत्वम्। वदतोरप्यनयोरनुत्तरवादित्वम्। परिमितस्याप्रचण्डस्य चालापस्य करणमनुच्चैर्हसनम्। तयोश्च प्रियेष्वप्रियेषु चात्मनः प्रियेष्वप्रियेष्विव च वर्तनम्। भोगेषु सत्स्वप्यनुत्सेकः। परिजनेषु दाक्षिण्यं सारल्यमौदार्य्यं च। अनावेद्य नायके कस्मैचिदप्यप्रदानम्। भृत्यानां

च स्वेषु स्वेषु कर्मसु विनियोजनं तेषामेव चोत्सवेषु बहुमाननमित्येकचारिण्या वृत्तम् ।

शक्यं किलैतावतावबोद्धुं प्रियपाठकमहाभागैः कीदृशं प्राचीने समये नारीणां वृत्तं च गौरवं चाधिकारजातं चेति । एवं किल वर्तमाना साध्वी नूनं साधयेदेव सम्यग् लोकहितयम् ।

एकचारिण्याः सन्निहिते नायके वृत्तमुक्तम्, प्रोषिते तु तद्वृत्तशेषभूता प्रवासचर्यारभ्यते—

**प्रवासे च मङ्गलमात्राभरणा देवतोपवासपरा वार्तायां स्थिता गृहानवेक्षेत ॥४३॥**

जय ॥ प्रवासे चेति । मङ्गलमात्रम् आभरणं शङ्खवलयादिकं यस्याः । नायकाभिवृद्धये देवतामुद्दिश्य य उपवासस्तत्परा । परग्रहणं कादाचित्कत्वनिवृत्त्यर्थम् । वार्त्तायां स्थितेति । नायकवार्त्तान्वेषणपरेत्यर्थः । गृहानवेक्षेतेति तात्स्थ्यात् कर्माण्याह ॥४३॥

**शय्या च गुरुजनमूले ॥४४॥ तदभिमता कार्य्यनिष्पत्तिः ॥४५॥ नायकाभिमतानां चार्थानामर्जने प्रतिसंस्कारे च यत्नः ॥४६॥**

जय ॥ गुरुजनमूल इति । श्वश्रूजनसमीपे शयनमात्मविशुद्ध्यर्थम् । तदभिमतेति । गुरुजनाभिमतस्य कार्य्यस्यानुष्ठानमानुकूल्यख्यापनार्थम् । अर्जने प्रयत्न इति । नायकस्य येऽभिमता न च तेनापवर्जितास्तेषाम् ॥ ४४-४६ ॥

**नित्यनैमित्तिकेषु कर्मसूचितो व्ययः ॥४७॥ तदारब्धानां च कर्मणां समापने मतिः ॥४८॥**

जय ॥ नित्यं कर्माशनपानादि, नैमित्तिकं कर्म बालकोत्सवादि ।

उचितो व्ययो यावता विधिः सम्पद्यते, नायककल्पितो वा तदारब्धाना-मिति। नायकारब्धानां देवकुलोद्यानादिकर्मणां समापने मतिः। येन प्रकारेण निष्पद्यते तथा कार्य्यमित्यर्थः॥ ४७-४८॥

**ज्ञातिकुलस्यानभिगमनमन्यत्र व्यसनोत्सवाभ्याम् ॥४९॥ तत्रापि नायकपरिजनाधिष्ठिताया नातिकालमवस्थानमपरिवर्त्तितप्रवासवेषता च ॥५०॥**

जय॥ ज्ञातिकुलस्य पितृगृहस्य। अनभिगमनं कारणं विना। तद्गमनं हि विनाशकारणं स्त्रीणाम्। कस्यचिद् व्यसने पुत्त्रशोकादौ उत्सवे विवाहादौ यातव्यम्। नायकपरिजनाधिष्ठिताया गमनमात्म-विशुद्ध्यर्थम्। नातिकालमवस्थानमिति। नातिचिरकालमवस्थानं श्वशुरकोपभयात्। अपरिवर्त्तितप्रवासवेषता चेल्लुत्सवमधिकृत्येदं वचनम्॥ ४९-५०॥

**गुरुजनानुज्ञातानां करणमुपवासानाम् ॥५१॥ परिचारकैः शुचिभिराज्ञाधिष्ठितैरनुमतेन क्रयविक्रय-कर्मणा सारस्यापूरणं तनूकरणं च शक्त्या व्यायानाम् ॥५२॥**

जय॥ गुरुजनानुज्ञातानां करणं स्वातन्त्र्यपरिहारार्थम्। शुचिभिरिति। अर्थोपधाशुद्धैरात्माधिष्ठितैर्न स्वतन्त्रैः। अनुमतेन युक्तेन क्रयविक्रयकर्मणेति। वणिज्याधर्मेण सारस्यापूरणं द्रव्यस्याभि-वर्धनम्। तनूकरणं चेति कृशीकरणम्। शक्त्या व्ययानामिति। कार्य्य-वशाद् यदि व्ययस्य महत्ता स्यात्तदा कृशं सारं कुर्य्यादित्यर्थः॥५२॥

**आगते च प्रकृतिस्थाया एव प्रथमतो दर्शनम्, दैवतपूजनम्, उपहाराणां चाहरणमिति प्रवास-चर्य्या ॥५३॥**

जय ॥ आगते चेति। प्रवासात् प्रत्यागते नायके। प्रकृतिस्थाया इति। प्रवासवेषस्थाया एव प्रथमतो दर्शनं स्यात् स्वरूपख्यापनार्थं न पुनरागत इत्यात्मानं प्रसाधयेत्। देवतापूजनं सह परिजनेन। उपहाराणामुपयाचितकानाम्। आहरणं दानं देवताभ्यः ॥५३॥

प्रकरणद्वयोपसंग्रहार्थमाह—

भवतश्चात्र श्लोकौ—

सद्वृत्तमनुवर्त्तेत नायकस्य हितैषिणी।
कुलयोषा पुनर्भूर्वा वेश्या वाप्येकचारिणी ॥५४॥
धर्ममर्थं तथा कामं लभन्ते स्थानमेव च।
निःसपत्नं च भर्त्तारं नार्य्यः सद्वृत्तमाश्रिताः ॥५५॥

इति श्रीवात्स्यायनीये कामसूत्रे भार्य्याधिकारिके चतुर्थेऽधिकरणे एकचारिणीवृत्तं प्रवासचर्य्या च प्रथमोऽध्यायः ॥

---

जय ॥ सदिति शोभनं वृत्तं प्रत्यक्षे प्रोषिते च यदुक्तम्। हितैषिणी न कपटेनानुवर्त्तनमिति दर्शनार्थम्। अस्मिन् वृत्ते नायिकात्रयमधिकृत्याह—कुलयोषेति। कन्यैवोढा कुलयोषिदित्युच्यते। वृत्तानुवर्त्तने फलमाह—धर्ममिति। स्थानं प्रतिष्ठानम्। निःसपत्नं निष्कण्टकम् ॥ ५४-५५ ॥

इति प्रवासचर्चा त्रयस्त्रिंशं प्रकरणम्।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधायां भार्य्याधिकारिके चतुर्थेऽधिकरणे एकचारिणीवृत्तं प्रवासचर्चा च प्रथमोऽध्यायः ॥

---

## समालोचनम्

श्रीमद्भगवद्गीता। श्रीशङ्करभगवत्पादविरचितेन भाष्येण सहिता। श्रीमता दिनकरविष्णुगोखेल बी, ए महोदयेन संस्कृता। पुण्यपत्तनस्थ-ओरियेण्टाल् बुक् एजेन्सी संस्थया प्रकाशिता। (Oriental Book Agency, Shukrawara Peth, Poona) मूल्यं रूप्यकद्वितयम्।

यद्यपि श्रीमद्भगवद्गीता सादरं सश्रद्धं सभक्त्यशेषं च कण्ठे क्रियते चानुशील्यते च प्रतिदिनमेव धर्मपरायणैरार्य्यैः, यद्यपि श्रीमच्छङ्कराचार्य्यविरचितं च भाष्यं गीताव्याख्यानेषु सर्वथा प्राथम्यमेवार्हति बह्वपकरोति च शास्त्रस्य याथार्थ्यनिर्णये, यद्यपि शाङ्करभाष्यसनाथा गीता बह्वीष्वेव विश्वविद्यालयेष्वध्येयतया निर्दिष्टा तथापि मुद्रितभाष्यपुस्तकानां प्रमादसहस्रकलुषितत्वात् ततोऽर्थावधारणं दुःशकमेवासीच्छास्त्रसंस्कृतमतिभिरप्यध्यापकैः। दूरे तावदास्तां वार्त्ताकरस्थानादिनिर्णयस्यानुच्छेदविभागस्य च (division into paragraphs) प्रचलितेषु पुस्तकेषु पदानां विभागा अपि स्वैराचारमूलका एवासन्, सम्प्रदायाविच्छेदेऽपि सम्पादकानामनवधानतयाक्षरग्रथकानां संशोधकानां चाज्ञतया पाठविप्लवस्य बाहुल्येन समजनि। सहस्रशो धन्यवादानर्हन्ति श्रीमन्तो दिनकरविष्णुगोखेलमहोदयाः श्रीमन्तश्च एन् जी सरदेशाइ-महाभागाः यदेतैर्बहुग्रन्थसंवादेन भाष्यस्य पारमार्थिकं पाठं निर्धार्य्य उपनिषदादिभ्य उद्धृतानां वाक्यानामाकरस्थाननिर्देशपुरःसरं यथायथच्छेदादिसन्निवेशपूर्वकं पूर्वपक्षोत्तरपक्षादीनां विभागप्रदर्शनपूर्वकं च महता प्रयत्नेन संशोध्य पुस्तकमिदं प्रकाश्यतां नीतम्।

गीताध्यानं तदनु ब्रह्मसूत्रवाक्यत्वेनाभिमतानि

तदनन्तरं गीताशास्त्रार्थस्य श्रुतिमूलकत्वे साक्षिभूतानि कतिचिच्छ्रुतिवाक्यानि सन्निविष्टानि। तत ऊर्ध्वं सभाष्या गीता, ततश्च श्रीमद्भगवद्गीताश्लोकाद्यचरणानां वर्णानुक्रमकोषः समुपनिबद्धः यद्यप्यत्रापि केचन मुद्रणप्रमादा दृष्टिपथमुपयान्ति तथापि तेऽतीव तुच्छा दर्शनमात्रत एव चात्मनः शुद्धमाकारं प्रत्याययन्तीति न ततो लेशतोऽप्यपकर्षो ग्रन्थस्य। शङ्कराचार्य्यविरचितेषु च ग्रन्थेषु कुत्रचित् त्रिमुनिमतविरुद्धान्यपि पदानि सन्दृश्यन्ते, यथात्रैव तृतीयाध्यायभाष्यस्योपोद्घाते नियुञ्ज्यादिति पदम्। अत्र "स्वराद्यन्तोपसर्गादिति वक्तव्यम्" इति वार्त्तिकेनात्मनेपदप्रयोग एव युज्यते। ईदृशाः प्रयोगास्तारकादिचिह्नै र्निर्दिश्यन्ते चेदव्युत्पन्नानां पिपठिषूणां महानुपकारः स्यात्। आशास्यते च पुनर्मुद्रणावसर एवमेव करिष्यते सदैशाद्महाभागैः। अत्रत्यानि पत्राणि सुन्दराणि, मुद्रणमपि मनोहरम्। अत्र च त्रिशतीतोऽप्यधिकानि पत्राणि विराजन्ते। ईदृशस्य ग्रन्थरत्नस्य मूल्यं केवलं रूप्यकद्वितयमेवेत्यहो सुवर्णेऽपि परिमलोद्भेदः। अवश्यं संग्राह्यमिदं पुस्तकं छात्रैश्चाध्यापकैश्च भक्तैश्च श्रद्धालुभिश्च। आशास्यते च सदैशाद्महाभागोऽन्यानपीदृशान् सर्वावयवानवद्यान् ग्रन्थान् प्रकाश्य सुरभारत्याः समृद्धिं विधास्यन्तीति।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| January, 1933. | १८५४ शकीये पौषे १५श-वर्षस्य ९म-संख्या | Vol. XV. No. 9. |


## उपनिषत्कथा

[ निवन्धकः—म०म० श्रीदुर्गाचरण-साङ्ख्य-वेदान्ततीर्थः ]

( छान्दोग्ये प्राणसंवादः )

अस्ति तावच्छान्दोग्योपनिषदि पञ्चमेऽध्याये प्राणोपासनाप्रक्रिया। तत्र च जीवोपकरणीभूतानां वागादीनां प्राणसंज्ञितानां सर्व्वेषामेव तत्तद्गुणयोगेन समुपासनं तत्फलञ्च प्रतिपाद्य महताडम्बरेण पञ्चवृत्तेः प्राणस्य ज्येष्ठश्रेष्ठत्वादिगुणयोगेन समुपासनं पश्चादभिहितम्। सत्यपि जीवोपकरणतया सर्व्वेषामेव वागादीनां समानत्वे कथं नु नाम पञ्चवृत्तेः प्राणस्यैव ज्येष्ठत्वं श्रेष्ठत्वञ्चोपपद्येते ? इति तन्निर्द्दिधारयिषया श्रुतिः स्वयमेव तदुपपादनाय नितरां रमणीयं प्राणसंवादमवातारयत्। स च संवाद एवमिह प्रववृते—

यथा लोके राजसेवायां नियुक्ता उच्चावचगुणसम्पन्ना अपि राजपुरुषा अनन्यसामान्यमात्मनो नैपुण्यं मन्यमाना अन्योन्यं स्पर्द्धन्ते, स्पर्द्धमानाश्चान्ततः पक्षपातादिदोषलेशवर्ज्जितं ज्ञानभारावर्ज्जितं तत्त्वस्वरूपनिरूपणार्थमवलम्बन्ते ; इति नः सर्व्वेषामेव दिवानिशमक्षिपथ-

मवतरति, आध्यात्मिकानां प्राणानामपि कदाचित् तादृशी दशा समजायत इत्येतदुपाख्यायते—

"अथ ह प्राणा अहंश्रेयसि व्यूदिरे—अहं श्रेयान् अस्मि, अहं श्रेयान् अस्मि इति ।"

प्राणसंज्ञया परिचितेषु अस्मासु [ वागादिषु ] मध्ये अहमेव सर्व्वापेक्षया अतिशयेन प्रशस्योऽस्मीति प्रत्येकं विवदमानाः प्राणाः स्वपक्षं साधयितुं परपक्षं चाधिक्षेप्तुमक्षमा अनाशङ्कितपक्षपातं जनकतया च सर्व्वत्र समस्नेहं पितरं प्रजापतिमेव तत्त्वनिर्णयक्षमं मध्यस्थं मनसा न्यरूपयन् । एवं कृताध्यवसायाः प्राणाः समेत्य प्रजापतिलोकं जिगमिषवो बभूवुः । अनन्तरञ्च यथाध्यवसायम्—

"ते ह प्राणाः प्रजापतिं पितरमेत्योचुः—भगवन्, को नः श्रेष्ठ इति ।"

स्वसन्तानैः प्राणैरेवमाभाष्यमाणः प्रजापतिर्मनस्यचिन्तयत्—अहङ्कारपरवशा हि प्रायेण स्वाभिमतार्थप्रतिघाते अन्धा इव विवेकं नावेक्षन्ते, मत्ता इव गौरवं नाश्रयन्ते, मूढा इव सूनृतं नावबुध्यन्ते, बाला इव हितं नावलम्बन्ते, उपचिकीर्षुमपि नानुमन्यन्ते, आत्मनीनमपि नाद्रियन्ते, सर्व्वथा विपरीतमेव प्रचेष्टन्ते, तद् यद्यहमत्र यथायथमेव कथयेयं स्यादपि कस्यचिद् मम यथार्थभाषित्वे विमतिरिति सम्यगौदासीन्यमेवात्र मम साधीय इति जानन्नपि तन्निर्णयं नावोचत् ; निर्णयशैलीमात्रमुपदिशन्—

"तान् होवाच—यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत, स वः श्रेष्ठ इति ।"

भो प्राणाः, यूयमेव प्रस्तुतार्थविनिर्णये समर्थाः, तत् किमिति मामेतस्मिन्ननतिदुर्ग्रहेऽर्थे मुधा नियोजयथ ? यूयमेव तावदेकैकशः पर्य्यायेण शरीरादस्मादुत्क्रामत, ततश्च यस्मिन्नुत्क्रान्ते सति शरीरमिदं पापिष्ठतरमिव दृश्येत—शरीरं हि

"स्थानाद्बीजादुपष्टम्भान्निस्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः ।"

इत्युक्तदिशा स्वत एवाशुचितया परिग्रहात् पापिष्ठमिव, पुनश्च युष्माकं मध्ये यस्य विरहात् ततोऽप्यतिशयेन पापिष्ठमिव सम्पद्येत, स एव युष्माकं मध्ये श्रेष्ठत्वेन परिग्रहीतव्य इति स्वशरीर एव सुकरः स्वरूपग्रह इति।

अथैवमभिधाय पितरि प्रजापतौ मौनमालम्बमाने, वागादयः प्राणास्तदुक्तिं युक्तिमत्तया सानन्दमभिनन्द्य तदुक्तदिशैव व्यापारमारेभिरे। तत्र वाचमेव प्रथममुत्क्रमणे न्ययोजयन्। ततश्च—

"सा ह वागुच्चक्राम, सा संवत्सरं प्रोष्य पर्य्येत्य उवाच—कथमशकत ऋते मज्जीवितुमिति ?"

वागिन्द्रियं हि देहमपहाय संवत्सरकालं बहिरवस्थाय पुनर्देहमनुप्रविश्य यदा तत्रत्यान् प्राणान् समपृच्छत्—भोः प्राणाः, मद् ऋते—मां विना यूयं दैहिकं सर्व्वं कर्म्म सम्पादयितुं शक्ता अभवत न वेति। तदा ते सर्व्वे युगपदूचुः—

"यथा कला अवदन्तः प्राणन्तः प्राणेन, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसा, एवमिति।"

यथा हि कला वागिन्द्रियहीना [ मूकाः ] जनाश्चक्षुरादिभिः करणैः सर्व्वानेव देहोचितान् व्यापारान् यथायथं निष्पादयन्ति—ऋते वाग्व्यापारात् त्वदभावाद् वयमपि तथैव वाग्व्यवहारहीना अपि सर्व्वमन्यद् व्यवहारं परिनिष्पादयन्त आस्मेत्येवं प्राणैरभिधीयमाना पुनर्देहं "प्रविवेश ह वाक्।" एवमेकैकशः सर्व्वेऽपि प्राणा ऋते पञ्चवृत्तेः प्राणाद् बहिर्निर्गत्य संवत्सरात् परं प्रत्यागत्य च तत्तद्व्यापारविधुरत्वेऽपि शरीरं तदवस्थमाकलय्य सव्रीडा इव पुनः प्राविशञ्छरीरम्।

अथैवं वागादिषु करणेषु प्रोष्य प्रत्यागत्य च शरीरमनुप्रविष्टेषु सत्सु पञ्चवृत्तेर्मुख्यप्राणस्य समुत्क्रमणावसरः समुपस्थितः। स चात्मनः कर्त्तव्यमनुपालयन् देहादुत्क्रमितुं मनो दधौ।

"अथ ह प्राण उच्चिक्रमिषन् स यथा सुहयः पड्वीशशङ्कून् संखिदेत्, एवमितरान् प्राणान् समखिदत्।"

यथा हि अश्वपरीक्षणाय प्रवृत्तैरश्वारोहिभिः कशाभिहतः शोभनोऽश्वः प्रचलिष्यन् पादबन्धनकीलान् युगपदेव समुत्पाटयेत्, तथायं मुख्यः प्राणोऽपि देहमपहाय यावद् ऊर्द्ध्वं क्रमितुं प्रावर्त्तत, तावदेव खलु वागाद्योऽपि प्राणास्तदनुविहिता इव समुत्क्रमणोद्यता बभूवुः, न पुनर्देहे स्थातुमलमासन्। अथ ते तत्र स्थातुमशक्नुवन्तः कातरतराः "तं ह समेत्योचुः—भगवन् एधि, त्वं नः श्रेष्ठोऽसि, मोत्क्रमीरिति।"

एवं कार्य्यतो लब्धप्रबोधा वागादयः प्राणाः प्रत्यक्षतो मुख्यप्राणस्य माहात्म्यमधिगत्य मिलित्वा समीपमुपगम्य प्राणं सम्बोध्य—हे भगवन्, एधि—त्वमेवास्माकं प्रभुर्भव, यतस्त्वमस्माकं मध्ये श्रेष्ठः, अतोऽत्रैव तिष्ठ, मा उत्क्रमीः—देहादस्मादुत्क्रमणं मा कार्षीरित्यूचुः।

अथैवमुपदर्शितविभवो महाप्रभावः पञ्चवृत्तिः प्राण आत्मनः प्राधान्यानुगुणं किमपि प्राप्तुकाम इतरान् प्राणानाह—यदि नाम देहेऽस्मिन् ममैव मानमहिमानमधिगता यूयं, तर्हि तदुचितं किमपि विधत्त, येन मे स्वामित्वमन्वर्थं स्यादिति। अथैवं विदिताशयाः सदाशया वागादयः प्राणाः स्वगतगुणगणसमर्पणेन स्वामिनं प्राणमपूजयन्, प्राणोऽपि लब्धमानतया तान् वागादीन प्राणान् प्राणानिव पातुं त्रातुञ्च प्रतिशुश्राव। ततः सर्व्वे प्राणानुगता देहरक्षायै सन्नद्धा बभूवुरिति।

---

## सुभाषितम्

यो मानुष्यं कुशलविभवं प्राप्य कल्पैरणल्पै-
र्मोहात् पुण्यद्रविणमिह न स्वल्पमप्याचिनोति।
कोऽस्माल्लोकात् परमुपगतस्तीव्रमभ्येति लोकं
रत्नद्वीपाद् वणिगिव गतः स्वं गृहं शून्यहस्तः॥

# तन्त्रचर्चा

[ निबन्धकः—श्रीप्रभातचन्द्र-चक्रवर्त्ती काव्यतीर्थः एम्-ए, पी-एच्-डी ]

[ उपोद्घातः ]

तन्त्रशास्त्रे तावद् भारतीयानामार्य्याणामुपासनाया गुरुपरम्परागतः कश्चन प्राचीन आदर्शः संरक्षितो वर्त्तते। तान्त्रिकी हि साधना वेद-प्रतिपादितस्य धर्मस्य विशिष्टाङ्गत्वेनैव प्रसिद्धिं समधिजगाम। प्राचीन-तमादेव कालादारभ्य धर्मक्षेत्रेऽस्मिन् भारतवर्षे ये तावद्धर्मा उपासना-पद्धतयो वा प्रवृत्तास्तेष्वेवायमन्यतमस्तन्त्रोक्तः साधनमार्गः। वेदस्य कर्मज्ञानात्मककाण्डद्वितयेनैव साकं तन्त्रमतस्य सविशेषं सादृश्यं सन्दृश्यते। यद्यप्यापाततो वेदबोधिताद् धर्मात् तन्त्रोक्तस्य धर्मस्य पार्थक्यं प्रतीयते तथापि मूलतस्तन्त्रमतं वेदानुमोदितमेव न तु लेशतोऽपि वेदबाह्यम्। मन्वादिस्मृतीनामिव तन्त्रशास्त्रस्यापि वैदिककर्मकाण्डानुवर्त्ति-त्वेऽपि, देवादिदेवमहादेववदनारविन्दविनिःसृते तन्त्रशास्त्रे वेदप्रति-पादिताया ब्रह्मविद्याया एवं प्रभावः स्फुटतरं परिलक्ष्यते। तथाचोक्तं प्रामाणिकप्रवरेण भास्कररायेण ललितासहस्रनामस्तोत्रवृत्तौ—तन्त्राणां स्मृतित्वाविशेषेऽपि मन्वादिस्मृतीनां कर्मकाण्डशेषत्वं तन्त्राणां तु ब्रह्म-काण्डशेषत्वमिति। श्रद्धापूर्वकं तन्त्रशास्त्रमालोचयन्तः सर्व एव प्रति-पद्येरन् भारतीयोपासनायाः प्रस्थानत्रितयं कर्ममार्गो ज्ञानमार्गो भक्तिमार्ग-श्चातिमात्रं मनोहरया रीत्यात्रोपप्रदर्शितमिति। न खलु केवलं लौकिकाना-मेव सम्मतमिदं शास्त्रं परं योगिनामपि बहुमतम्। हिरण्यगर्भाद् दत्ता-त्रेयाद्वा प्रारब्धं सम्प्रदायक्रमागतं योगतत्त्वमपि तन्त्रशास्त्रे विस्तरेण सन्निविष्टम्। उक्तञ्च त्रिपुरारहस्ये—

इति तद्वचनं श्रुत्वा भार्गवः परिचिन्तयन्।
सस्मार तत् पुरा प्रोक्तं दत्तात्रेयेण विष्णुना॥
त्रिपुराया रहस्यं यत् साक्षाच्छिवमुखागतम्॥

त्रिपुरारहस्ये १।६०.

इति । पातञ्जलदर्शनप्रतिपादितानि ध्यानधारणासमाधिप्राणायामप्रभृतीनि निखिलान्यपि योगाङ्गानि तन्त्रशास्त्रे व्याख्यातानि। तन्त्रोक्तमेव योगमार्गमवलम्ब्यादिनाथः, अष्टाङ्गयोगे समाधिगतसिद्धिरिति प्रथितो मत्स्येन्द्रनाथः, गोरक्षणाथप्रभृतयश्च महात्मानः सिद्धिमुपगता इति प्रसिद्धिः । वङ्गेष्वपि सर्वानन्दपूर्णानन्दब्रह्मानन्दरामप्रसादकमलाकान्तप्रभृतयो बहवस्तान्त्रिकाः प्रादुर्बभूवुः । वेदान्तमार्गप्रवर्त्तकस्य भगवतः शङ्कराचार्यस्यापि तन्त्रोक्तसाधनायां ( शाक्तोपासनायाम् ) आसक्तिरासीदिति तद्विरचितादानन्दलहरीसौन्दर्यलहरीगङ्गास्तवान्नपूर्णास्तवप्रपञ्चसारादिप्रबन्धतो विस्पष्टतयावगम्यते। ब्रह्मविद्यायोगतत्त्वव्यतिरिक्तान्यपि ज्योतिष-वर्णशब्दतत्त्वानि पृथिव्याः संस्थानं षट्कर्माणि यागहोमौ भूतशुद्धिपूजाप्रकरणन्यासदीक्षापद्धतिप्रभृतीनि बहुविधानि श्रद्धाशीलजनज्ञातव्यानि विषयजातानि तन्त्रेषु प्रतिपादितानि ।

एकतस्तावत् तन्त्रशास्त्रं साधकस्य कण्ठहारः, अपरतश्च तान्त्रिकाचारो हिन्दुधर्मस्याध्यात्मिकजीवनस्य च प्रधानमवलम्बनम् । तन्त्रशब्दस्य निर्वचनदर्शनमेव शास्त्रस्यास्य गुरुत्वं विस्पष्टयति । तथाचोक्तम्—

तनोति विपुलानर्थांस्तत्त्वमन्त्रसमन्वितान् ।
त्राणं च कुरुते यस्मात्तन्त्रमित्यभिधीयते ॥

संस्कृतसाहित्ये तन्त्रशास्त्रग्रन्थाः सुविपुला एव। परन्त्वधन्यतया भारतवर्षीयाणां बहूनामेव विलोपः सञ्जातः, बहवश्च नाममात्रशेषाः संवृत्ताः । अहो कति नामानर्घ्याणि रत्नानि भारतवर्षस्येत्थमेव कालगर्भे चिराय न विलीनानि ? तथाप्यद्यापि तेषु तेषु प्रदेशेषु तन्त्रशास्त्रीयाणि मुद्रितानि हस्तलिखितानि च यानि पुस्तकान्युपलभ्यन्ते तेषां संख्यामाकलयतां मानसे विपुलतरेण विस्मयेन पदं क्रियते, अहो ! कीदृशी वा चर्चा तन्त्रशास्त्रस्य भारते न सञ्जातेति । साधनासाम्राज्यस्य वर्त्तमानायां शोचनीयतमायामपि दशायामार्याणां धर्मानुष्ठानस्य ज्ञानानुशीलनस्य चान्तस्तन्त्रस्य प्रभावो विस्पष्टमेवानुभूयते । प्रतिगृहमेवार्याणामद्यापि शक्तिपूजा शाक्ताभिषेकश्च

निर्वर्त्त्यते। अस्माकं प्रदेशे बहुषु स्थानेषु दुर्गापूजा कालीपूजा चानुष्ठीयेते। एतत्त्ववश्यमभ्युपगन्तव्यं यथाविधि शक्तिपूजानुष्ठानमतीव कठिनमिति। मानस्याः पूजायास्तदुपचाराणां वर्णनं वैशद्येन तन्त्रशास्त्रे समुपलभ्यते। स्वहृत्पद्मासने स्वाभीष्टदेवं समुपवेश्य मनःप्राणैर्निखिलैश्च करणग्रामैः कीदृश्या प्रणाल्या साधकेन तस्योपासनं विधेयं तद् यथा तन्त्रशास्त्रे विस्पष्टमुपदिष्टं न खलु तथान्यत्र कुत्राप्युपलभ्यते। तन्त्रशास्त्रे भूतशुद्धि-प्रकरण उक्तम्—देहस्थानि क्षित्यादिभूतानि संशोध्य, शरीरस्थं पापजातं ज्ञानाग्निना दग्ध्वा, गुरूपदिष्टेन च वर्त्मना कुलकुण्डलिनीत्यपरनाम्नीं चिच्छक्तिमुद्बोध्य किं बहुना सर्वथा निर्मलो भूत्वा साधक आत्मानं परमात्मतोऽभिन्नं विभावयेत् इति। एवञ्च स्वयं शिवसाम्यं समासाद्य महाशक्त्याः पूजायामधिकारी सञ्जायते ("शिवो भूत्वा शिवां यजेत्")।

भारतवर्षस्येतरेष्वपि धर्ममतेषु तन्त्रमतमनुप्रविष्टं वर्त्तते। कालिका-पुराणेऽपि देवीतन्त्र-कामाख्यातन्त्र-शारदातन्त्र-कामेश्वरीतन्त्रप्रभृतीनि संख्यातीतानि तन्त्राणि समुल्लिखितानि। किञ्च, शैव-शाक्त-वैष्णवबौद्धभेदेन बहुविधानि तन्त्रशास्त्राणि तान्त्रिकाचाराश्चोपलभ्यन्ते। न केवलं भारते वर्षे दूरतरप्रदेशवर्तिषु महाचीनेष्वपि तान्त्रिकाचारः पदं लेभे, एतस्य निदर्शनं प्रसिद्धेष्वेव बौद्धतन्त्रेषु सन्दृश्यते। ब्रह्मयामलतन्त्रे हि वामाचारवीराचारकौलाचाराणामिव चीनाचारस्यापि समुल्लेखो दृश्यते। तद् यथा—

नात्र शुद्ध्याद्यपेक्षास्ति न चामेध्यादिदूषणम्।
सर्वदा पूजयद्देवीमस्नातः कृतभोजनः॥
महानिश्यशुचौ देशे बलिं मन्त्रेण दापयेत्।
स्त्रीद्वेषो नैव कर्त्तव्यो विशेषात् पूजनं स्त्रियाः॥

सर्वमेतदिदमेव स्फुटीकरोति यत् आसीत् स कालो यदा योगचर्च्चया—ज्ञानचर्च्चया भारतं वर्षं तथा प्रतिष्ठां समभ्यगमत् यथा भारत-तद्बहि-र्भतानां च बहुतराणामेव प्रदेशानां धर्म्माणां न्यूनाधिकतया तन्त्रोक्त-

धर्म्माश्रयणमावश्यकमासीत्। काश्मीरेषु दाक्षिणात्ये च तन्त्रशास्त्रस्य प्रगाढमालोचनमासीत्। काश्मीराणां चतुःषष्टितन्त्रम् दाक्षिणात्यस्य चाष्टाविंशतिकामिकागमशास्त्रमत्र प्रकृष्टं प्रमाणम्। आचार्यशङ्करभगवत्-पादैरपि "आनन्दलहरीस्तोत्रे" चतुःषष्टितन्त्राणामुल्लेखो विहितः—

चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनं
स्थितस्तत्तत्सिद्धैः प्रसवपरतन्त्रः पशुपतिः।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम्॥ इति।

किञ्च, अश्वक्रान्तविष्णुक्रान्तरथक्रान्तप्रदेशेषु च विभिन्नानि तन्त्रशास्त्राणि प्रचलितानि। पूर्वाद्याम्नायभेदेनापि तन्त्रशास्त्रस्य विभाग उपलभ्यते। महेश्वरस्य सप्तभ्य आननेभ्यः सप्तविधा आम्नाया वेदादि-शास्त्रसमष्टिरूपा विनिर्गताः। तेषां च सप्तानामाननानां नामानि यथा—तत्पुरुषः, अघोरः, सद्योजातः, वामदेवः, ईश्वरः, नीलकण्ठः, चैतन्यश्च। एषु चान्तिमं मुखद्वितयं गूढमेव, तेन मुखपञ्चकस्य स्फुटत्वान्महादेवः पञ्चवक्त्र इति निर्दिश्यते। कुलार्णवं तन्त्रमूर्ध्वाम्नाय इति व्यपदिश्यते।

तन्त्रशास्त्रमतीव विशालं दुरवगाहञ्च। सम्प्रदायविच्छेदात् तन्त्रोक्ता बहव एव विषया इदानीं रहस्यजालसमाच्छन्नाः प्रतीयन्ते। तन्त्रशास्त्रेषु च तथाविधं बहुतरं प्रतिपाद्यं वर्त्तते यत् खल्वन्तरेण सद्गुरूपदेशं स्वप्रतिभया नैवावबोद्धुं शक्यते। सद्गुरुलाभश्च पूर्वजन्मार्जितसुकृतिफलेनैव केषाञ्चिदेव सङ्घटते। ये हि परमार्थत एव साधकाः शास्त्रोक्तकर्मानुष्ठान-पराश्च प्रायेण ते विजने एव वसन्ति, प्राकृतजनैः साकं सम्बन्धं विच्छिन्द-न्त्येव ते। एतस्मादेव कारणाद् बहुषु स्थानेषु तन्त्राणां निगूढं तात्पर्य्य-मिदानीमपरिज्ञातमेवास्माकम्। अपरिज्ञानाच्चास्मात् तन्त्रशास्त्रे तान्त्रिका-चारे चास्माकं श्रद्धा शैथिल्यमुपगता। परं तन्त्राणां रहस्यमध्यात्म-तत्त्वं वा यथायथं व्याख्यायते चेत्, तान्त्रिकाचाराणां च पारमार्थिकमुद्देश्यं सम्यगधिगम्यते चेत्, तन्त्रेषु शिक्षितजनानां श्रद्धा पुनरपि दृढतरं पद-

मासादयेदित्यस्माकं द्रढीयान् प्रत्ययः। तन्त्रोक्ता ब्रह्मविद्या तन्त्रानुशिष्टं सेवातत्त्वं तन्त्रकथितं पञ्चतत्त्वं तन्त्रप्रतिपादिता च शक्तिपूजापद्धतिः सर्वाण्येतानि सुमनोहराणि परमोपादेयानि च साधनमार्गावलम्बिनाम्। प्रबन्धेऽस्मिन् तन्त्रोक्तं बिन्दुतत्त्वमधिकृत्यालोचनं प्रवर्त्तय प्रदर्शयिष्यामः— तन्त्रप्रतिपादिता विषयविशेषाः कीदृशदार्शनिकचिन्ताप्रसूता अध्यात्मजीवनरक्षणे च कीदृशमुपयोगमावहन्तीति।

यथा त्रिकसिद्धान्तापरनामनि काश्मीरीये शैवागमे पतिपशुपाशाः प्रधानतत्त्वत्रयत्वेनोपवर्णितास्तथा दाक्षिणात्यशाम्भवागमे शिवशक्तिबिन्दवो मुख्यपदार्थत्रयत्वेन परिगृहीताः। तथाचोक्तं रत्नत्रये—

बिन्दुशक्तिशिवाख्यानि त्रीणि सिद्धान्तसागरात्।
समुद्धृत्य सतां धर्तुं हृत्कण्ठश्रवणे सदा॥

पदार्थत्रितयञ्चेदमागमे रत्नत्रयसंज्ञयाऽभिधीयते। तदुक्तम्—

रत्नानीत्थविधानाच्च बिन्द्वाद्याः शिवशासने। इति।

एषामुपरि सर्वेषामेव तत्त्वानां प्रतिष्ठा। तथाचोक्तम्—

रत्नत्रयं समाश्रित्य वर्त्तते तत्त्वसंहतिः। इति।

मूलभूतानाममीषां पदार्थानामभ्युपगममन्तरेण न खलु विश्वस्य समुत्पत्तेर्न वा तद्गतस्य वैचित्र्यस्य निदानं निर्देष्टुं शक्यते। तत्त्वदृष्ट्या तु प्रोक्तपूर्वेषु त्रिषु रत्नेषु शिवः सर्वज्ञो विश्वस्य कर्त्ता (creator), शक्तिः [ शिवसमवायिनी शक्तिः ] करणम् (instrumental potency', बिन्दुश्च उपादानं वा महामाया वा (matter)। यथा स्थूलदृष्ट्या दृश्यते चेन्मृत्तिकाद्युपादानं विना घटादिकार्य्यजातस्योत्पत्तिर्न सम्भवति तथा बिन्दुलक्षणं मायिकोपादानमन्तरेण जगतः सृष्टिव्यापारः कथमपि न सङ्गच्छते। बिन्दुस्तावज्जडात्मा महामाया। यावच्चेतनेन नाधिष्ठीयते चिच्छक्त्या वा न प्रेर्यते तावज्जडः कदापि न प्रभवति कर्म्माणि सम्पादयितुम्। अत एव शैवसिद्धान्तेषु चिन्मयी शक्तिः कारणतयोपन्यस्ता। "यद्द यत् कार्य्यं तत् तत् सकर्त्तृकम्"—राद्धान्तमिम-

अनुसृत्य नैयायिकैरपि क्षित्यादिकार्य्यजातस्य कर्त्तृतयेश्वरो निरूपितः। शिवः शक्तितो न भिद्यते, अभिन्नकलेवरावेवेमौ। मायायाः साहाय्येन तेन सृज्यते विश्वम्, वैष्णवशास्त्रीया ह्लादिनी शक्तिः [ राधा ] परमपुरुषाच्छ्रीकृष्णादाकृतितो भिन्नापि परमार्थतोऽभिन्नैव। बिन्दोर्विक्षोभादेव प्राकृतसृष्टेः प्रारम्भः। परिदृश्यमानमिदं जगन्मण्डलं कलादीनां षण्णां शुद्धाध्वनां परिणामः, बिन्दुश्च षडध्वनामपि तेषामुपादानकारणम्। किं तावदयं बिन्दुर्नाम? यस्माद्धि मन्त्र-वर्ण-पद-कला-तत्त्व-भुवनाख्यानि षट् तत्त्वानि प्रादुर्भूय पुनस्तस्मिन्नेव विलीयन्ते स एव बिन्दुर्नाम। उक्तश्च—

जायतेऽध्वा यतः शुद्धो वर्त्तते यत्र लीयते।
स बिन्दुः परनादाख्यो नादबिन्द्वर्णकारणम्॥

इति। बिन्दोश्च व्यक्ताव्यक्तभेदेनावस्थाद्वितयम्। प्रथमावस्थातः सृष्टिः द्वितीयस्यां सर्व्वेषां विलयः। बिन्दोरेव जीवानामभिव्यक्तिर्भवति। जीवस्तावदणुलक्षणो बिन्दुलक्षणो वा। द्वैतवादिभिर्निम्बार्करामानुजवल्लभाचार्य्यजीवगोस्वामिप्रभृतिभिः सर्वैरेव जीवोऽणुरिति निर्दिष्टः। प्रायेण परमाणव एव पाञ्चभौतिकस्य जगतः सूक्ष्मकारणत्वेन नः सम्मताः, बिन्दुस्तु तेभ्योऽपि सूक्ष्मतरः। का कथा इतरेषां, लिङ्गशरीरात् कारणशरीराद्वा अपि बिन्दुः सहस्रगुणं सूक्ष्मतरः।

यद्यदेव जगति परिदृश्यतेऽस्माभिस्तस्य सर्वस्यैव सूक्ष्मं बैन्दवं रूपं वर्त्तते। बिन्दो रूपादेव सर्वेषां रूपाणां प्रकाशः सञ्जायते। मूले चेद्रूपं सौन्दर्य्यं वा नाभविष्यत्, किमपि वस्तु सुन्दरत्वेन द्रष्टुं नैव प्राभविष्याम वयम्। यत् खलु रमणीयं निसर्गत एव च समाकर्षत्यस्माकं नयनयुगलं नूनं तस्य मूलकारणमतीव रम्यम्, अतीव मनोहारि। यस्य रूपेणैव जगतो रूपम्, यस्य भास्वरया दीप्त्या सर्वं समुज्ज्वलम्, "यस्य भासा सर्वमिदं विभाति," वर्णनाविषयमतिक्रान्तं तस्य रूपज्योतिर्ध्याननेत्रेण प्रत्यक्षीकुर्व्वन्त्यृषयः। यत् खलु पुष्पं पुरतः पश्यामि तस्यापि चरमकारणमन्विष्यता मयान्ततोऽस्मिन्नेव बिन्दुतत्त्वे विश्रमितव्यम्।

यद्यपि प्रायेण मृत्पिण्डं पार्थिवघटस्योपादानमिति मन्यते, तथापि मायापरनामा बिन्दुरेव सर्वेषां वस्तूनां चरममुपादानम्। यद्यपि च मृत्पिण्डादीनामनित्यत्वमेवाभ्युपगम्यते तथापि शैवागमे बिन्दोर्नित्यत्वमेव प्रतिपादितम्। तथाचोक्तम्—"पृथिव्यादितत्त्वानां परम्परयोपादानं मायाख्यं नित्यं परमकारणमभ्युपगन्तव्यम्"। अपरं च—

"पार्थिवोऽपि भवेत् कुम्भो मायोपादानकारणः।"

स्वायम्भुवतन्त्रेऽपि जगतो बीजरूपं मायातत्त्वमिदमव्ययमविनाशि चेत्युक्तम्। यत् किञ्चिज्जगति समुत्पद्यते सर्वमेव बिन्दोर्विकाशः यद्वा मायायाः परिणामः। स्वयं महेश्वरेणापि जगत उत्पत्तिविनाशावुभौ मायायाः परिणामत्वेन निर्दिष्टौ। तथाचोक्तं रत्नत्रये—

यद् यदुत्पद्यते वस्तु तन्मायेयं यथा कला।
उत्पत्तिनाशौ मायेयधर्मावाह महेश्वरः॥

इति। आत्मैव बिन्दुरप्यच्छेद्योऽदाह्यो नित्यश्च। न खलु पार्थिवोऽग्निः कदापि बिन्दुं नाशयितुं निःशेषयितुं वा प्रभवति। अयमेव बिन्दुः कलादिषु परिणतो मलादिसद्भावाज्जीवापरनाम्नोऽणोराकारं परिगृह्णाति। जीवतत्त्वस्य सूक्ष्मं कारणं बिन्दावेवान्तर्लीनं वर्त्तते। सति विशुद्धज्ञानस्याविर्भावे जीवाः सर्वविधमायीयमलविनिर्मुक्ताः शिवसाम्यं मोक्षपदवीं प्रतिपद्यन्ते। उक्तञ्च—

एतदेव पराः काष्ठा मोक्षाख्याणोर्विचारतः।

मुक्तिविषये काश्मीरीयदाक्षिणात्यतन्त्रयोर्मतविभेदो वर्त्तते। काश्मीरीयशैवदर्शने शिवत्वप्राप्तिरेव परमा मुक्तिरिति निर्दिष्टा, दक्षिणागमे पुनः शिवसाम्यं परमशिवस्य सादृश्याधिगतिरेव वा परो मोक्षः। न खल्वीश्वरानुकम्पामन्तरेण मुक्तिर्घटते। शुद्धचिन्मयपरमेश्वरात् समुत्पन्ना अपि जीवाः स्वस्वकर्मवशेन शिवाद् वैसादृश्यमापन्ना बन्धनमुपयान्ति। परमेश्वरस्तावल्लीलाभिनयार्थं स्वीयस्वतन्त्रशक्तिसहायेन जीवभावग्रस्तः—आणवमलयुक्तः सम्पद्यते, अर्थात् स्वीयविभुत्वनित्यत्वसर्वज्ञ-

त्वादिशक्तिजातं संहृत्य पञ्चप्रकारकञ्चुकावृतः सम्पद्यते। उक्तञ्च त्रिपुरारहस्ये—

सर्वेषां प्राणिनामात्मा साक्षाद्देवः परः शिवः।
स्वमायावैभववशात् स्वात्मानमविन्दन् परम्।
सङ्कोचे सर्वशक्तीनां स्वयं सङ्कुचितस्ततः॥ इति।

बिन्दुरूपिण्या मायाया ईश्वरस्य च योगेन मायाया गर्भाज्जीवः प्रकाशते उत्पद्यते वा। मायाया मध्ये बीजस्य प्रक्षेप एव गर्भाधानम्। अयमेव प्रकृतेराविर्भावः (Evolution of Nature). यावद् बिन्दुतत्त्वापराख्यं मायाजालमिदं न भिद्यते तावन्मुक्तिलाभो न सम्भवति, शिवतत्त्वं नासाद्यते। अत एवोक्तं भगवता—'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते। अत एव दीक्षारूपं तीव्रशक्तिपातमन्तरेण मुक्तिर्न सम्भवति। मायीयकार्मणाणवमलत्रितयापसारणाय दीक्षां विनान्य उपायो नास्ति। विशुद्धेन कर्मणा कर्ममलो विशुद्धेन ज्ञानेन मायामलो विशुद्धया च भक्त्याणवमलः समुत्सार्यते। शिवभूम्यपरनामाद्वैततत्त्वासादने भक्तिरेव भक्तस्य प्रधानं सहकारिणी। दीक्षाया उपयोगस्तन्त्रशास्त्रे बहुधा प्रपञ्चितः। तथाचोक्तं षट्साहस्त्रिकायाम्—दीक्षैव मोक्षदा पुंसां चिदभिव्यक्तिकारिणी। दीक्षयानुरूपा शिवस्य शक्तिर्जीवे निपतति ("शैवी शक्तिः पतत्यसौ) तेन सर्वत्र तत्त्वादिगुणगणमासाद्य जीवः साक्षाच्छिवत्वमधिगच्छति। तथाच किरणतन्त्रम्—

"तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा।
सर्वज्ञः स शिवो यद्वत्—" इति।

दीक्षामात्रेणैव मुक्तिः।

तदैव हि विमुक्तोऽसौ यदाघ्रातः शिवेच्छया।

इत्थं मन्त्रसंस्कारबलेनाभिनवकलेवराधिगमः यद्वा शरीरगर्भात् समुत्पत्तिरेव साधकस्य पारमार्थिकं जन्म। न खलु मायाबन्धनमोक्षस्योपायान्तरं नास्तीति जीवेन भेतव्यम्। यथा श्रुतिः "शृण्वन्तु

विश्वे अमृतस्य पुत्राः" "तरति शोकमात्मवित्" इत्यादिका उदात्ततरा वाणीर्विघोष्य जीवानाममरत्वं शोकमोहयोश्च प्रभुत्वं विनिर्दिश्य मनुजानां दैन्यं कार्पण्यं च दूरीकृतवती, तथैव जीवः शिवसदृशो यद्वा साक्षाच्छिवः ( जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ) इत्यादिका अभयवाचो महता कण्ठेन समुद्घोष्य तन्त्रशास्त्रेणापि प्रभूतो न उपकारः साधितः। भगवान् कारुण्येन मायापाशाज्जीवं मोचयति—तन्त्रशास्त्रे सावधारणमिद-मुक्तम्। निसर्गनिर्मलः करुणार्द्रचित्तः परमेश्वरोऽनादिकालगतेन मलादिना शिवाद् वैसादृश्यग्रस्तानां बद्धानां जीवानां बन्धननिदानानि पाशजालानि कृपया दूरीकृत्य तान् सर्वथा स्वीयान्येव विदधाति। तथाचोक्तं मृगेन्द्रतन्त्रे—

अथानादिमलापेतः सर्वकृत् सर्वविच्छिवः।
पूर्वं व्यत्यासितस्याणोः पाशजालमपोहति॥ इति।

बहुष्वेव तन्त्रेषु बिन्दुतत्त्वमालोचितम्। बिन्दुरेव सांख्यानां प्रकृतिः। सांख्यनये प्रकृतेः प्रथमाभिव्यक्तिर्बुद्धितत्त्वम्, तन्त्रोक्तस्य च बिन्दोः प्रथमः प्रकाशः सर्वाभिधेयबुद्धेः प्रयोजको नादः। "तत्र नादो नामाभिधेयबुद्धिहेतुर्बिन्दोः प्रथमप्रसररूपः सूक्ष्मो नादः।" तन्त्रमतेनान्त-रुदितादस्मादव्यक्तान्नादबिन्दोरेव महत्तत्त्वापराख्यः शब्द उत्पद्यते। तथा-चोक्तं शङ्कराचार्यपादैः प्रपञ्चसारे—

अव्यक्तादन्तरुदितत्रिभेदगहनात्मकात्।
महन्नाम भवेत्तत्त्वं महतोऽहङ्कृतिस्तथा॥ इति।

सृष्टिकाले प्रकृतिर्घनतामापन्ना बिन्दुरूपतां प्रतिपद्यत इति तत्रै-वोक्तम्। "विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्।" कालक्रमेण च विभेदं गतो बिन्दुरेव स्थूलसूक्ष्मपराभिधानमवस्थात्रितयमधिगच्छति। तथाचोक्तं प्रपञ्चसारे—

कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा।
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते॥ इति।

अयमेव तन्त्रशास्त्रे प्रायेण बिन्दुरिति नाद इति बीजमिति च

व्यपदिश्यते। 'स बिन्दुनादबीजत्वभेदेनापि निगद्यते।" स्वतन्त्रशक्तेः परमेश्वरस्येच्छया बिन्दुर्भिद्यते, ततश्च तस्मात् समुत्तिष्ठत्यव्यक्तो ध्वनिः। इदमेव वैयाकरणानां सर्वार्थप्रसु स्फोटतत्त्वम्। अयमेव ध्यानगम्यः सूक्ष्मो ध्वनिर्ब्रह्मवादिभिरागमिकैश्च शब्दब्रह्मेति व्यपदिष्टम्। तथाचोक्तं प्रपञ्चसारे—

बिन्दोस्तस्माद् भिद्यमानाद्रवोऽव्यक्तात्मको भवेत्।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति कथ्यते॥ इति।

शारदातिलकेऽपि—

भिद्यमानात् पराद् बिन्दोरव्यक्तात्मा ततोऽभवत्।
शब्दब्रह्मेति तां प्राहुः सर्वागमविशारदाः॥ इति।

नागेशभट्टेनाप्युक्तम्—

"अस्माद् बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानं रवपरादिशब्दैर्व्यवह्रियते।"

स्वातन्त्र्योपेतेनापि परमेश्वरेण न खलु शक्तेर्मायाया वा साहाय्यमन्तरेणैकाकिना सृष्टिरूपाया लीलाया अभिनयो विधातुं शक्यते। सृष्ट्यर्थं तस्य मायापरनाम्न्या इच्छायाः समुद्रेको भवति, मायाविर्भावमात्रेणैव चासौ शिवशक्तिरूपेण द्वैतभावापन्नो भवति। ईदृशेन शिवशक्तिसंयोगेनैव बिन्दुतत्त्वस्य विकाशः सञ्जायते ; तथाचोक्तं स्कन्दपुराणान्तर्गते काशीखण्डे—

यदेकलो न शक्नोति रन्तुं स्वैरञ्चरः प्रभो।
तदिच्छा तव योत्पन्ना सेव्या शक्तिरभूत्तव॥
त्वमेको द्वित्वमापन्नः शिवशक्तिप्रभेदतः॥ इति।

बिन्दोस्तावद् द्विविधं रूपम्—शब्दोऽर्थश्च। बिन्दोर्नादो नादाच्च वाच्यवाचकभावापन्नौ शब्दार्थौ नामरूपे वा प्रकाशेते। प्रमाणप्रमितिप्रमातृप्रमेयाणि सर्वाण्येव नामरूपाभ्यामेव ग्रथितानि। नामरूपाभ्यां यद्वा शब्दार्थाभ्यामेव परमेश्वरः स्वात्मानं विविधं व्यञ्जयामास। एतदभिप्रायेणैव वैदिकैर्ऋषिभिः "नामरूपे व्याकरोत्" इत्युक्तम्। मीमांसकैर्वैयाकरणैश्च शब्दार्थयोः सम्बन्धस्य नित्यत्वमास्थितम्। कैश्चित् पुनः

शब्द-तत्प्रतिपाद्यार्थयोर्योऽयं शब्दः सोऽयमर्थ इत्येवं रूप इतरेतराध्यास उपलक्षितः। प्रथितयशसा श्रीक्तत्वज्ञेनारिस्ततलेनापि शब्दार्थयोरभिन्नरूपप्रदर्शनार्थमेव प्रयतितम्। [ Concepts and words are interchangeable. ] महाकविना कालिदासेनापि "वागर्थाविव सम्पृक्तौ" इति ब्रुवाणेन प्रायेण शब्दार्थयोस्तादात्म्यमेव प्रतिपादितम्। शब्दार्थयोर्वाच्यवाचकभावं विचारयतां प्रथममेव समुदेति मनसि प्रश्नः— कया प्रणाल्याऽस्मदुच्चरितः शब्द ईप्सितमर्थं श्रोतुः पुरत उपस्थापयतीति। घटशब्दं श्रुत्वा सर्व एव मृन्मयं पात्रविशेषमेव प्रतिपद्यते न त्वपरं किञ्चित्; किं तावद् रहस्यं निगूढमस्य नियन्त्रितस्य वाच्यवाचकभावस्य मूले? तन्त्रशास्त्रीयमन्त्रार्थपर्य्यालोचनेनास्माभिरस्य प्रश्नस्यातिमात्रं समीचीनं समाधानमुपलभ्यते। वस्तुमात्रस्यैव किमपि नाम संज्ञा वा विद्यते। यो जनो येन नाम्ना प्रसिद्धस्तस्य तेन नाम्ना साकं कश्चनाविच्छिन्नः सम्पर्को वर्त्तते। एतच्च सर्वदैव प्रत्यक्षीक्रियतेऽस्माभिर्यत् 'हरे' इत्याह्वाने यस्य नाम हरिस्तेनैवोत्तरं दीयते न त्वपरेण केनापि। नामनामिनोः सम्बन्धस्तावदतीव घनिष्ठः। कालीदुर्गाहरिप्रभृतीनां शब्दानां तदभिधेयदेवतानां चेदृश एवाविच्छिन्नः सम्बन्धः। वैष्णवा नामनामिनौ सर्वथाऽभिन्नावित्येव सिद्धान्तयन्ति। केनापि चेदेकाग्रेण चेतसा 'हरे' इत्याहूयेत तत्क्षणमेव हरिस्तस्य सविधे प्रादुर्भवेदित्येव तेषां द्रढीयान् प्रत्ययः। भक्तचूडामणेः प्रह्लादस्याह्वानेन स्फटिकस्तम्भाद् भगवतः प्रादुर्भाव एवात्र प्रकृष्टं प्रमाणम्। न च तन्त्रोदिता वर्णात्मका बीजमन्त्रराशयः कदापि निरर्थकाः शक्तिविकला वा। तेषां प्रत्येकेन साकं देवताविशेषस्याभिसम्बन्धो वर्त्तते। ब्रह्मादिदेवतानां सिद्धानां च साधकानां वदनैः समुच्चरणेन बीजमन्त्रास्तथा सुसंस्कृताः शक्तिमन्तश्च सञ्जाता यथा श्रद्धया समुच्चारणमात्रेणैव मूर्त्तायास्तद्देवतायाः प्रादुर्भावो भवति। अनेनैव प्रकारेण साधनाराज्य इष्टदेवतासाक्षात्काररूपा जपसिद्धिर्जायते। गुरूपदिष्टस्य बीजमन्त्रस्य ध्यानेन यदा तस्याभ्यन्तराद् वाच्यदेवताया मूर्त्तिः

स्फुटतामापद्यते तदैव शब्दार्थयोः पारमार्थिको वाच्यवाचकभावोऽनुभूयते। अत एव पातञ्जलदर्शने तन्त्रशास्त्रे च मन्त्रजपो मन्त्रान्तरभावना मन्त्राधिष्ठितदेवतारूपचिन्तनं च विशेषत उपदिष्टानि। देवतैव सूक्ष्माकारेण बीजमन्त्रेष्ववतिष्ठते। मन्त्रस्य चैतन्ये समुन्मेषिते देवताप्युद्बुद्धा साधकस्याभीष्टं पूरयति। बीजानि देवतानां नामान्येव न त्वपरं किञ्चित्।

यद्यपि दाक्षिणात्यागमे नादो बिन्दुतत्त्वमध्ये परिगणितस्तथापि काश्मीरीयशैवागमेऽयं सदाशिवतत्त्व एवान्तर्भावितः। तथाचोक्तं तत्त्वप्रकाशे—"नादो बिन्दुः सकलौ सदाशिवतत्त्वमाश्रित्य कथितौ" इति।

---

## प्राप्तं पत्रम्

माननीय-संस्कृतसाहित्यपरिषत्सम्पादक-महोदयसमीपे

प्रणतिततिपुरःसरमावेदनम्,

महाभागाः, माधवमहोदयेन धावकादिकाव्यपरिगणनप्रस्तावे मदीयं नाम कथं नोल्लिखितं न जानामि। इदानीं क्षेमेन्द्रस्य समालोचनसहितं मदीयं पद्यमेकं प्रेष्यते। अवश्यमिदं प्रकाशनीयमचिरादेव पत्रिकायाम्।

तथाचौचित्यविचारचर्चायां क्षेमेन्द्रः—"करणौचित्यं यथा गौडकुम्भकारस्य—

लांगूलेन गभस्तिमान् वलयितः प्रोतः शशी मौलिना
व्याधूता जलदाः सटाभिरुडवो दंष्ट्राभिरुत्तम्भिताः।
प्रोत्तीर्णो जलधिर्दृशैव हरिणा स्वैराट्टहासोर्मिभि-
र्लङ्केशस्य च लङ्घितो दिशि दिशि प्राज्यः प्रतापानलः॥

अत्र हरिणा हनुमता जलनिधितरणे तरणिर्लाङ्गूलेन वलयितः किरीटप्रान्तेन शशी प्रोतः, सटाभिर्मेघा व्याधूतास्तारा दंष्ट्राभिरायासिताः, स्तीर्णोऽब्धिर्दृष्ट्यैवाट्टहासतरङ्गैर्लङ्केशस्य विस्तीर्णः प्रतापाग्निः शमितः इति बहुभिः करणपदैरुत्साहाधिवासितैर्विस्मयशिखरारोहणसोपानैरिव रघुपतिप्रभावारम्भविजयध्वजायमानस्य पवनसूनोरौचित्यातिशयः प्रकाशितः।"

इति गौडकुम्भकारस्य छिदामचन्द्रपालस्य।

# विद्याप्रस्थानम्

[ पूर्वतोऽनुवृत्तम ]

[ निबन्धकः कालीघट्टवास्तव्यः श्रीगुरुपदशर्महालदारः । ]

इहैव खलु चिन्त्यते—वाक्यस्य वाक्यार्थबोधकत्वं युक्तम्, उत वा पदोपस्थितानामर्थानामन्वयेन वाक्यार्थबोधे सम्बन्धग्रहसम्भव इति । अभिधावृत्त्या शब्दानां पदार्थानां च सम्बन्धबोधने प्रकारद्वितयं वर्तते— अन्विताभिधानमभिहितान्वयश्चेति । तत्राद्यं गुरुतार्किकाणां मतम् । त एवमाहुः—शब्दानां व्यवहारादेव प्रथमं गृह्यते व्युत्पत्तिरितरोपायानां तदधीनत्वात् । तथा हि प्रयोजकस्य वाक्योच्चारणान्तरं प्रयोज्यप्रवृत्ति-मुपलभमानो बालकः प्रेक्षावद्वाक्योच्चारणस्य तदन्वयव्यतिरेकानुविधा-यित्वात् प्रयोज्यवृद्धप्रवृत्तिमवधारयति, न तु तद्वाक्यजन्यं प्रवृत्त्यनुकूलं कार्य्यताज्ञानं कल्पयति । स्वप्रवृत्तौ बालकेन कार्य्यताज्ञानस्य हेतुत्वाव-धारणात् प्रेक्षावत्प्रवृत्तिः कार्य्यताज्ञानाधीना प्रवृत्तित्वान्मदीयप्रवृत्तिवदि-त्यपि तेनानुमीयते । तत्र कारणान्तरानुपस्थितेः शब्दस्य चैवोपस्थिते-स्तस्य शब्दस्यैव कार्य्यताज्ञानहेतुत्वमवधार्य्य तत्रैव शक्तिं कल्पयति, तत-स्त्वन्वयव्यतिरेकाभ्यां क्रियाकारकपदानां कार्य्यान्विततत्तदर्थेषु शक्तिं गृह्णाति पूर्वगृहीतसामान्यशक्त्यनुरोधात् । ततश्च पदं कार्य्यान्वितज्ञान-शक्तं पदत्वादिति सामान्यतोऽवगतः स्वार्थः, विशेषस्तु परत उत्तर-काले शिक्षकोपदेशादिभिरवगम्यते । अतः प्रवृत्तिपराणां वाक्यानां प्रव-र्त्तकज्ञानजनकत्वं सम्भवति, न तु तद्गतानां पदानामेव । तच्च क्वचित् साक्षात् क्वचिच्च परम्परया कार्य्यान्वितं भवति । तत्र साक्षात् 'घटमा-नये'त्यादिवाक्ये, परम्परया तु विधिशेषीभूतार्थवादादाविति विशेषः । एवं पदार्थमात्रे शक्तिग्रहमपजानाना गुरुतार्किका वाक्यार्थे हि शक्तिज्ञान-मवधारयन्ति ।

नापेक्षित इति गुरुतार्किकाणामन्विताभिधाने महानाग्रहः। भाष्यकारैस्तु तर्कपादेऽभिहितान्वयवादः समादृतः। अतो भट्टतार्किका आहुः। "प्रकृतौ यः पदार्थो यथा स्मृतस्तथैव विकृतावपि स्मर्त्तव्यः। प्रकृतौ तु देवतायाः पदमूलकं स्मरणमासीदिति विकृतावपि पदविशेषाध्याहारपक्ष आवश्यकः" इति। एवं पदार्थे शक्तिज्ञानमुभयसम्मतम्।

पक्षद्वयेऽपि फलसाम्ये मीमांसकानामभिहितान्वये विशेषत आग्रहे किं निमित्तमिति चेत्? प्राचीनानां मतेऽवयवातिरिक्तं समुदायाभिधं वस्तु नरशृङ्गप्रायं भवति। एवं च पदे विजातीयशक्तिद्वयकल्पनाऽपेक्षया विजातीययोः पदपदार्थयोरेव शक्तिद्वयाङ्गीकारो युक्तः। तथा हि भाष्ये "न च पदार्था एव वाक्यार्थः। सामान्ये हि पदं प्रवर्त्तते, विशेषे वाक्यम्। अन्यच्च सामान्यमन्यो विशेष" इति। अत एव 'तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादि'ति सूत्रमप्युपपद्यते। अत्र ह्यर्थस्य तन्निमित्तत्वादित्यर्थ एव वाक्यार्थं प्रति निमित्तमिति स्पष्टमुक्तम्। अन्यथा पूर्वपक्षप्रथानुसारेण पूर्ववर्णसंस्कारसहितान्त्यवर्णस्य पदार्थ-ज्ञानसहकृतस्यान्वयबोधकत्वेऽन्वयस्य कृत्रिमत्वं व्यामोहत्वं वा दुर्वार-मिति वेदप्रामाण्यमपि मीमांसकानां न सिध्येत्। तदुक्तं भाष्यकारेण—तद्भूताधिकरणपूर्वपक्षग्रन्थे 'तस्मात् कृत्रिमो वाक्यार्थो व्यामोहो वे'ति।

प्राभाकराणामन्विताभिधानवादो न सूत्रारूढो न च भाष्यारूढः किन्तु स्वकल्पित एव। तथा च स वादोऽद्वैतिनां 'तत्त्वमसी'त्यादिवाक्य-साधारणो न भवति। अभिहितान्वयवादस्तु न तादृशः। स हि सूत्रादिरूढ इति प्रागेव दर्शितः। स च वादो नाद्वैतिनां प्रतिकूलः साधारणत्वात्। तदेवाद्वैतिनो "व्यवहारे भाट्टनय" इति व्यवहारनिर्वाहं सर्वमपि ततः कुर्वन्ति। अपि च मन्त्राणां विनियोगविधिदृष्ट्या धर्म्म-प्रामाण्यमभिहितान्वये सम्भवत्येव। पाश्चात्यास्तु तदीयधर्मग्रन्थ-व्याख्यावसरे गुरुमतमिव मतविशेषं समाश्रयन्ति, व्यवहारविधौ पुनस्ते भाट्टमतमिव मतविशेषमङ्गीकुर्वन्ति न तु गुरुमतमिति चित्रम्।

शब्दस्वरूपादिप्रतिपादनानन्तरं वेदस्वरूपं निरूप्यते। प्राग्वर्णितानामृगादीनां मध्ये ऋग्वेदस्य शाकलादयो दश शाखाभेदाः सन्ति। यजुर्वेदस्य चरकादयः षडशीतिर्भेदाः। तत्र वाजसनेयानां जाबालादयः सप्तदश भेदास्तैत्तिरीयाणां तु द्विभेदावौख्यखाण्डिकेयाविति। खाण्डिकेयानां तु पञ्च भेदा आपस्तम्बी बौधायनी हिरण्यकेशी ( सत्याषाढी वा ) भारद्वाजी वाधूली चेति। सामवेदस्य किल सहस्रं भेदा आसन् राणायनीयाः कौथुमा इत्येवमादयः। तत्रोक्तं विशेषानध्यायेष्वधीयानास्ते शतक्रतुवज्रेणाभिहताः प्रनष्टा इति। अथर्ववेदस्य पैप्पलादयो नव भेदाः सन्तीति।

इदानीं पुनश्चिन्त्यते वेदस्य पौरुषेयत्वमपौरुषेयत्वं वा किं युक्तम्? तत्रापौरुषेयं वाक्यं वेद इति मीमांसका मन्यन्ते। शब्दस्य नित्यत्वेन वेदानामपौरुषेयत्वं सेत्स्यतीति। तदपौरुषेयत्वे प्रमाणं च—'वाचाऽविरूपनित्यये'ति श्रुतिः। भवति च तदनुवादिनी स्मृतिः "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवे"ति। अपौरुषेयत्वं खलु प्रमाणान्तरेणार्थमुपलभ्य विरचितं यद् भारतादिवत् तद्भिन्नत्वमेव। वेदानामपौरुषेयत्वे शङ्कापि कल्पिता सन्निकृष्टकाला वेदा कृतका इदानीन्तना इति। तदेव सूत्रितं 'वेदांश्चैके सन्निकर्षं पुरुषाख्याः' इति। तदर्थश्च पुरुषेण हि समाख्यायन्ते वेदाः काठकं कलापकं पैप्पलादकं मौद्गलं चेति। केषांचित्तु शङ्का "बबरः प्रावाहणिरि"त्येवमादिजन्ममरणवत्पुरुषाणां समुल्लेखसद्भावाद् वेदस्य नित्यत्वं न सेत्स्यतीति। तदेव शङ्कासूत्र'मनित्यदर्शनाच्चे'ति। अत्र सूत्रत्रयेण समाधत्ते जैमिनिमुनिः 'उक्तं तु शब्दपूर्वत्वम्, आख्याप्रवचनात्, परं तु श्रुतिसामान्यमात्रमि'ति। अयमभिप्रायः। "वाचाऽविरूपनित्यये"त्यादिश्रुतिभ्यो वेदानामपौरुषेयत्वं गम्यते। अपि च यदुक्तं कर्तृलक्षणा समाख्या काठकाद्येति, तत्र प्रवचनात् कठेनाधीतं प्रोक्तं वेत्यतः काठकं न तु कृतमिति बोद्धव्यम्। यच्चोक्तं बबरः प्रावाहणिरिति तत्र प्रशब्दः प्रकर्षे वहतिश्च प्रापणे न त्वस्य

समुदायः क्वचित् सिद्धः। तस्माद् यः प्रवाहयात स प्रावाहणिः। एवं भूते तत्त्वे बबर इति शब्दानुकृतिः स्यात्। एतत् सर्व्वं मनसि निधाय सूत्रितं 'परन्तु श्रुतिसामान्यमात्रमि'ति।

नैयायिकास्तु वेदानामीश्वरकर्त्तृत्वं मन्यन्ते। तत्कर्त्तृत्वे प्रमाणं चानुमानम्। अनुमानं खलु वेदवाक्यरचना वक्तृयथार्थवाक्यार्थज्ञानपूर्वा ग्रामेऽस्मिन् पञ्च ब्राह्मणाः सन्तीत्यस्मदादिवाक्यवद् रचनेति। अत्र तु मीमांसकाः श्रूयमाणकर्त्तृत्वं स्मर्य्यमाणकर्त्तृत्वं चोद्भावयन्ति। तदुक्तम्—"न कश्चिद् वेदकर्त्तास्ति वेदस्मर्त्ता चतुर्म्मुखः" इति। एतदपि केचिन्नैयायिका न सहन्ते। तन्मते वेदानामीश्वरकर्त्तृकत्वे प्रमाण "अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेद" इत्यादि। "तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे" इत्यपि च। अत "ऋग्वेद एवाग्ने-रजायत यजुर्वेदो वायोः सामवेद आदित्याद्" इत्यादिश्रुतेरीश्वरस्याग्न्यादि-प्रेरकत्वेन वेदानां पौरुषेयत्वमनुमीयते। तत्रापि केचिन्मीमांसका मन्यन्ते सजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वं पौरुषेयत्वमिति। तदेव भारतादीनां सजातीयोच्चारणमनपेक्ष्योच्चारणमिति तेषां पौरुषेयत्वं सिध्यति। परमेश्वरस्तु सर्गाद्यकाले प्राणिनां भोगभूतये लीलाविग्रहं परिगृह्य पूर्वसर्गसिद्धवेदानुपूर्वीकं वेदमालोचितवान् न तु विजातीयं वेदमिति पौरुषेयत्वं वेदस्य कदाचिदपि न कल्पनीयम्। एवं हि मीमांसा-दर्शने वेदपौरुषेयत्वं परास्तं कर्त्रनुपलम्भात्। तदुक्तं तन्त्रवार्त्तिके भट्टपादैः—

प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः।
लोकेष्वप्यश्रुतप्रायैर्ऋग्वेदं कः करिष्यति॥ इति।

द्विविधो वेदः—मन्त्ररूपो ब्राह्मणरूपश्चेति। मन्त्रा ऋग्यजुः-सामाख्याः, ब्राह्मणं तु विध्यादिरूपम्। एतत् सर्वं प्रागेव दर्शितम्। स च वेदः पुन र्विप्रपरिव्राजकन्यायेन विधिमन्त्रनामधेयनिषेधार्थवादभेदात्

पञ्चविधो भवति। तत्र विधिः पूर्वं वेदप्रस्थाने सामान्यत उक्त इदानीम् अवान्तरभेदेन स विस्तरशो वितन्यते।

द्विविधो विधिः प्रत्यक्षः कल्प्यश्चेति। प्रत्यक्षभेददर्शनेन प्रत्यक्ष-विधिभेदाः प्रायश उपलभ्यन्ते। अतस्त इह न पृथगुच्यन्त। कल्प्यो-ऽप्यनेकधा विधिकल्प्योऽर्थवादकल्प्यो मन्त्रकल्प्य इत्येवमादिः। तत्र विधि-कल्प्यो यथा विशेषणविधिः। अर्थवादकल्प्यस्तु द्विविधः स्वतन्त्रार्थवाद-कल्प्यो विध्यन्तरशेषार्थवादकल्प्यश्चेति। आद्यस्त्रिविधः फलार्थवादकल्प्यः सिद्धवत्कीर्त्तनार्थवादकल्प्य उपाख्यानार्थवादकल्प्यश्चेति। अन्त्य उपा-ख्यानार्थवादकल्प्योऽपि द्विविध एककर्त्तृकोपाख्यानरूपपरकृतिकल्प्यो-ऽनेककर्त्तृकोपाख्यानरूपपुराकल्पकल्प्यश्चेति। तत्र विध्यन्तरशेषार्थ-वादकल्प्यो यथा "उपरि हि देवेभ्यो धारयतीति। फलार्थवादकल्प्यो यथा "यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोती"ति। सिद्ध-वत्कीर्त्तनार्थवादकल्प्यो यथा "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्य-नुष्टुप् च। अत्र ह्येवावपन्त्यत एवोद्वपन्ती"ति। एककर्त्तृकोपाख्यान-रूपपरकृतिकल्प्यो यथा—"ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदि"ति। अनेककर्त्तृकोपाख्यानरूपपुराकल्पकल्प्यश्च यथा "तावब्रूतामग्नीषोमावाज्यस्यैव......पौर्णमास्यां यजन्नि"ति। मन्त्रकल्प्यो-ऽपि द्विविधो मन्त्रगताख्यातस्यैव लेट्त्वकल्पनाद् विधियुक्तवाक्यान्तर-कल्पनाच्च। तत्राद्यो यथा—"वसन्ताय कपिञ्जलानालभेत" इति। द्वितीयो यथा—उपांशुयाजादौ याज्यानुवाक्यासूक्तवाकादिमन्त्रकल्प्यो देवतादिविधिर्यथा वा "उच्चादिवि दक्षिणावन्त" इत्याद्यश्वदानफल-विधिः। एतत् सर्व्वं तत्रभवता सोमेश्वरेण विरोधाधिकरणभङ्गटीका-व्याख्यावसाने व्याख्यातम्।

# सर्वप्रत्ययमाला

[ शङ्कराचार्यविरचिता ]

धातवोऽकर्मकाः प्राहुः क्रियां कर्मानपेक्षिणीम् ।
आस्ते शेते भवत्यस्ति तिष्ठतीत्यादयो हि ते ॥ ९ ॥
भूवाद्याः शब्विकरणा भवतीत्येवमादयः ।
शपो नाशस्तु लुक्संज्ञस्तदत्तीत्यादिषु भवेत् ॥ १० ॥
शपो नाशः श्लु-संज्ञश्चेज् जुहोत्याद्या विलक्षणाः ।
तत्र द्विर्वचनेनापि रूपभेदः स्फुटो भवेत् ॥ ११ ॥
दीव्यति श्यन्, श्नुः सुनोति, शस्तुदत्यादयो मताः ।
रुणद्धीत्यादिषु श्नम् स्यादुस्तनोत्यादिधातुषु ॥ १२ ॥
क्रीणातीत्यादिषु श्ना स्याद्, वा ण्यन्ताश्च चुरादयः ।
लटो लङो लिङो लोटो यग् भवेद् भावकर्मणोः ॥
अकर्मकेषु यग् भावे, भवत्यन्यत्र कर्मणि ॥ १३ ॥
भूतमात्रं लुङोऽर्थः स्याद्, भाविमात्रं लटो भवेद् ।
अनद्यतनभूते लङ् , भाव्यनद्यतने तु लुट् ॥ १४ ॥
पदप्रयोक्त्रा चादृष्टे भूतानद्यतने तु लिट् ।
क्रियान्तरातिपत्तौ तु भाव्यनद्यतने तु लङ् ॥ १५ ॥
वर्तमानो लटोऽर्थः स्यादाशीर्विध्यादिवाचकौ ।
लिङ्-लोटौ, लेट्प्रयोगस्तु वेदेष्वेवावगम्यताम् ॥ १६ ॥
सनादिप्रत्यये रूपं भवेद् भूवादिधातुषु ।
चुरादिषु स्वतन्त्रे णिचि चोरयत्येवमादयः ॥ १७ ॥
भू-वादिसर्वधातुभ्यः स्यात् प्रयोजककर्तरि ।
भोजयत्यतिथिं विप्रो भावयत्यात्मजान् पिता ॥ १८ ॥
जटी भीषयते बालानिति हेतावपीष्यते ।
णिचि प्रातिपदिकेषु चूर्णयत्येवमादयः ॥ १९ ॥

पञ्चविधो भवति। तत्र विधिः पूर्वं वेदप्रस्थाने सामान्यत उक्त इदानीम् अवान्तरभेदेन स विस्तरशो वितन्यते।

द्विविधो विधिः प्रत्यक्षः कल्प्यश्चेति। प्रत्यक्षभेददर्शनेन प्रत्यक्ष-विधिभेदाः प्रायश उपलभ्यन्ते। अतस्त इह न पृथगुच्यन्त। कल्प्यो-ऽप्यनेकधा विधिकल्प्योऽर्थवादकल्प्यो मन्त्रकल्प्य इत्येवमादिः। तत्र विधि-कल्प्यो यथा विशेषणविधिः। अर्थवादकल्प्यस्तु द्विविधः स्वतन्त्रार्थवाद-कल्प्यो विध्यन्तरशेषार्थवादकल्प्यश्चेति। आद्यस्त्रिविधः फलार्थवादकल्प्यः सिद्धवत्कीर्त्तनार्थवादकल्प्य उपाख्यानार्थवादकल्प्यश्चेति। अन्त्य उपा-ख्यानार्थवादकल्प्योऽपि द्विविध एककर्त्तृकोपाख्यानरूपपरकृतिकल्प्यो-ऽनेककर्त्तृकोपाख्यानरूपपुराकल्पकल्प्यश्चेति। तत्र विध्यन्तरशेषार्थ-वादकल्प्यो यथा "उपरि हि देवेभ्यो धारयतीति। फलार्थवादकल्प्यो यथा "यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोती"ति। सिद्ध-वत्कीर्त्तनार्थवादकल्प्यो यथा "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्य-नुष्टुप् च। अत्र ह्येवावपन्त्यत एवोद्वपन्ती"ति। एककर्त्तृकोपाख्यान-रूपपरकृतिकल्प्यो यथा—"ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदि"ति। अनेककर्त्तृकोपाख्यानरूपपुराकल्पकल्प्यश्च यथा "तावब्रूतामग्नीषोमावाज्यस्यैव……पौर्णमास्यां यजन्नि"ति। मन्त्रकल्प्यो-ऽपि द्विविधो मन्त्रगताख्यातस्यैव लेट्त्वकल्पनाद् विधियुक्तवाक्यान्तर-कल्पनाच्च। तत्राद्यो यथा—"वसन्ताय कपिञ्जलानालभेत" इति। द्वितीयो यथा—उपांशुयाजादौ याज्यानुवाक्यासूक्तवाकादिमन्त्रकल्प्यो देवतादिविधिर्यथा वा "उच्चादिवि दक्षिणावन्त" इत्याद्यश्वदानफल-विधिः। एतत् सर्व्वं तत्रभवता सोमेश्वरेण विरोधाधिकरणभङ्गटीका-व्याख्यावसाने व्याख्यातम्।

( क्रमशः )

# सर्वप्रत्ययमाला

[ शङ्कराचार्यविरचिता ]

धातवोऽकर्मकाः प्राहुः क्रियां कर्मानपेक्षिणीम् ।
आस्ते शेते भवत्यस्ति तिष्ठतीत्यादयो हि ते ॥ ९ ॥
भूवाद्याः शब्विकरणा भवतीत्येवमादयः ।
शपो नाशस्तु लुक्संज्ञस्तदत्तीत्यादिषु भवेत् ॥ १० ॥
शपो नाशः श्लु-संज्ञश्चेज् जुहोत्याद्या विलक्षणाः ।
तत्र द्विर्वचनेनापि रूपभेदः स्फुटो भवेत् ॥ ११ ॥
दीव्यति श्यन्, श्नुः सुनोति, शस्तुदत्यादयो मताः ।
रुणद्धीत्यादिषु श्नम् स्यादुस्तनोत्यादिधातुषु ॥ १२ ॥
क्रीणातीत्यादिषु श्ना स्याद्, वा ण्यन्ताश्च चुरादयः ।
लटो लङो लिङो लोटो यग् भवेद् भावकर्मणोः ॥
अकर्मकेषु यग् भावे, भवत्यन्यत्र कर्मणि ॥ १३ ॥
भूतमात्रं लुङोऽर्थः स्याद्, भाविमात्रं लटो भवेद् ।
अनद्यतनभूते लङ्, भाव्यनद्यतने तु लुट् ॥ १४ ॥
पदप्रयोक्त्रा चादृष्टे भूतानद्यतने तु लिट् ।
क्रियान्तरातिपत्तौ तु भाव्यनद्यतने तु लङ् ॥ १५ ॥
वर्तमानो लटोऽर्थः स्यादाशीर्विध्यादिवाचकौ ।
लिङ्-लोटौ, लेट्प्रयोगस्तु वेदेष्वेवावगम्यताम् ॥ १६ ॥
सनादिप्रत्यये रूपं भवेद् भूवादिधातुषु ।
चुरादिषु स्वतन्त्रे णिचि चोरयत्येवमादयः ॥ १७ ॥
भू-वादिसर्वधातुभ्यः स्यात् प्रयोजककर्तरि ।
भोजयत्यतिथिं विप्रो भावयत्यात्मजान् पिता ॥ १८ ॥
जटी भीषयते बालानिति हेतावपीष्यते ।
णिचि प्रातिपदिकेषु चूर्णयत्येवमादयः ॥ १९ ॥

वर्तमानार्थसामीप्ये भूतार्थे स्मोत्तरे तथा ।
भाव्यर्थ-यावद्-योगे च पुरा-योगे लडिष्यते ॥ २० ॥

इति श्रीशङ्करार्यविरचितायां सर्वप्रत्ययमालायां
तिङन्तपरिभाषा नाम नवमोऽध्यायः ॥ ९ ॥

दशमोऽध्यायः

भवत्याविर्भवत्यस्ति प्रादुर्भवति विद्यते ।
उत्पद्यतेऽवतरति वंशे पुत्रोऽस्य जायते ॥ १ ॥
प्रादुरस्त्याविरस्त्येवं पुत्रः संपद्यते पितुः ।
निपद्यते कल्पते च श्रीमान्निवर्तते ततः ॥ २ ॥
निर्वर्तयति जनयत्यवतारयति क्षितौ ।
भावयत्युत्पादयति पिता पुत्रानथो णिचि ॥ ३ ॥
प्रसूते सूयते सूते निर्मिमीते सृजत्यसौ ।
प्रादुष्करोति रचयत्यन्यान् रचयते सुतान् ॥ ४ ॥
उत्पित्सतेऽर्भको गर्भाद् बुभूषति स निश्चयम् ।
उद्भिभावयिषत्यन्यानुत्पिपादयिषत्यसौ ॥ ५ ॥

( क्रमशः )

---

## उद्भटश्लोकौ

भूसत्तायां विनष्टायां धनधान्ये गतेऽपि च ।
गते च तनुविस्तारे वदस्थैर्येऽत्र का गतिः ॥ १ ॥
क हरिः शेते का च निकृष्टा को बहुलार्थः किं रमणीयम् ।
वद कातन्त्रे कीदृक् सूत्रं शेषे—से वा वा पररूपम् ॥ २ ॥

## मीमांसादर्शनम्

(पूर्वानुवृत्तम्)

प्रसङ्गे प्रतिषेधो नित्यानुवादः। यच्चानित्यदर्शनम्—"बबरः प्रावाहणिरकामयत" इति, तत्, परिहृतम् अर्थवादाक्षेपेण पुनरुत्थितम्, इदानीमर्थवादप्रामाण्ये तेनैव परिहारेण परिहरिष्यत इति ॥ १८ ॥

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥**

इह ये विधिवन्निगदा अर्थवादास्त उदाहरणम्। "औदुम्बरो यूपो भवत्यूर्ग् वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै"

---

तच्छेषत्वं तत्राह—**असतीति**। असत्यामपि प्राप्तौ नित्यानुवादो दृष्टान्तार्थश्च ; यथाऽन्तरिक्षे दिवि वा चयनमनुमितम्, एवं शुद्धायामपि पृथिव्यामित्यर्थः। अनित्यसंयोगपरिहारार्थमपि **यथोक्तमिति** सूत्रावयवं व्याचष्टे—**यच्चेति**। **अनित्यदर्शनम्** अनित्येन संयोगदर्शनं **तत् परिहृतम्**। "परं तु श्रुतिसामान्यमात्रम्" इत्यनेनेति शेषः। प्रकर्षेणावाहयतीति प्रावाहणिशब्दस्य नित्ये वायौ व्युत्पत्तेः, बबरशब्दस्य च शब्दानुकृतित्वात् प्रवाहणाख्यपुरुषासिद्धया प्रावाहणेरन्यस्यासम्भावान्नानित्यस्य संयोग इत्युक्तमित्यर्थः। स्यान्मतम्—नित्यार्थाभ्युपगमोऽनर्थकः ; नित्यार्थानामपि "आपो वै शान्ताः" इत्यादीनामानर्थक्यादित्युक्तमिति, तत्राह—**अर्थवादेति**। "आपो वै शान्ताः" इत्यादीनां स्तुत्यर्थेन प्रामाण्यस्य प्रतिपादितत्वात्तेनैव प्रामाण्यस्य प्रतिपादनेन परिहृतमित्यर्थः।

नन्वर्थवादभावाभावयोर्विधेरेव प्रवर्तकत्वात् किमर्थवादप्रामाण्याभ्युपगमेनेत्याशङ्क्याभ्युपगम्याप्यार्थवादिकफलकल्पनादेरर्थवादप्रामाण्याधीनत्वात् प्रयोजनवदेवार्थवादप्रामाण्यमिति मत्वाधिकरणार्थमुपसंहरति—**इतीति** ॥ १८ ॥

सामान्येनार्थवादानामानर्थक्यनिरासेन स्तुतिलक्षणया विध्येकवाक्यत्वेन प्रामाण्ये साधिते तेष्वेव केषुचिद् विधित्वेनैवार्थवत्त्वसम्भवे किमिति स्तुत्यर्थत्वेनार्थवत्त्वमाश्रीयत इत्याशङ्क्यार्थवादत्वमेवानेन स्थिरीक्रियते इति सङ्गतिं मत्वा विषयं विविच्य दर्शयति—**इहेत्यादिना**। **"ये विधिवन्निगद्यन्तेऽर्थवादाश्च** ते तथा।" चिन्ताप्रयोजनं तु फलविधिसरूपाणां स्तुत्यर्थत्वेनार्थवादत्वसिद्धिः। अत्रापूर्वत्वैकवाक्यत्वाभ्यां संशयमाह—

[ तै. सं. २।१।१ ] इति। किमस्य विधिः कार्यम् उतास्यापि स्तुतिरिति ? किं तावत् प्राप्तम् ? "विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ।" विधिवन्निगदेष्वेवंजातीयकेषु फलविधिः स्यात्, फलं ह्यवगम्यते। तथाह्यपूर्वमर्थं विधास्यति। इतरथा स्तुतिवादमात्रमनर्थकं स्यात्। स्तुतश्चास्तुतश्च तावानेव सोऽर्थः। अपि च "ऊर्जोऽवरुध्यै" इति प्रयोजनं श्रूयते। न च प्रशस्तोऽयमर्थ इति कश्चिच्छब्दोऽस्ति। लक्षणया तु स्तुतिर्गम्यते। श्रुतिश्च लक्षणाया ज्यायसीति ॥ १६ ॥

---

**किमिति। अस्येति** जातावेकवचनम्। अथवा, **अस्य** उदाहरणस्य **विधिः** अज्ञातज्ञापनम्। **अस्यापीति** "वायुर्वै क्षेपिष्ठा" इत्यादिवदित्यर्थः। कतरदत्र युक्तिमदिति जिज्ञासमानं प्रति पूर्वपक्षसूत्रमादत्ते—**किमित्यादिना**। "विधिः स्याद्" इति सामान्यदर्शनेन फलविधिसरूपाणां सर्वेषामप्युदाहरणत्वमभिमतमिति सूचयन् व्याचष्टे—**विधिवदिति**। अवधारणार्थेन 'वा'शब्देन सूचितं हेतुमाह—**फलं हीति**। यथा हि गम्यमानत्वात् स्तुतेस्तत्परत्वं तथा फलस्यापि गम्यमानत्वात् तादर्थ्यमेवैषामित्यर्थः।

ननु फलस्य गम्यमानत्वं स्तुत्यर्थतयापि स्यादित्याशङ्क्य **"अपूर्वत्वाद्"** इति व्याचष्टे—**तथेति**। **तथा** सति 'पूर्वं' प्रमाणान्तरम् अस्य न विद्यत **इत्यपूर्वम्** अनन्यलभ्यम् **अर्थं विधास्यति** प्रतिपादयिष्यति स्तुतेर्विध्युद्देशादप्याक्षेपात् फलस्य चानन्यलभ्यत्वात् तद्विधित्व एव प्रमाणान्तरापूर्वार्थत्वमित्यर्थः। स्तुतिश्च सिद्धार्थकथनरूपत्वाद् **वादमात्रम्**, नाज्ञातज्ञापकम्; तच्च **अनर्थकम्** इत्यर्थः। आनर्थक्ये **हि**-शब्दसूचितं हेतुं व्याचष्टे—**स्तुतश्चेति**। न हि "पर्णमयी" इत्यादौ स्तुतत्वेन स्तुतिमभ्युपगच्छतापि(प्य)पूर्वार्थत्वमपि नेष्यत इत्याशङ्क्य न स्तुतत्वेन कश्चिदतिशयोऽस्तुतत्वेन वा निकर्षो दृश्यते; तेन प्रवृत्तावपि न विशेष इति भावः। **अपूर्वत्वादिति** सूत्रावयवं प्रकारान्तरेण व्याकुर्वन् हेत्वन्तरमाह—**अपि चेति**। एवं कामपदाभावेऽपि तादर्थ्यचतुर्थ्या स्फुटं फलावगमादित्यर्थः।

ननु "वायुर्वा" इत्यादौ प्रशस्तोऽयमिति पदाभावेऽपि स्तुतिस्तद्वत् किं न स्यादत आह—**लक्षणयेति**। इह च श्रुत्यर्थसम्भवात् न लक्षणा युक्तेत्याह—**श्रुतिश्चेति**। अनेन लक्ष्यमाणस्तुतेर्वाच्यार्थपूर्वकत्वाद् वाच्यार्थस्य फलस्यानन्यपूर्वत्वादपूर्वशब्देन पूर्वम् अर्थान्तरमस्य न विद्यते इति श्रौतार्थलाभोऽभिसंहित इति सूत्रं व्याख्यातम् ॥ १९ ॥

## लोकवदिति चेत् ॥ २० ॥

इति चेत् *पश्यसि—स्तुतिरनर्थिका न च शब्देनावगम्यत इति। लौकिकानि भवन्तो विदाङ्कुर्वन्तु। तद् यथेयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा स्त्र्यपत्यानष्टप्रजा चेति। क्रेतव्येत्युक्ते गुणाभिधानात् प्रवर्तन्तेतरां क्रेतारः। बहुक्षीरेति च गुणाभिधानमवगम्यते। तद्वद् वेदेऽपि भविष्यति ॥ २० ॥

## न पूर्वत्वात् ॥ २१ ॥

नैतदेवम्। लोके विदितपूर्वा अर्था उच्यन्ते बहुक्षीरादयः। तेषां विज्ञानमेव न प्रयोजनम्। अतः प्रशंसा गम्यते, अविदितवादे न श्रद्दधीरन् पूर्ववचनादिव। विदितत्वादेव च प्ररोचयन्ते। वैदिकेषु पुनर्यदि विधि-

---

यदुक्तं "वादमात्रमनर्थकम्" इति तत्र चोदयति—**लोकवदिति**। स्तुतेरर्थवत्त्वं प्रतिजानान इति चेदिति व्याचष्टे—**इति चेदिति**। **इति**शब्दार्थमाह—**दृश्यत** इत्यादिना। ऊर्जोऽवरुध्या इत्यादिना **शब्देन** या **स्तुतिर्गम्यते** सा **अनर्थिके**ति न **दृश्यते** युज्यते, अर्थवत्त्वेव युक्तेत्यर्थः। कुत इत्याशङ्क्य "लोकवदिति" भागं व्याचष्टे—**लौकिकानीति**। **विदाङ्कुर्वन्तु** विचारयन्तु। कानि तानीत्यपेक्षायां विधेय-स्तावकतया सार्थकं लौकिकं वाक्यमुदाहरति—**तद् यथेति**। लौकिकस्यापि स्तुति-पदस्यानर्थक्यात् साध्यविकलो दृष्टान्तस्तत्राह—**क्रेतव्येति। क्रेतव्येत्युक्ते** प्रवर्तमानाः **क्रेतारो गुणाभिधानात् प्रवर्तन्तेतरां** प्रवृत्त्यतिशयवन्तो दृश्यन्त इत्यर्थः। गुणाभिधानं चेह स्फुटमित्याह—**बहुक्षीरेति**। अतः प्रवृत्त्यतिशयाय वेदेऽपि स्तुतिरर्थवतीत्याह—**तद्वदिति** ॥२०॥

"न पूर्वत्वात्" इत्यत्र नञर्थं दर्शयन् दृष्टान्तवैषम्यं प्रतिजानीते—**नैतदिति**। वैषम्यं दर्शयन् "पूर्वत्वात्" इति व्याचष्टे—**लोक इति**। मानान्तरावगतार्थत्वेन बहु-क्षीरादिवाक्यानामप्रमाणकत्वात् प्रशंसार्थता युक्तेत्यर्थः, वेदे त्वविदितवादत्वाद् "ऊर्जोऽवरुध्या" इत्यादेर्न प्रशंसार्थता इत्याह—**अविदितेति**। **पूर्ववचनादिव** वैदिकविध्युद्देशादि-वेत्यर्थः। न च "वसन्तादि"वाक्ये विध्युद्देशादेव स्तुतेरङ्गीकारात् फलमश्रद्धेति वाच्यम्, तत्रापि कल्पितेनैव स्तुतिपदेन प्ररोचनाङ्गीकारादिति भावः। विदितत्वाद् बहुक्षीरादयः प्ररोचयन्ति इत्येतदुपपादयति—**विदितत्वादेवेति**। नोक्तिमात्रेण, तथा सति विसंवादेऽपि प्ररोचनाप्रसङ्गादिति भावः।

---

* "दृश्यते......गम्यते" इति टीकाङ्गीकृतः पाठ इति प्रतिभाति।

शब्देन न प्ररोचयन्ते, नतरामर्थवादेन। जातशङ्को हि विधिशब्दे स तदानीम्। अथ विधिशब्देन प्ररोचितः, किमर्थवादशब्देन? अपि च वेदे व्यक्तमसंवादः, "ऊर्जोऽवरुध्यै" इत्यप्रसिद्धं वचनम्। "ऊर्ग् वा उदुम्बर" इति हेतुत्वं चाप्रसिद्धम्। यस्मादूर्गुदुम्बरस्तस्मात्तन्मयो यूपः कर्तव्य इत्यूर्गुदुम्बर इत्यनृतवचनादन्यदस्यानृतमिति परिकल्प्येत॥ २१॥

## उक्तं तु वाक्यशेषत्वम्॥ २२॥

उक्तमस्माभिर्वाक्यशेषत्वम्—विधिना त्वेकवाक्यत्वात् [१।२।७] इति। ननूक्तम्—फलवचनमिह गम्यते न स्तुतिरिति [१।१।१६ भा]? यदिह

---

ननु वेदेऽपि विधितः प्रवृत्त्यवगमात् तत्समभिव्याहृतानामर्थवादानां तादर्थ्येन विधिसम्भवादेव प्ररोचनार्थत्वं सम्भवति इत्यत आह—**वैदिकेष्विति। नतरामर्थवादेन** प्ररोचयिष्यते इत्यत्र हेतुमाह—**जाताशङ्को हीति**। यो हि मोहात् प्रवर्तकं विधिमुलङ्घ्यार्थवादं प्रवृत्त्यङ्गतया प्रार्थयते स कथं विधावविस्रब्धोऽर्थवादे प्रत्ययं कुर्यादिति भावः। यदि विधेरेव प्रवर्तकत्वसिद्धये प्ररोचकत्वमपीष्यते तत्राह—**अथेति**। एवमविदितपूर्वत्वादूर्गवरोधादीनां प्रशंसार्थत्वमिति सूत्रं व्याख्यायान्यथा विदितपूर्वत्वादपि न तदर्थतेति व्याचष्टे—**अपि चेति**। संवादविरुद्धः **असंवादः** विसंवाद इति यावत्। विसंवादमुपपादयति—**ऊर्जोऽवरुध्या** इति। **अप्रसिद्धत्वं** योग्यानुपलब्धिविषयत्वम्। वर्तमानेनोर्गवरोधेन हि स्तुतिः, तस्य चानुपलब्धेरनुपलब्धिविरोध इति भावः। स्तुतिवाक्ये विसंवादमुक्त्वा हेतुवाक्येऽपि तमाह—**ऊर्गुदुम्बर इतीति**। न ह्यूर्क्छब्दाभिधेयमन्नत्वमभक्ष्ये वृक्षे पक्षधर्मत्वेन प्रसिद्धम्, नापि यत्रान्नत्वं तत्र यूपत्वमिति अन्वयप्रसिद्धिः, तेन हेतुत्वाप्रसिद्धिरित्यर्थः। हेत्वसिद्ध्या साध्यासिद्धिमाह—**यस्मादिति**। "ऊर्गुदुम्बर इत्यनृतवचनाद्" यत् "अन्यत्" साध्यं "यस्माद् ऊर्गुदुम्बरस्तस्मात्" "तन्मय" उदुम्बरमयो "यूपः कर्त्तव्य" इति तदपि "अनृतं परिकल्प्येत" इति योजना॥२१॥

यदुक्तं "वाङ्मात्रं ह्यनर्थकम्" इति तत्राह—**उक्तं तु वाक्यशेषत्वम्**। **तु**शब्दः पक्षव्यावर्तकः "विधिना त्वेकवाक्यत्वात्—" [१।२।७] इति सूत्रेणार्थवादानां स्तुतिद्वारकप्ररोचनया विधिवाक्यशेषत्वस्यास्माभिरुक्तत्वात्। नानर्थक्यमिति सूत्रं योजयति—**उक्तमस्माभिरिति**। एवं स्तुतिद्वारा विध्यङ्गत्वप्रतिपादनेनापूर्वत्वहेतोराद्यं व्याख्यानं दूषयित्वेदानीं स्तुतिद्वारा विध्यङ्गत्वं युक्तं फलस्य श्रूयमाणत्वादिति व्याख्यान्तरमनुवदति—**ननूक्तमिति**। गम्यमानमपि फलवचनमानर्थक्यभयादन्यविषयं वक्तव्यमिति दूषयति—

फलवचनं तदौदुम्बरस्य यूपस्य, न च विहित औदुम्बरो यूपोऽस्ति। तत्र फलवचनमेवानर्थकम्। स्तुतिवचनः शब्दो नास्तीति चेत्, इह फलवचनेन फलवत्ता प्रतीयते फलवांश्च प्रशस्त इति।

तत्र फलवत्तायामानर्थक्यमिति यो द्वितीयोऽर्थः प्रशंसा नाम स गम्यते। लक्षणेति चेत्, न। लक्षणायामर्थवत्ता भवत्येव, लक्षणापि हि लौकिकी। ननूक्तमसंवादो वेदे—न ह्यूर्गुदुम्बर इति? गुणवादेन प्ररोचनार्थतां ब्रूमहे। गौणत्वात् संवादः। किं सादृश्यम्? यथान्नं प्रीतेः साधनमेवमिदमपि प्रीतिसाधनशक्तियुक्तं प्रशंसितुं प्रशंसावाचिना

---

**यदिहेति**। ततः किमत आह—**न चेति**। पशुयागाङ्गतया विहितयूपविशेषत्वादौदुम्बरस्य यूपस्य नामावविहितोऽस्तीत्यर्थः।

ननु तर्हि विहितस्यौदुम्बरयूपस्योत्सर्गविरोधः फलं भविष्यतीत्यत्राह—**तत्रेति**। प्रकरणादेव यागोपकारप्रयोजनलाभात् फलान्तरोक्तिरनर्थिकेत्यर्थः। यदि वा **न चेत्या**देरयमर्थः—"औदुम्बरो यूपो भवति" इति वर्त्तमानापदेशत्वादर्थवादेन विधिर्नेतव्यः। अनर्थवादत्वे त्वविहितत्वान्नास्त्येव यूपस्तथा सति फलवचनमेवानर्थकमिति।

ननु स्तुतिरप्यश्रूयमाणत्वादनादेयेति शङ्कते—**स्तुतीति**। वाचकशब्दाभावेऽपि स्तुत्यवगतिं दर्शयन् फलवचनसिद्ध्यर्थं कथयति—**इहेति**। **फलवत्ता** औदुम्बरयूपस्य प्रशस्त इति 'प्रतीयत' इत्यनुषङ्गः। ननु फलवत्ताप्राशस्त्ययोरवगमे किमिति प्राशस्त्यपरत्वाग्रहः तत्राह—**तत्रेति**। **द्वितीयोऽर्थः** फलवत्तया लक्ष्यमाणः **अवगम्यते** तात्पर्येण प्रतिपद्यते, नाभिनिवेशमात्रात् प्राशस्त्यपरत्वाभ्युपगमः किन्तु आनर्थक्यभयादिति भावः।

नन्वेवमपि लक्षणया स्तुतिर्गम्यते, श्रुतिश्च लक्षणाया गरीयसीत्युक्तमनुवदति*—**लक्षणयेति**। लक्षणयाप्यर्थवत्त्वसम्भवेन श्रुतिलोभादानर्थक्यमाश्रयणीयमिति दूषयति—**लक्षणायामिति**। दृष्टा च मुख्यार्थासम्भवे गङ्गायां घोष इत्यादौ लक्षणेत्याह—**लक्षणापीति**। एवमूर्जोऽवरुध्या इत्यादेः प्रधानफलानुवादेनौदुम्बरयूपस्तुत्यर्थत्वेनाप्यविदितपूर्वत्वं दूषयित्वा "न पूर्वत्वात्" इतिसूत्रद्वितीयवर्णकोक्तमनुवदति—**ननूक्तमिति**। ऊर्जोऽवरुध्या इति तावदङ्के प्रधानगामिफलोपचारस्तुत्यर्थत्वेनाभिमतः, तेनानुपलब्धिविरोधः पूर्णाहुतिन्यायेन परिहृत एवेत्याह—**न चेति**। यदुक्तम् "ऊर्गुदुम्बरः" इति हेतुत्वं

---

* १।२।१९ सूत्रभाष्ये।

प्रीतिसाधनशब्देनोच्यते। शक्यते हि तत् पक्वफलसम्बन्धादूर्गिति वक्तुम् ॥ २२ ॥

**विधिश्चानर्थकः क्वचित्तस्मात् स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥**

"अप्सुयोनिर्वा अश्वो अप्सुजो वेतसः" [ तै. सं. ५।३।१२ ] इति 'अप्सुयोनिरश्वः कर्त्तव्यः' इति विधेरशक्यत्वादानर्थक्यम्। तत्रावश्यं स्तुतिः कल्पयितव्या—शमयित्रीभिरद्भिरश्वस्यावकानां च सम्बन्धो यजमानस्य कष्टं शमयतीति। तत्सामान्यादितरेषु तथात्वं तथेति

चाप्रसिद्धम्" इति* तदपि न, गौणतया तत्सिद्धेरित्याह—**ऊर्गिति**। **गुणः** सादृश्यम्। नन्वग्निमाणवकवदन्नयूपयोर्न सादृश्यमिति योजयति— **किमिति**। प्रीतिसाधनत्वं सादृश्यम् इत्याह— **यथेति**। **इदमपि** उदुम्बरवस्त्वपि। प्रीतिसाधनत्वमप्युदुम्बर-वृक्षस्याभक्ष्यत्वान्नास्तीत्याशङ्क्याह—**तदिति**। प्रीतिसाधनोदुम्बरफलोत्पादनशक्ति-युक्तत्वादुपचारात् प्रशंसावाचिना प्रीतिसाधनवाचिनान्नशब्देनोच्यते प्रशंसितुमित्यर्थः। सोऽयं विवृतः—**शक्यते हीति** ॥२२॥

सम्भवद्विध्येकवाक्यत्वानामपि पृथग्विधित्वाभ्युपगमे तुल्यन्यायतयान्यत्रापि प्राप्ति-ममिप्रेत्याह—**विधिश्चेति**। "क्वचित्" इत्युक्तं विषयं दर्शयन् "विधिश्च" इत्यादि व्याचष्टे—**अप्स्वित्यादिना**। अश्वस्य प्रयत्ननिष्पाद्यत्वात् तद्विधेरशक्यत्वं वेतसादेस्तु स्वभाव-सिद्धत्वादिति मन्तव्यम्। तथापि किमित्याशङ्क्य तस्मादित्यादि व्याचष्टे—**तत्रेति**।

आनर्थक्यमेवास्त्वित्याशङ्क्य तन्निरासाय **अवश्यम्** इत्युक्तम्। स्तुतिमभिनयति—**शमयित्रीभिरिति**। **अवकानां चेति च**-शब्दो वेतसविषयः, तेनैवमन्वयः—अश्वस्य वेतसानां च शमयित्रीभिरद्भिः सम्बन्धो यजमानस्य कष्टं शमयति, अवकानां वेतसानां च ताभिः सम्बन्धो यजमानकष्टं शमयतीति स्तुतिः कल्पयितव्येति। यद्यप्यवकानां नोदाहरणे श्रवणमस्ति, तथाप्यब्योनित्वाविशेषाद्वेतसपदेनैवोपलक्षिताः। न च "स्व एवैनं योनौ प्रतिष्ठापयति" इत्यनेनाप्सु जाते वेतसेऽश्वस्य चयने कृते प्रकृतिविका-रयोरभेदोपचारेण वेतसप्रकृतिभूतास्वप्सु चयनात् स्वे योनौ प्रतिष्ठापनं कृतं भवतीति स्तुतिप्रतीतेः शमयित्रीत्वस्य चापामश्रवणात् तद्द्वारा स्तुतिरिति वाच्यम्। स्वयोनि-प्रतिष्ठापनमात्रोक्त्या प्ररोचनानुपपत्तेः "वेतसशाखयावकाभिश्चाग्निं विकर्षति, आपो वै

* २।२।२१ भाष्ये।

यावत्, तावत्तथात्वमिति। किं तत्सामान्यम्? विध्यसम्भवः स्तुतिसम्भवश्च ॥ २३ ॥

**प्रकरणे च सम्भवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥**

इतश्च पश्यामः स्तुतिरिति। कुतः? इदं समामनन्ति "यो विदग्धः स नैर्ऋतो योऽश्रृतः स रौद्रो यः श्रृतः स दैवतः। तस्माद्विदहता श्रपयितव्यः स दैवतत्त्वाय" [ तै॰ सं॰ २।६।७ ] इति। यदि श्रृतिः, दर्शपूर्णमासयोरेव श्रृतः स्ताविष्यते। तथा सम्भवन्नपकर्षो न कल्प्येत।

---

शान्ताः, शान्ताभिरेवास्य शुचं शमयति" इति वाक्यान्तरगतार्थवादभणितशमयितृत्वस्य यजमानकष्टशमनसाधनत्वोपपादनार्थत्वेनोपादानात्। न च वेतसवाक्येन सहचारादुपलक्षितानामप्यवकानामविधेयत्वान्न स्तुत्यपेक्षेति वदितव्यम्। अत्रार्थवादान्तरेणापां शमयितृत्वे गदिते तत्राग्निविकर्षणसाधनत्वेन विहितयोर्वेतसावकयोः स्तुत्यभावशङ्कानिरासायावकानाम् अद्भिः सम्बन्धेन स्तुतिप्रदर्शनोपपत्तेरिति द्रष्टव्यम्। "तत्सामान्यात्" इति सूत्रावयवमादाय व्याचष्टे—**तथेति**। यावत्सु फलविधिसरूपेषु अर्थवादेषु **तथेति** अप्सुयोन्याद्यर्थवादसमानाकारता तावत्सु **तथात्वं** स्तुतित्वमित्यर्थः। प्रश्नपूर्वकं "तत्सामान्यात्" इति व्याकुर्वंस्तथेत्युक्तं प्रपञ्चयति—**किमित्यादिना** ॥२३॥

फलविधिसरूपाणामर्थवादत्वे हेत्वन्तरं दर्शयितुं "प्रकरणे च" इति सूत्रम्। तत्र **च**शब्दार्थमाह—**इतश्चेति**। न केवलमप्सुयोन्याद्यर्थवादसामान्यादितरेषां स्तुतित्वं वाक्यान्तरसामान्यादपीत्यर्थः। किं तावद् वाक्यान्तरमिति मन्वानः पृच्छति—**कुत इति**। वाक्यमुदाहरति—**इदमिति**। कथमस्य वाक्यस्य स्तुतित्वं येन तत्सामान्यादितरेषु तथात्वं स्यादित्याशङ्क्य "प्रकरणे च सम्भवन्" इति व्याचष्टे—**यदीति**। **श्रृतः** पुरोडाशादिः **स्ताविष्यते** स्तुतो भाविष्यते, प्रकरणनिवेशाय स्तुतित्वाश्रयणं युक्तमिति भावः।

ननु मा भून्निवेशः पूषानुमन्त्रणमन्त्रवदुत्कृष्यतामत आह—**तथेति**। प्रकरणविनिवेशितया सम्भवन्नित्यर्थः। नन्वयमपकृष्यमाणः कल्प्यतेऽर्थवाद नापकर्षस्तत्राह—**अपकृष्यत इति**। ननु विधित्वेऽप्यनपकृष्यमाणोऽस्तु इत्याशङ्क्य तत्र किं यथाश्रुतैव वचनव्यक्तिः—यो विशेषेण दग्धः स निर्ऋतिदेवताकः कार्य्य इति? किं वा यो नैर्ऋतः स विशेषेण दाह्य इति व्यत्ययेन? तत्राद्ये कल्पेऽनेन दर्शपूर्णमासप्रकरणगतेन विध्युद्देशेन देवतान्तरविधानात् उत्पत्तिवाक्यशिष्टाग्न्यादिदेवतापकर्षणं स्यात्, तच्च **सम्भव**प्रसजद् **अपकर्षणं** सति गत्यन्तरे न कल्पनीयमिति सूत्रयोजनया दूषणं वक्तव्यमिति मत

प्रीतिसाधनशब्देनोच्यते। शक्यते हि तत् पक्कफलसम्बन्धादूर्गिति वक्तुम् ॥ २२ ॥

**विधिश्चानर्थकः क्वचित्तस्मात् स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥**

"अप्सुयोनिर्वा अश्वो अप्सुजो वेतसः" [ तै. सं. ५।३।१२ ] इति 'अप्सुयोनिरश्वः कर्त्तव्यः' इति विधेरशक्यत्वादानर्थक्यम्। तत्रावश्यं स्तुतिः कल्पयितव्या—शमयित्रीभिरद्भिरश्वस्यावकानां च सम्बन्धो यजमानस्य कष्टं शमयतीति। तत्सामान्यादितरेषु तथात्वं तथेति

---

चाप्रसिद्धम्" इति* तदपि न, गौणतया तत्सिद्धेरित्याह—**ऊर्गिति**। **गुणः** सादृश्यम्। नन्वग्निमाणवकवदन्नयूपयोर्न सादृश्यमिति योजयति—**किमिति**। प्रीतिसाधनत्वं सादृश्यम् इत्याह—**यथेति**। **इदमपि** उदुम्बरवस्त्वपि। प्रीतिसाधनत्वमप्युदुम्बर-वृक्षस्याभक्ष्यत्वान्नास्तीत्याशङ्क्याह—**तदिति**। प्रीतिसाधनोदुम्बरफलोत्पादनशक्ति-युक्तत्वादुपचारात् प्रशंसावाचिना प्रीतिसाधनवाचिनान्नशब्देनोच्यते प्रशंसितुमित्यर्थः। सोऽयं विवृतः—**शक्यते हीति** ॥२२॥

सम्भवद्विध्येकवाक्यत्वानामपि पृथग्विधित्वाभ्युपगमे तुल्यन्यायतयान्यत्रापि प्राप्ति-ममिप्रेत्याह—**विधिश्चेति**। "क्वचित्" इत्युक्तं विषयं दर्शयन् "विधिश्च" इत्यादि व्याचष्टे—**अप्स्वित्यादिना**। अश्वस्य प्रयत्ननिष्पाद्यत्वात् तद्विधेरशक्यत्वं वेतसादेस्तु स्वभाव-सिद्धत्वादिति मन्तव्यम्। तथापि किमित्याशङ्क्य तस्मादित्यादि व्याचष्टे—**तत्रेति**।

आनर्थक्यमेवास्त्वित्याशङ्क्य तन्निरासाय **अवश्यम्** इत्युक्तम्। स्तुतिमभिनयति—**शमयित्रीभिरिति**। **अवकानां चेति च**-शब्दो वेतसविषयः, तेनैवमन्वयः—अश्वस्य वेतसानां च शमयित्रीभिरद्भिः सम्बन्धो यजमानस्य कष्टं शमयति, अवकानां वेतसानां च ताभिः सम्बन्धो यजमानकष्टं शमयतीति स्तुतिः कल्पयितव्येति। यद्यप्यवकानां नोदाहरणे श्रवणमस्ति, तथाप्यब्योनित्वाविशेषाद्वेतसपदेनैवोपलक्षिताः। न च "स्व एवैनं योनौ प्रतिष्ठापयति" इत्यनेनाप्सु जाते वेतसेऽश्वस्य चयने कृते प्रकृतिविका-रयोरभेदोपचारेण वेतसप्रकृतिभूतास्वप्सु चयनात् स्वे योनौ प्रतिष्ठापनं कृतं भवतीति स्तुतिप्रतीतेः शमयित्रीत्वस्य चापामश्रवणात् तद्द्वारा स्तुतिरिति वाच्यम्। स्वयोनि-प्रतिष्ठापनमात्रोक्त्या प्ररोचनानुपपत्तेः "वेतसशाखयावकाभिश्चाग्निं विकर्षति, आपो वै

---

* २।२।२१ भाष्ये।

यावत्, तावत्तथात्वमिति। किं तत्सामान्यम्? विध्यसम्भवः स्तुतिसम्भवश्च ॥ २३ ॥

**प्रकरणे च सम्भवन्नप्रकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥**

इतश्च पश्यामः स्तुतिरिति। कुतः? इदं समामनन्ति "यो विदग्धः स नैर्ऋतो योऽश्रृतः स रौद्रो यः श्रृतः स दैवतः। तस्मादविदहता श्रपयितव्यः स दैवतत्वाय" [ तै. सं. २।६।७ ] इति। यदि श्रुतिः, दर्शपूर्णमासयोरेव श्रृतः स्ताविष्यते। तथा सम्भवन्नपकर्षो न कल्प्येत।

---

शान्ताः, शान्ताभिरेवास्य शुचं शमयति" इति वाक्यान्तरगतार्थवादभणितशमयितीत्वस्य यजमानकष्टशमनसाधनत्वोपपादनार्थत्वेनोपादानात्। न च वेतसवाक्येन सहचारादुपलक्षितानामप्यवकानामविधेयत्वान्न स्तुत्यपेक्षेति वदितव्यम्। अत्रार्थवादान्तरेणापां शमयितीत्वे गदिते तत्राग्निविकर्षणसाधनत्वेन विहितयोर्वेतसावकयोः स्तुत्यभावशङ्कानिरासायावकानाम् अद्भिः सम्बन्धेन स्तुतिप्रदर्शनोपपत्तेरिति द्रष्टव्यम्। "तत्सामान्यात्" इति सूत्रावयवमादाय व्याचष्टे—**तथेति**। यावत्सु फलविधिसरूपेषु अर्थवादेषु **तथेति** अप्सुयोन्याद्यर्थवादसमानाकारता तावत्सु **तथात्वं** स्तुतित्वमित्यर्थः। प्रश्नपूर्वकं "तत्सामान्यात्" इति व्याकुर्वंस्तथेत्युक्तं प्रपञ्चयति—**किमित्यादिना** ॥२३॥

फलविधिसरूपाणामर्थवादत्वे हेत्वन्तरं दर्शयितुं "प्रकरणे च" इति सूत्रम्। तत्र **च**शब्दार्थमाह—**इतश्चेति**। न केवलमप्सुयोन्याद्यर्थवादसामान्यादितरेषां स्तुतित्वं वाक्यान्तरसामान्यादपीत्यर्थः। किं तावद् वाक्यान्तरमिति मन्वानः पृच्छति—**कुत इति**। वाक्यमुदाहरति—**इदमिति**। कथमस्य वाक्यस्य स्तुतित्वं येन तत्सामान्यादितरेषु तथात्वं स्यादित्याशङ्क्य "प्रकरणे च सम्भवन्" इति व्याचष्टे—**यदीति**। **श्रृतः** पुरोडाशादिः **स्ताविष्यते** स्तुतो भाविष्यते, प्रकरणनिवेशाय स्तुतित्वाश्रयणं युक्तमिति भावः।

ननु मा भून्निवेशः पूषानुमन्त्रणमन्त्रवदुत्कृष्यतामत आह—**तथेति**। प्रकरणविनिवेशितया सम्भवन्नित्यर्थः। नन्वयमपकृष्यमाणः कल्प्यतेऽर्थवाद नापकर्षस्तत्राह—**अपकृष्यत इति**। ननु विधित्वेऽप्यनपकृष्यमाणोऽस्तु इत्याशङ्क्य तत्र किं यथाश्रुतैव वचनव्यक्तिः—यो विशेषेण दग्धः स निर्ऋतिदेवताकः कार्य्य इति? किं वा यो नैर्ऋतः स विशेषेण दाह्य इति व्यत्ययेन? तत्राद्ये कल्पेऽनेन दर्शपूर्णमासप्रकरणगतेन विध्युद्देशेन देवतान्तरविधानात् उत्पत्तिवाक्यशिष्टाग्न्यादिदेवतापकर्षणं स्यात्, तच्च **सम्भवत्** प्रसजद् **अपकर्षणं** सति गत्यन्तरे न कल्पनीयमिति सूत्रयोजनया दूषणं वक्तव्यमिति मत्वा

अपकृष्यत इत्यपकर्षः। विधिपक्षे तु यत्र नैर्ऋतस्तत्र विदग्धता नीयेत। तथा सति प्रकरणं बाधितं भवेत्। दर्शपूर्णमासकर्म प्रति नैर्ऋताभावाद् विदग्धविधानमनर्थकं स्यात्। तस्मात् स्तुतिरेव ॥ २४ ॥

**विधौ च वाक्यभेदः स्यात् ॥ २५ ॥**

"औदुम्बरो यूपो भवति" इति विधावेतस्मिन्नाश्रीयमाणे "ऊर्जोऽवरुद्ध्यै" इत्येतस्मिंश्च, वाक्यं भिद्येत। इत्थमौदुम्बरो यूपः प्रशस्तः स चोर्जोऽवरुद्ध्यै इति। तस्माद् विधिवन्निगदानामपि स्तुतिरेव कार्यमर्थवादानामिति ॥ २५ ॥

**हेतुर्वा स्यादर्थवादोपपत्तिभ्याम् ॥ २६ ॥**

अथ ये हेतुवन्निगदाः "शूर्पेण जुहोति तेन ह्यन्नं क्रियते"

---

द्वितीये दोषमाह—**विधीति**। नयने दोषमाह—**तथेति**।

ननु किमिति नीयते येन प्रकरणाम्नानविरोध इत्याशङ्क्य "विध्यानर्थक्यम्" इत्यादि-सूत्रावयवं व्याचष्टे—**दर्शेति**। सूत्रे "तम्" इति प्रकरणिनोऽर्थस्य परामर्शः। दर्शपूर्णमासयोर्निर्ऋतिदेवताभावान्नैर्ऋतानुवादेन विदग्धताविधानमनर्थकमित्यर्थः। तेन प्रकरणे निवेशाय विदग्धवाक्यस्य स्तुतित्वे फलविधिसरूपाणामपि तथैव स्तुतित्वमिति मत्वोपसंहरति—**तस्मादिति** ॥२४॥

एवं फलविधिसरूपाणां विधित्वनिराकरणेन स्तुतित्वमुक्त्वा विधित्वे दोषान्तरमाह—**विधौ वेति**। सूत्रं व्याचष्टे—**औदुम्बर इति**। **एतस्मिंश्च** "विधावाश्रीयमाणे" इत्यनुषङ्गः। वाक्यभेदमभिनयति—**इत्थमिति**। "औदुम्बरो यूपो भवति" इत्यस्यैव तावद् वर्त्तमानापदेशत्वसन्देहात्र विनार्थवादं पञ्चमलकारत्वेन विधित्वावसाय इति प्रथमं तावदर्थवादतया सम्बन्धनीयम् "ऊर्जोऽवरुध्यै" इत्यन्तेन, पुनश्च तस्यैवोर्जोऽवरुध्यै यूपः कार्य इति विध्यन्तर्भावे वाक्यभेदः स्यादित्यर्थः। अधिकरणार्थमुपसंहरति—**तस्मादिति**। वायुर्वेत्यादि समुच्चयार्थः **अपि**शब्दः ॥२५॥

अधिकरणस्य विषयमाह—**अथेति**। श्रेयःसाधनत्वप्रतिपादकविधिविभक्त्यभावेन विधित्वाभावेऽपि 'हि'-शब्दादिभिर्हेतुत्वं भविष्यतीति पूर्वाधिकरणसिद्धान्तहेतुप्रत्युदाहरणेनात्र पूर्वपक्षोत्थानादस्य तत्सङ्गतिरिति प्रकृतापेक्षित्ववाचिना **अथ**-शब्देन सूचितं ये हेतुवन्निगद्यन्ते न तु "चतुर्गृहीतान्याज्यानि भवन्ति। न ह्यत्रानुयाजा इज्यन्ते" इतिवत् परमार्थहेतवः, ते **हेतुवन्निगदास्तेन** इति तृतीयया शूर्पकरणमुच्यते करणमात्रं वा इत्यपि

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| | | |
|---|---|---|
| February, 1933 | १८५४ शकीये माघे १५श-वर्षस्य १०म संख्या | Vol. XV. No. 10. |


## वङ्गेषु वेदचर्चा

( २ )


[ निबन्धकः—श्रीदुर्गामोहनभट्टाचार्य्यः काव्य-सांख्य-पुराणतीर्थः एम् ए ]


### वङ्गीया वेदव्याख्यातारः

खिस्तीये दशमशतके तदुत्तरवर्तिनि च काले समुदपद्यन्त वङ्गेषु कतिचन वेदभाष्यप्रणेतारः। एकतमेनाप्येतेषां समग्रो वेदो व्याख्यात इति न श्रूयते, नापि सर्वेषाममीषां व्याख्यानान्युपलभ्यन्ते। केचन व्याख्याकृतो नाममात्रशेषाः संवृत्ताः, द्वित्राणि व्याख्यानानीदानीमप्यमुद्रितान्येव वर्तन्ते, केवलं व्याख्याद्वितयमेवावतीर्णं मुद्रणपथम्। अमीषां व्याख्यानानां विरचयितृभिर्गृहस्थानां दैनन्दिनधर्मानुष्ठानोपयोगिनो मन्त्रान् समाहृत्य तदुपरि भाष्यं निरमायि, न पुनः समग्रो वेदो व्याख्यायि।

### १। नुगडाचार्यः

स्वर्गतहरप्रसादशास्त्रिमहोदयेन तत्र तत्र विलिखितम्—नुगडाचार्य एव वङ्गीयेषु वेदव्याख्यातृषु प्रथमः। तेन हि वेदव्याख्याया यः सम्प्रदायः

प्रवर्तितस्तदुत्तरवर्तिभ्यां भाष्यकृद्भ्यां गुणविष्णु-हलायुधाभ्यां स एवानुसृत इति(१)। प्राचीनहस्तलिखितपुस्तकानामालोचने सर्वथाऽप्रतिद्वन्द्वी एवासीच्छास्त्रिमहाभागः, परं वङ्गमण्डलात् प्रकाशितं ब्राह्मणसर्वस्वं वर्जयित्वा कस्मिन्नपि प्रामाणिके पुस्तकान्तरे नुगडाचार्यस्य समुल्लेखः परिचयो वा तेन लब्धो वा न वेति नैव विज्ञायतेऽस्माभिः। तेजश्चन्द्रविद्यानन्दसंशोधितस्य ब्राह्मणसर्वस्वस्यैकस्मिन्श्लोके "किं तस्मिन्नुगडेन वर्त्म रचितम्" इति पाठो मुद्रितः। अत्र ग्रन्थकृता हलायुधेन कस्यचन प्राचीनस्याचार्यस्य नामोल्लिखितमिति व्यक्तमेव। परं श्लोकस्यायमंशो विभिन्नेषु ग्रन्थेषु विभिन्नतयोपलभ्यते, तेन "किं तस्मिन्नुवटेन वर्त्म रचितम्" इत्येव स्वारसिकः पाठ इति प्रतीयते। वाराणसीतः सम्मुद्रिते ब्राह्मणसर्वस्वेऽप्ययमेव पाठः स्वीकृतः(२)। 'इण्डिया अफिस्'-पुस्तकालयस्थपुस्तकेऽप्ययमेव पाठो दृश्यते(३)। उवटविरचितं यजुर्वेदभाष्यं तावत् सुप्रथितम्। हलायुधेन हि यजुर्वेदीयान् मन्त्रान् व्याचक्षाणेन पूर्वाचार्यरूपेण उवटस्यैव नामोदलेखीति सम्भाव्यते। उवटेन स्वीयभाष्यस्यान्ते स्वपरिचय उपनिबद्धः। ततश्च विज्ञायते भोजे राज्यं प्रशासत्यवन्त्यां तेन भाष्यं निरमायीति(४)। अतो वङ्गैः साकं तस्य लेशतोऽपि सम्बन्धो नासीदिति स्फुटमेव।

---

१ वर्धमानसाहित्यसम्मेलनस्य सभापतेरभिभाषणम्, (वङ्गीय) साहित्य-परिषत्-पत्रिका, २१श भागः, पृः २६८ ; *Journal of the Bihar and Orissa Research Society*, vol. v, p. 173 ; *Indian Historical Quarterly*, vol. vi, p. 783.

२ ब्राह्मणसर्वस्वम्, वाराणसीतः प्रकाशितम्, पृः ४, श्लोः २१। पुस्तकेऽस्मिन् "व्याख्यातो मतिशालिनाद्यमुवटाचार्येण वेदः परम्" इति पूर्वश्लोकस्य तृतीयचरणेऽपि उवटाचार्यस्य नामोपलभ्यते ; तेजश्चन्द्रविद्यानन्दसम्पादिते पुनर्ब्राह्मणसर्वस्वे तत्रैव "व्याख्यातो न हि केनचिद् युगपदाचार्येण वेदः परम्" इति पाठो दृश्यते। १९४२ विक्रमाब्दवत्सरे पाषाणाक्षरैर्मुद्रिते ब्राह्मणसर्वस्वे 'नुगड' इत्येतस्य स्थाने 'मुगुड़' इति पाठः।

३ *Catalogue of Sanskrit Manuscripts in the Library of the India Office*, 1640, (vol. III, p. 520.)

४ उवटीय-मन्त्रभाष्यस्यान्तिमः श्लोको द्रष्टव्यः।

### २। भट्टगुरवमिश्रः

येषां तावद् वङ्गीयानां वेदव्याख्यातॄणां नामान्युपलभ्यन्ते तेषु प्रथममेवोल्लेखमर्हति भट्टगुरवमिश्रः। स खल्वेतेषु प्राचीनतमः। एतद्विरचितं वेदव्याख्यानं वा ग्रन्थान्तरं वा नैवोपलब्धमस्माभिः। तेन कतमो वेदः कियान् वा वेदभागो व्याकृतस्तदपि दुःशकमेव विज्ञातुम्। दिनाजपुर आविष्कृतायां गरुडस्तम्भलिप्यां ( २५श-२६शपंक्त्योः ) वर्णितमस्ति—'कलियुगवाल्मीकिरयं' 'धर्मेतिहासपर्वसु श्रुतीर्व्याकृणोत्' इति ; तथा तस्य 'वाणी प्रसन्नगम्भीरा धिनोति च पुनाति च' इति। नारायणपालदेवस्य ताम्रशासनतोऽप्येतस्य वेदाब्धिपारगत्वं विविधयज्ञानुष्ठानपरायणत्वं ब्रह्मतत्त्वाधिगन्तृत्वञ्चावगम्यन्ते। तथाचोक्तम्—

वेदान्तैरप्यसुगमतमं वेदिता ब्रह्मतत्त्वं
यः सर्वासु श्रुतिषु परमः सार्धमङ्गैरधीती।
यो यज्ञानां समुदितमहादक्षिणानां प्रणेता
भट्टः श्रीमानिव स गुरवो दूतकः पुण्यकीर्तिः॥

( गौडलेखमाला पृः ६२)

वेदव्याख्याताऽयं गुरवमिश्रः ख्रिस्तीये दशमशतके पालवंशीयनरपतेर्नारायणपालदेवस्यामात्य आसीत्। अस्य च प्रपितामहो दर्भपाणिः पिता च केदारमिश्र उभावेव वेदविदावास्तां यथाक्रमं च देवपालस्य शूरपालस्य चामात्यपदवीमधिष्ठितवन्ताविति पूर्वमेव प्रतिपादितम्।

### ३। भट्टगुणविष्णुः

यानि तावद् वङ्गीयविद्वद्वर्यविरचितानि वेदव्याख्यानान्यधिगतानि तेषु भट्टगुणविष्णुप्रणीतं छान्दोग्यमन्त्रभाष्यमेव प्राचीनतमम् (५)। न खलु

५ १८२८ शाके महामहोपाध्याय-परमेश्वरझा-महोदयेन दारभाङ्गातः पुस्तकमिदं प्रकाशितम्। परं तत्र सर्वेषां मन्त्राणां व्याख्यानं नोपलभ्यते। तत्र विशुद्धादर्शानामभाव एव बीजमिति प्रतिभाति। वङ्गेष्वपि भवदेवविरचित-'कर्मानुष्ठानपद्धतेः' भट्टटीकाकृपेण

चन्द्रश्चायं षोडशशताब्द्याः प्रथमे भागे पञ्चनदेषु जालन्धरप्रदेशं शशासेत्यैतिहासिकाः (१३)। एतस्माच्च विस्पष्टं प्रतीयते काले तस्मिन् गुणविष्णोर्वेदव्याख्यानस्य ख्यातिः पञ्चनदप्रान्तपर्यन्तं प्रसृतेति ।

सायणाचार्येण स्वरचितग्रन्थेषु कुत्रापि गुणविष्णोर्नाम नोल्लिखितं परं यत्तावत्तत्कृते 'मन्त्रब्राह्मण'-भाष्ये स्थलद्वितये 'केचिद्' इति व्यपदेशेन पूर्ववर्तिनो भाष्यकृतो व्याख्यानमुदाहृतं तद्व्याख्यानं गुणविष्णोर्भाष्ये तथैवोपलभ्यते (१४)। तेन च सायणाचार्येणात्र गुणविष्णोर्वा तत्सम्प्रदायस्यैवापरस्य कस्यापि भाष्यकृतो वा व्याख्यानमुद्धृतमित्यवश्यमभ्युपगन्तव्यम् । किञ्च मन्त्रब्राह्मणस्थमन्त्रषट्कस्य सायणीयं भाष्यं गुणविष्णुभाष्येण सर्वथा संवदति (१५)। सर्वमेतत् प्रत्याययति न खलु नासीत् परिचयो सायणाचार्यस्य गुणविष्णुभाष्येणेति ।

हलायुधभट्टस्य ब्राह्मणसर्वस्वेऽपि बहूनां मन्त्राणां व्याख्यानानि गुणविष्णुव्याख्यानतोऽभिन्नान्येव दृश्यन्ते (१६)। वेदमन्त्रस्यैकस्य पाठभेदम् विचारयता रामनाथविद्यावाचस्पतिनोक्तम् – "गुणविष्णुपुस्तके छान्दसः अस्तेरादिलोप इति पाठो न तु हलायुधादिशिष्टपरिगृहीतः" (१७)। अत्र खलु हलायुधादपि गुणविष्णोः प्राचीनतरत्वं रामनाथस्याभिमतमिति प्रतीयते। रामनाथस्य पंक्तिमिमामितराणि चाभ्यन्तरीणानि प्रमाणानि

---

१३ Cunningham, *Archæological Survey of India Reports*, vol. v, p. 152.

१४ मन्त्रब्राह्मणस्य १।२।१८ मन्त्रस्य २।६।१ मन्त्रस्य च सायणीयेन भाष्येण गुणविष्णोः २।४६ मन्त्रस्य २।२५ मन्त्रस्य च भाष्यं तुलनीयम् ।

१५ मन्त्रब्राह्मणस्य १।२।५, २।४।१-४, २।४।६ मन्त्राणां सायणीयभाष्यैर्यथाक्रम गुणविष्णोः २।२१, १।६-८, १।१८ मन्त्राणां भाष्याणि तुलनीयानि ।

१६ मत्सम्पादितस्य छान्दोग्यमन्त्रभाष्यस्याङ्लभाषामय्या भूमिकायाः xxxi पृष्ठं द्रष्टव्यम् ।

१७ रामनाथरचितं 'सामगमन्त्रव्याख्यानम्' ( संस्कृतसाहित्यपरिषदो हस्तलिखितं पुस्तकम् ) पत्रम् १८ क।

समवलम्ब्य मया छान्दोग्यमन्त्रभाष्यभूमिकायां सिद्धान्तितं यद् हलायुधेन किल बहूनि स्थलान्यक्षरशो गुणविष्णोर्भाष्यादुद्धृतानीति (१८)।

एवञ्च हलायुध-सायण-नित्यानन्द-शत्रुघ्न-रामनाथा गुणविष्णोरधमर्णा इति सिद्धम्। नूनमेतद् गुणविष्णोर्भाष्यस्योपादेयत्वमेव प्रतिपादयति।

वडोदाप्रदेशस्थे Central Library-नामके राजकीयपुस्तकागारे गुणविष्णुविरचितस्य छान्दोग्यमन्त्रभाष्यस्य हस्तलिखितमेकं पुस्तकं वर्तते (१९)। तद्धि सामवेदीयमन्त्रब्राह्मणस्य भाष्यम्। ग्रन्थोऽयं छान्दोग्यमन्त्रभाष्यान्नातिभिद्यते। द्वारभाङ्गापत्तनतः प्रकाशितस्य छान्दोग्यमन्त्रभाष्यस्य भूमिकायां (पृः १७४) महामहोपाध्याय-परमेश्वरझा-महोदयेन विलिखितम्—मिथिलायां चन्दनपुरग्रामे कस्यचिच्छ्रोत्रियस्य सविधे तेन गुणविष्णुविरचितस्य पारस्करगृह्यसूत्रभाष्यस्य पुस्तकमेकं प्रत्यक्षीकृतमिति। एतेनैतत् सिध्यति यद् गुणविष्णुना गृह्यकर्मसु विनियुक्तानां मन्त्राणां भाष्यत्रितयं व्यरचीति।

### ४। हलायुधभट्टः

हलायुधेन हि 'ब्राह्मणसर्वस्वे' काण्वशाखिवाजसनेयानां गार्हस्थ्यकर्मोपयोगिनामधिकत्रिशतानां मन्त्राणां व्याख्या व्यधायि। येषु तावदनुष्ठानेषु मन्त्रा इमे विनियुज्यन्ते ग्रन्थादौ ग्रन्थकृता तेषां सूचिरुपनिबद्धा। श्लोकग्रथितायामस्यां सूच्यां दन्तधावनमारभ्यान्त्येष्टिं यावच्चत्वारिंशतो कर्मणां नामान्युल्लिखितानि।

बहुष्वनुष्ठानेषु सामवेदीयैर्यजुर्वेदीयैश्चैक एव मन्त्रः पठ्यते, तादृशानां मन्त्राणां गुणविष्णोर्हलायुधस्य च व्याख्यानं प्रायेणाभिन्नमिति पूर्वमेव प्रोक्तमस्माभिः। इतरेषां मन्त्राणां व्याख्यानावसरे हलायुधेन स्वीयसहजपाण्डित्यस्य परिचयः प्रकटीकृतः। गुणविष्णोर्भाष्यं सरलं संक्षिप्तं च।

---

१८ छान्दोग्यमन्त्रभाष्यम्, Introduction, p. xxxiii.

१९ *Descriptive Catalogue of Mss. in the Central Library*, vol. I, p. 112.

हलायुधस्य व्याख्यानं सरलमपि पुराणादिनानाशास्त्रप्रमाणोपबृंहितं स्मृतिनिबन्धनमिव च कर्मानुष्ठानविषयकप्रमाणप्रयोगबहुलम्।

ब्राह्मणसर्वस्वस्य भूमिकायां ग्रन्थकृता स्वपरिचय उपनिबद्धः (२०)। तेन किल वात्स्यमुनेर्वंशे परिगृहीतं जन्म। पिता तस्य धनञ्जयो माता चोज्ज्वला। पित्राऽग्नौ प्रास्तानामाहुतीनां धूमलेखा नभोमण्डलं समाक्रामन्ती विशेषतस्तृप्तिं व्यदधात् स्वाहाभुजाम्। तस्य च ज्येष्ठभ्रात्रा पशुपतिना 'श्राद्धकृत्यपद्धति'-'पाकयज्ञपद्धति'समाख्यानं ग्रन्थद्वितयं प्राणायि। ईशानाख्येनापरेणापि भ्रात्रा 'द्विजाह्निकपद्धति'र्व्यरचि। आद्ये वयसि हलायुधोऽयं लक्ष्मणसेनस्य सभापण्डितपदं मण्डयामास, ततश्च धर्माध्यक्षपदं तेनालङ्कृतम्। तस्य चावस्थितिकाले सर्वैरेव कालं कश्चिच्छ्रुतिविद्या कण्ठेऽध्रियत, परं स एव विशेषतो विद्यायास्तस्याः प्रेमास्पदत्वमविन्दत।

हलायुधस्य स्वोक्तित एवावगम्यते यत्तेन 'ब्राह्मणसर्वस्व'व्यतिरिक्तं 'शैवसर्वस्व'-'वैष्णवसर्वस्व'-'पण्डितसर्वस्व'-'मीमांसासर्वस्वा'भिधानं ग्रन्थचतुष्टयं संग्रथितमिति। राजेन्द्रलालमित्रेण हलायुधप्रणीतस्य 'द्विजनयना'ख्यस्यापरस्यापि ग्रन्थस्य विवरणं प्रकटितम् (२१)। षट्सु चैतेषु ग्रन्थेषु ब्राह्मणसर्वस्वमसकृद्वङ्गेषु च वाराणस्यां च मुद्रापितम्। साम्प्रतं पुनर्विहारोत्कलप्रत्नतत्त्वसमितेः पत्रे 'मीमांसासर्वस्वं' मुद्राप्यमाणमास्ते।

हलायुधेन तदानीन्तनवङ्गीयवेदाध्यायनशैली विनिन्दिता। तथाचोक्तं ब्राह्मणसर्वस्वे ( पृः ७ )—"कलावायुःप्रज्ञोत्साहादीनामल्पत्वादुत्कलपाश्चात्त्यादिभिर्वेदाध्ययनमात्रं क्रियते। राढीयवारेन्द्रैस्त्वध्ययनं विना कियदेकवेदार्थस्य कर्ममीमांसाद्वारेण यज्ञेतिकर्तव्यताविचारः क्रियते।" उभय्यपि शैली गर्हणीया। यथाविध्यध्येयो वेदः, अर्थादावृत्तिपूर्वकमर्थविचारः प्रवर्तयितव्य इत्येव हलायुधस्य मतम् (२२)। तेनोक्तम्—अथ चेत्

---

२० ब्राह्मणसर्वस्वम् ( श्लोकाः ५-२४ )

२१ *Notices of Sanskrit Mss.*, vol. II, p. 66.

२२ ब्राह्मणसर्वस्वम् ( वाराणसीतः प्रकाशितम् ) पृः ८।

समग्रवेदकण्ठेकरणपूर्वकस्तदर्थविचारो न सम्भवेत् तर्हि केवलक्रिया-काण्डोपयोगी मन्त्रभाग एवोक्तन्यायेनाध्येयः। अन्तरेणाध्ययनमर्थाव-बोधोऽपि व्यर्थ एवेति। अस्य च वेदाध्ययनशैलीविगानान्महाराजलक्ष्मण-सेनस्य राज्यावसरेऽपि वङ्गेषु वेदविद्याया यथावत् प्रचारो मन्दीभाव-मापद्यमान आसीदित्यनुमीयते।

गुणविष्णोश्छान्दोग्यमन्त्रभाष्यमिव हलायुधस्य ब्राह्मणसर्वस्वमपि रघुनन्दन-रामनाथ-नित्यानन्द-शत्रुघ्नानां निबन्धेषु प्रमाणत्वेनोद्धृतं वर्त्तते। किञ्च, दाक्षिणात्यस्यानिरुद्धभट्टस्य 'छान्दोग्यमन्त्रकौमुद्यां' वर्धमानस्य 'गङ्गाकृत्यविवेके' रामकृष्णभट्टाचार्यस्य 'मन्त्रकौमुद्यां' रामकृष्णभट्टस्य च 'श्राद्धसंग्रहे' हलायुधस्य नामोल्लेखो दृश्यते।

५। रामनाथविद्यावाचस्पतिः

तत्तद्देशेषु संरक्षितानां हस्तलिखितपुस्तकानां सूचिभ्यो रामनाथ-विरचितानां षण्णां प्रबन्धानां नामान्यवगम्यन्ते। ते च यथा—संस्कार-पद्धतिरहस्यम्, स्मृतिरत्नावली, काव्यप्रकाशरहस्यम्, त्रिकाण्डविवेकः, अभिज्ञानशकुन्तलाविवृतिः, लिङ्गादिसंग्रहटिप्पणी, लीलावतीरहस्यञ्च। साम्प्रतञ्च संस्कृतसाहित्यपरिषदः पुस्तकशालायामेतद्व्यतिरिक्तं पुस्तकद्वयं संगृहीतम्। तत्र च धार्मिककर्मरहस्यमेकं सामगमन्त्रव्याख्यानं च द्वितीयम्। पुस्तकद्वितयस्य पर्यालोचनेन गुणविष्णुगतानि बहूनि तथ्यानि मयाऽवगतानि। 'धार्मिककर्मरहस्ये' ग्रन्थकृतः परिभाषाभिधानस्य समय-रहस्याभिधानस्य च स्वरचितस्य प्रबन्धद्वितयस्य 'त्रिकाण्डविवेके' च वर्णविवेकधातुचिन्तामणिटीकाया नामान्युपलभ्यन्ते।

गुणविष्णोर्हलायुधस्य च मन्त्रभाष्यमिव रामनाथस्य सामगमन्त्र-व्याख्यानमपि क्रियाकाण्डोपयोगिनां मन्त्राणां व्याख्यानरूपम्। ग्रन्थेऽस्मिन् सामवेदीया मन्त्रा व्याख्याता इति नामत एवावबुध्यते। व्याख्याताश्च मन्त्राः शतसंख्यां नातिक्रामन्ति। व्याख्यानस्य चास्येदमेव वैशिष्ट्यं यदत्र

प्राचीनानां भाष्यकृतां पाठान् पर्यालोचयता ग्रन्थकृताऽन्तरान्तरा स्वीया सूक्ष्मतमा धिषणा प्रकटीकृता, स्थानस्थानेषु च गुणविष्णु-हलायुध-सायण-प्रभृतिभाष्यकृतां मतान्युद्धृत्य खण्डितानि, तत्तद्देशप्रचलितपाठांश्च संवाद्य तत्रत्या गुणदोषा विचारिताः।

संस्कारपद्धतिरहस्यस्य समाप्तौ रामनाथेन ग्रन्थपरिसमाप्तिसमयो निर्दिष्टः। तत्रत्याच्च (२३)—

वेदवेदेषुशीतांशु( १५४४ )गणिते शाकवत्सरे।
भवदेवीयटीकेयं रामनाथेन निर्मिता॥

इति वचनात् तस्य ख्रिस्तीयदशमशतकस्य प्रारम्भ एवावस्थितिरवगम्यते। धार्मिककर्मरहस्यस्य प्रारम्भेऽपि ग्रन्थकृतोक्तम्—

[श्री ना]रायणदेवशर्मनृपतिर्गन्धर्वरायाह्वयो
[यो] नारायणदेव एव सुकृतस्थित्यै प्रयातः क्षितौ।
तेने तेन महाकुलीनकृतिना श्रीरामनाथद्विज-
द्वाराऽऽचारपरम्पराविधिनिधिः प्रेक्षावतां प्रीतये॥

( धार्मिककर्मरहस्यम्, संस्कृतसाहित्यपरिषदः पुस्तकम्, पृः ६ )

एतस्माच्च स्फुटीभवति गन्धर्वरायाख्यस्य नरपतेर्निर्बन्धाद् रामनाथेन विलिखितोऽयं ग्रन्थ इति। एतद्विरचितमेकमपि पुस्तकमद्यापि मुद्रणपथं नावतीर्णं नाऽपि पर्यालोचितं विपश्चिद्वृन्दवृन्दारकैः। ग्रन्थेष्वेषु यथायथं पर्यालोचितेषु ग्रन्थकृतो रामनाथस्यानुपमं ज्ञानगौरवं सर्वेषामेव चेतःसु विस्मयमुत्पादयेत्।

### ६। रामकृष्णभट्टाचार्यः

रामकृष्णविरचितानां बहूनामेव ग्रन्थानां प्रतिलिपय उपलभ्यन्ते। परमेक एव रामकृष्णः सर्वेषां ग्रन्थानां रचयिता वा ना वेति निर्धारयितुं न शक्यते विनिगमनाभावात्। पूर्ववर्णिता भाष्यकारा इवायमपि

---

२३ R. L. Mitra, *Notices of Sanskrit Mss.*, 2177.

स्वरचितायां मन्त्रकौमुद्यां धर्मानुष्ठानमात्रोपयोगिनामेव मन्त्राणां व्याख्यानमुपनिबबन्ध। स्वल्पा एव मन्त्रा अनेन व्याख्याताः, सर्वत्र च पूर्वव्याख्याकृतां सरणिरनुसृता।

अस्य खलु भाष्यस्य बहुषु स्थलेषु स्मृतिशास्त्रोचितमालोचनमुपलभ्यते, मन्त्राणां च व्याख्याप्रसङ्गेन कर्मानुष्ठानपद्धतिगता विषया विस्तरेणाऽलोच्यन्ते। राजेन्द्रलालमित्रेण तर्कपञ्चाननभट्टाचार्यकृतायाः कस्याश्चन मन्त्रकौमुद्या विवरणं प्रकाशितम्। ग्रन्थोऽयं रामकृष्णस्य मन्त्रकौमुदीतो न भिद्यत इति प्रतीयते। एतेन रामकृष्णोऽयं तर्कपञ्चाननविरुदेन विभूषित आसीदित्यवगम्यते।

रामकृष्णस्याऽविर्भावकालो दुर्ज्ञेय एव। व्याख्यानशैली पुनरेतस्य नातिप्राचीनत्वमेवावबोधयति।

पूर्वमुपवर्णितासु सर्वास्वेव वेदव्याख्यासु तेषां तेषां ग्रन्थकृतां किमपि वैशिष्ट्यं परिलक्ष्यते। याः पुनरल्पीयसां मन्त्राणां विवृतिमादधत्यो वङ्गीयविद्वद्विरचिता इतरा व्याख्या उपलभ्यन्ते, ता लेशतोऽपि वैशिष्ट्यं नावगाहमाना नैवात्रोपवर्ण्यन्ते। व्याख्यास्वमूषु ग्रन्थकृद्भिः केवलं पूर्वभाष्यकृत एव सर्वत्र समनुसृताः (२४)।

---

२४ संस्कृतसाहित्यपरिषदः पुस्तकशालायां संरक्षिता कंसारिमिश्रस्य—'प्रतिष्ठामन्त्रव्याख्या', 'सविता-मेमोरियल् कलेक्शने' च रक्षिता रुक्मिणीचक्रवर्तिपुत्रेण नन्दकिशोरसिद्धान्तेन विरचिता 'मन्त्रबोधिनी' चैवंविधेष्वेव ग्रन्थेष्वन्तर्भवतः।

# गौरचन्द्रः*

( ऐतिहासिकं नवाख्यानम् )

## प्रथमः परिच्छेदः

[ गरीयस्याः सामाजिकसमस्यायाः समाधानम् ]

कुमारालवार्टस्य मध्यमपौत्रस्य प्रपितामही जुलुभूमितोऽनुच्चार्यनामानं वन्यं सत्त्वमानाय्य विज्ञानस्य परिधिं परिवर्धयतीति सन्दृश्य विराट्लाटराज-प्रतिनिधिः पुण्यभूमावार्यभूमौ काबुलीविग्रहमेकं प्रतिष्ठाप्य तस्य सुष्ठुतया परिचर्यादिप्रबन्धमकरोत्। ईदृशाश्च बहुविधा ऐतिहासिकवृत्तान्ताः पृथिव्यास्तेषु तेषु स्थानेषु विभिन्ना एव मूर्त्तीः परिगृह्य नैसर्गिकनियम-जालस्यावैकल्यं प्रतिपादयन्ति। काले चास्मिन् खिस्तीयस्य एकाशीत्युत्तरा-ष्टादशशततमाब्दस्य एप्रिलमासस्य प्रथमे दिवसेऽपराह्णे षड्वादनादनन्तरं गौरचन्द्रस्य गृहे पूर्णा गोष्ठी सञ्जाता।

कोमलप्राण पाठक! वीरप्रसविनि पाठिके! प्रथमपरिच्छेदस्य प्रथमं प्रकरणं कथञ्चित् कठिनं संवृत्तमिति मर्षयितव्योऽयमपराधः। यदा विद्याया वेगः संवरीतुं न शक्यते तदैव लेखकाः प्रवर्तन्ते प्रबन्धप्रणयने, अतो भाषायाः स्रोतसो मुखेऽवकराः सन्दृश्येरन्निति किमिवात्राश्चर्यम्। शपामि तावत् पाठकमहोदयस्य स्वजातिवात्सल्येन देव्याश्च पाठिकाया गुरुभक्त्या—इत ऊर्ध्वं यद्विलेखिष्यते तत् सरलनिर्मलभाषयैव विलेखिष्यते। दन्तविकलानां जनानां स्वल्प एव स्वादबोध इति प्रथमतस्तावत् मुष्टिमितेन भृष्टतण्डुलेन मुष्टिमितेन च भृष्टचणकेनाभ्यर्थिता यूयम्। अहं तावद्दरिद्रः कुतो वा परार्ध्यानि मृष्टान्नानि लभेय। यद्यामुख एवाप्रीतिर्न सञ्जाता, आगच्छन्तु भवन्तः, मदीयेऽस्मिन् चणकापणे यद् यद् वर्तते सर्वमेव प्रदर्शयिष्यामि।

---

* स्वर्गतस्य इन्द्रनाथवन्द्योपाध्यायमहोदयस्य वङ्गभाषामयस्य प्रबन्धस्याक्षरानुवादः।

बागूबाजारस्य घोषपल्ल्याः सङ्कीर्णं पन्थानमेकं प्रविश्य सूर्यदेवोऽद्यतन-रात्रियापनार्थं स्थानमन्विष्यन्नासीत्। तद्दर्शनेन च विशालस्यैकस्य नालिकेरपादपस्य प्रतीच्यानि पत्राणि हसन्ति स्म। प्राच्यानां पत्राणां प्रकृतिः कथञ्चिन्नम्रा। शनैः शनैरल्पाल्पं मस्तकं सञ्चाल्य म्लानेन मुखेन निवारयन्ति स्म तानि हासान्। इत्यादि। सर्वमेतत् कविकल्पना-विजृम्भितम्. केवलं रचयितुर्वर्णनशक्तेः परिचायकम्। प्रकृतं तूपरिष्टाद् वक्ष्यते।

यत्रासीत् स नालिकेरपादपस्तत उत्तरेण इष्टकामयी भित्तिः. ततोऽप्युत्तरेण सङ्कीर्णा रथ्या। ततश्चानन्तरवर्तिना द्वारेण प्रविश्यते चेद् गौरचन्द्रस्य गृहम्। न खलु गृहमुपवर्ण्यायासयिष्यामि पुनरपि पाठकम्। किं बहुना गृहं तद् द्विविभागम् निःशङ्कचित्तं मया साकमन्तःपुरं प्रविश्य पश्येयुर्भवन्तः पूर्वद्वारस्य प्रथमभूमिकस्य कक्षस्यालिन्दे सम्मिलिता महिलानां गोष्ठी। आमुखे हि गोष्ठीमेनामुपवर्णयिष्यन्नेव वर्णनकण्डूत्या व्याकुलीकृतोऽहमासम्।

रामी, वामी, श्यामी, अलका, तिलका, मेनका, विमलमणिः, कमलमणिः, सूर्यमणिः, हेवोर्माता, पुँटेर्माता, खोकाया माता एवमादयोऽल्पमध्यमविपुलवयसो बहव एव महिला गोष्ठ्यामस्यां समवेताः। कापि वोर्ध्वगात्रमनावृत्य, अपरा पुनः पादौ प्रसार्य, तदन्याधावगुण्ठनेन वदनं प्रावृत्य एवं विविधाभिर्भङ्गिभिर्विविधाः सुन्दर्यः समुपविष्टाः। किञ्च, कापि द्वारस्थं शृङ्खलं धारयन्ती, अपरा कुड्यमवलम्ब्य पादेनैकेन तिष्ठन्ती, तदन्याञ्चलप्रान्तबद्धकुञ्चिकाधारगोलकं शून्यमनस्कतया घूर्णयन्ती— कति वा कतिभिर्भङ्गिभिर्न दण्डायमानाः स्थिताः? कापि वरवधूकौतुक-गृहस्य गीतं विचिन्तयति, कापि वाभिनवापेराया अभिनवप्रेमगीतिकां मनसि आवर्तयति, कापि वा परस्या नवीनरीत्या वेशविन्यासं मनसैव गुणदोषविचारपूर्वकं समालोचयति, कापि गौरचन्द्रस्य वनितां प्रोत्-साहयति, कापि वात्मन्यारोपितालीकबहुदर्शिताबलेन तदीयामाशङ्कां

वर्धयन्ति। किं बहुना बहुभिर्बहुधैव जल्प्यते। हास्यस्योपद्रवेण, निषेधस्य ताडनेन, मन्त्रणाया गाम्भीर्येण, रोदनस्य शान्तेनाभिनयेन न खलु नितान्ततोऽकिञ्चित्करः कश्चित् कोलाहलस्तत्र प्रादुर्भूतः। गोष्ठ्यास्तु साम्प्रतिको विषयः—गौरचन्द्रस्य पत्नी आसन्नप्रसवा इति।

यशोहरप्रदेशस्य पूर्वस्मिन् प्रान्तेऽप्रसिद्धनाम्नि कस्मिंश्चिद् ग्रामे गौरचन्द्रस्य वनितायाः पित्रालयः। तस्याश्च नाम वसुमतीति। न खलु नामधेयमिदमूनविंशशताब्द्या अनुरूपमिति गौरचन्द्रः स्वमुत्तमार्धं वसनीति वा वसनमिति वा वसीति वा सम्बोधितवान्, न खलु व्यपेतेष्वपि प्राणेषु तां वसुमतीनाम्नाह्वयत्। मया पुनर्न खल्वात्मा नियमस्यास्य पारतन्त्र्यं प्रतिपादयिष्यते, यत्र यादृशं सौकर्य्यं तत्र तेनैव नाम्ना गौरचन्द्रगृहिण्याः परिचयः प्रदास्यते।

वसुमत्या वयस्तावदूनविंशतिर्वर्षाणि, वर्णो गौरः, केशा अपि नातिकृष्णाः। शरीराकृतिर्दीर्घा क्षामा च, साम्प्रतं तु स्थूलेवावभासते। ललाटं ह्रस्वम्, नेत्रे विशाले, परं किञ्चित् कोटरप्रविष्टे, नासिका सुदीर्घा, क्षीणा, सूक्ष्मप्रान्ता च। कपोलद्वितयं क्षामक्षामम्, ओष्ठोऽतीव क्षीणः, अधरः पुनर्मांसलः, चिबुकं ह्रस्वमेव। स्वर उदात्तोऽपि मृदुः, स्वल्पेनैव कारणेनानुनासिक्यं स्पृशति। ईदृशी नाम वसुमती प्रत्यासन्नप्रसवा गोष्ठ्यामस्यामुपविष्टा, कदाचिच्च कद्वाच्छब्दानुच्चारयति। परमीदृशे कोलाहले तस्या वचनं ग्रहीतुं न शक्यते। यास्तावद् द्रष्टुं वा साक्षात्कर्तुं वा स्वदर्शनं प्रदातुं वा समुपागतास्ता हि स्वयमेव वचनान्युच्चारयन्त्यः सन्तोषमधिगच्छन्ति, अतो वसुमत्या वाक्यानामग्रहणेऽपि न खलु किमपि परिहीयते तासाम्।

गौरचन्द्रस्तु गृहे नासीत्। स्त्र्युत्तोलिन्याः सभाया अद्य विशिष्टमधिवेशनम्। तेन च सभापतिर्गौरचन्द्रोऽर्घ्यकवादनकाले तत्रैव गतः। न खलु स्मृतिपथमुपारूढास्य पत्न्याः समवस्था, न वा गृहगताया गोष्ठ्या उपलब्धा वार्त्ता, तेन सन्ध्यां यावन्नैव प्रत्यावृत्तोऽसौ गृहम्। पत्नीललना बलवद्

बिभ्यति स्म गौरचन्द्रात्, तेनाद्य गौरचन्द्रस्यागमने विलम्बः स्यादिति विज्ञाय सर्वास्तास्तस्य गृहमागत्य मिलिताः। एवं गते, सायं गेहमुपागत्य गौरचन्द्रो गोष्ठ्याः किमपि चिह्नं नापश्यत्।

इदानीं तावल्लब्धो गौरचन्द्रस्य परिचयप्रदानावसरः। अतः पाठकपाठिकाभिः सार्धं तस्य परिचयः क्रियते। वर्णचौराणामात्राणामयं दोषो वा गुणो वा यदन्तःपरिपाकातिशयेन विनष्टकल्पानामपि तेषां बहिः श्यामताक्षुण्णैव विलसति। वयोदृष्ट्या गौरचन्द्रोऽपि वर्णचौरमात्रम्; पञ्चविंशतित ऊर्ध्वं पञ्चपञ्चाशतं यावत् सर्वमेव वयो गौरचन्द्रस्योपपद्यते। केवलं वृद्धाया मातुः सद्भावेन प्रातिवेशिकैर्गौरचन्द्रस्य वयसश्चत्वारिंशतो न्यूनतयावस्थापनमपेक्षितमासीत्। नवदूर्वादलश्यामः—अस्य तात्पर्यं यत् किमपि भवतु—विलक्षणं खर्वाकृतिः, प्रशस्तचतुरस्रललाटः, स्थूलनासः, प्रबलहनुः, वर्तुलाक्षः, गुम्फविभूषितः, निष्पिष्टोष्ठाधरः, दीर्घविरलश्मश्रुशोभितचिबुकः, धूसरकाश्मीरशिरस्त्राणभूषितशिराः, किष्कुद्वितयसम्मितगलबन्धवेष्टितगलः, अर्धचैनिकार्धाङ्गलालपाकाकोटमण्डितगात्रः, श्वेतजिनवस्त्रविनिर्मितकञ्चुकसंछन्नकायः, धृतपीचनिर्मितस्थूलयष्टिः, गराणहाटाविनिर्मितस्प्रीङ्द्वयोपेतोपानद्दृढपादो गौरचन्द्रः प्रविश्य भवनाभ्यन्तरमपश्यत्—तदीयहृदयाकाशचन्द्रमाः (वसनः) कातरवदना कातरभावेन चोपविष्टैकाग्रेण चेतसा स्वदक्षिणपदस्य नखान् प्रेक्षमाणा स्थितेति। तद्दर्शनेन न खलु स भीतेश्चिन्ताया विस्मयस्य वा वशमगमत्, नापि गृहिणीं किमप्यवदत्, न वा किमप्यपृच्छत्। समुपसृत्य चागृह्णात् वसुमत्याः पाणिम्, केवलेन च हस्तबलानुरोधेन तां शयनगृहं नेतुमुपचक्रमे। वसुमती समुन्नमय्य वदनकमलं तमपश्यत् परं किमपि नावदत्।

गौरचन्द्रस्य जननी महानसे व्यापृतासीत्। उपानच्छब्देन विदितपुत्रागमनवृत्तान्ता ससम्भ्रममुपस्थाय पुत्रं पुत्रवधूं च तदवस्थावद्राक्षीत्।

जननीं दृष्ट्वा व्यरज्यत गौरचन्द्रः। वसुमत्याः पाणिं किञ्चित् प्रसार्य ऋजु साचिकृताननं स्थित्वा गौरचन्द्रोऽवदत्, "अपसर महानसमेवापसर।

आदौ तावत् कर्तव्यपालनम्, तत ऊर्ध्वं विश्रमो वा विनोदो वा। रोटिका सम्पन्ना ? न सम्पन्ना। द्विदलं सम्पन्नम् ? न सम्पन्नम्। व्यञ्जनं सम्पन्नम् ? न सम्पन्नम्। भृष्टा मत्स्याः सम्पन्नाः ? न सम्पन्नाः। जानास्येवाहं—बलवत् खलु जानामि—न खल्वेतेषु किमपि सम्पन्नम्। तथापि भवत्या विहाय कर्मजातं विनोदार्थं मत्सविधमागतम् ? अहो! धिक् धिक्!" एतावत् खलु मातरं सम्बोध्य। ततश्च स्वगतमेवातीव विस्पष्टमुवाच, "माता मन्यते—मातेति तस्याः सप्त प्राणिहत्या अपि मर्षयितव्याः। इदानीमेव कर्माणि कृत्वागतोऽस्मि यावन्मधुरस्य वदनस्य मधुराणि वाक्यानि श्रुत्वा मानसं परितर्पयामि, परिश्रमजनितमवसादं चापनयामि तावदागत्य जरतिका पुरतः स्थिता। किमेतासां लेशतोऽपि विवेकित्वं नास्ति ?"

माता तावत् किंकर्तव्यतामूढा, भीतिविह्वला, सङ्कुचिता उवाच, "मा मैवं वत्स! वधूस्तावदस्वस्था। अत एव तुभ्यं निवेदयितुमागता, कस्यचन भिषगादेराह्वानं चेदपेक्ष्येत। तर्हि—"

"तर्हि तव सप्त सपिण्डानां पिण्डं मम च पितुर्मस्तकम्। तर्हि पुनः किम् ?"

"अहो परार्थं वत्सस्याहारनिद्रे न स्तः। परिश्रमं कृत्वा समायातः," एवमस्फुटं जल्पन्ती गौरचन्द्रस्य जननी स्वकर्तव्यपालनस्थानं महानसमाशिश्राय।

तदानीं गौरचन्द्रः पुनरपि पूर्वभावं प्रतिपद्य प्रेयस्याः पाणिमवलम्ब्य सोत्कण्ठालेशं साग्रहं चोवाच, "अस्वास्थ्यं सञ्जातम् ? किमस्वास्थ्यं वसन ? तवास्वास्थ्यम् ? तव ?"

वसनस्तावद् व्यलम्बतोत्तरयितुम्। गौरचन्द्रो वसनस्य पाणिं गृहीत्वा वसनमाकृष्य गृहाभ्यन्तरं निनाय, प्रसह्य च पर्यङ्कोपरि तां समुपावेशयत्। वसुमत्या धैर्यस्य केदारं भग्नम्, नयननदस्य च पङ्किलसलिलेन प्लावितं कपोलतलम्, "अपि न ज्ञायते त्वया तव वस्याः किं संवृत्तम् ?" स्वल्पभाषिणी

वसुमती एकैकस्य शब्दस्यानन्तरमेकैकं दीर्घश्वासं कण्ठरोधसूचकमव्यक्तं ध्वनिं वा समुच्चार्य शब्दानिमान् प्रयोज्य विरराम। गौरचन्द्रो मस्तकस्थं शिरस्त्राणं मोचयन्नासीत्, नेदानीं प्रबभूव मोचयितुम्, शिरस्त्राणे सुदृढं संसक्तः पाणिः।

"न खलु मया ज्ञायते त्वं लेशतोऽप्यस्वस्था इति। किमहं तथाविधो जन्तुर्यस्तवास्वास्थ्यं ज्ञात्वाप्येवं स्थिरस्तिष्ठेन्। तव कृतेऽहं नद्याः सलिलानि, पादपस्य पत्राणि, नभसश्च नक्षत्राणि, एकैकशो विचिनुयाम्, स्वर्गमर्त्ये आन्दोलयेयम्, मम पुनस्तादृशस्य वसनस्य, मम मनोरथप्रियतमाया वस्या मम तादृश्यास्तवास्वास्थ्यं जानन्नप्यहं हिमाचल इव स्थिरोऽचलश्च तिष्ठेयम्, एतदपि श्रद्दध्यास्त्वम्?"

वसुमत्यपश्यत्, महाननर्थः। न खलु तस्यास्तदानीं तादृशी शरीरस्थितिर्यया प्रणयसरोवरस्यैतस्य लहरीलीलासन्दर्शनेन सा सुखमनुभवेत्। अतएव वागाडम्बरं परित्यज्य ऋजुकमेवावदत्, अद्य मे पुत्रः सञ्जायत इव प्रतिभाति। स्वल्पा प्रसववेदनानुभूयते।

गौरचन्द्रः। इदं नामास्वास्थ्यम्!

वसुमती। दत्तगृहस्य स्त्रीणां वाक्यश्रवणादधिकतरं भवति मे भयम्। हन्त मातः! किं तर्हि मया करणीयम्?

वसुमती पुनरपि रुरोद। दत्तगृहनारीभिर्भीतिः प्रदर्शिता। आदौ तावत् ता रक्षाधिकृतेभ्यो निवेदनीया वा, वसुमत्या प्रसववेदनोपक्रान्ता भिषगेव प्रथमतः समानेयो वा, यदर्थं—यत्स्त्रीपुंससाम्यसंस्थापनार्थमुत्सृष्टं जीवनं तस्य व्रतस्य सार्थक्यसम्पादनस्येदृशे शुभावसरे स्वकार्यं साधनीयं वा—एवं दोलाचलचित्तवृत्तिरसौ किंकर्तव्यतामूढो मुहूर्तं तूष्णीं स्थितः। क्षणादूर्ध्वमन्तिमा चिन्तैव परा चिन्तेति स्थिरीकृत्य प्रफुल्लवदनः सहासमवदत् "सम्यक् सञ्जातम्। यत्तवास्वास्थ्यस्य वार्त्तां वदसि तदतीव शोभनमापतितम्। न खलु त्वया क्लेशोऽनुभवनीयः। मयैव स्वयं सन्तानः प्रसोष्यते। त्वं तावन्निश्चिन्तं परिसमाप्य भोजनादिकं स्वपिहि। अहमत्रावस्थितः, पुत्रप्रसवभारो ममैव।"

विस्मयातिरेकेण वसुमत्या वागेव नास्फुरत्।

"कथं नाम तत्? कथं वा त्वं प्रसविष्यसे? तच्चेत् समभविष्यत् का तर्हि चिन्ता?" अतिमात्रं क्लेशमनुभवन्त्यपि ईषत् स्मित्वा वसुमत्या इदमुक्तम्।

"तच्चेत् समभविष्यत्! चेदिति किम्? अवश्यमेव तेन भाव्यम्। यत्त्वमसम्भाव्यतया सम्भावयसि न खलु तल्लेशतोऽप्यसम्भवि। बाढं मयाभ्युपगम्यतेऽद्यापि कुत्रापि पुरुषेण नैव प्रसूतम्। परं किमत्र कारणम्? कारणं केवलं पुरुषाणामुत्पीडनम् स्त्रीजातेर्विडम्बनम् युष्माकं अर्थात् स्त्रीजनानां कदभ्यासश्च। पुरा नासीद् बाष्पीयशकटस्तावता किमिदानीमपि बाष्पीयशकटा न प्रादुर्भूताः। पुरा पुरुषा एव केवलमधीयते स्म स्त्रियः पाकादिकं कुर्वन्ति स्म, किमिदानीं तन्न विपर्यस्तम्? कदभ्यासः सर्वमेव कदभ्यासश्चोत्पीडनञ्च कुसंस्कारश्च। पितरावपि परित्यजेयं बागवाजारमपि परित्यजेयम्, त्वां तु कथमपि प्रसोतुं न दास्यामि। अहं फरासडाङ्गापत्तनं गत्वा गृहं क्रीत्वा तत्रैव पुत्रं प्रसोष्ये तथापि त्वां क्लेशं सोढुं स्त्रियश्च विडम्बनामनुभवितुं न दास्यामि।

एवं वाचोयुक्तिं वितन्वन् गौरचन्द्रः प्राङ्गणं प्रापत्। पुत्रस्यावस्था-सन्दर्शनेन गौरचन्द्रस्य मातोच्चैरारटितवती। तदीयहस्ताद्भ्रष्टं रोटिका-गुच्छं चुल्ल्यां निपतितं दह्यमानमासीत्, पल्लीस्थाश्च जना एकैकशस्तत्र समुपस्थिताः। गौरचन्द्रस्तु न विरराम, न निववृते। वस्तुत एव वाग्मिनां सुकवीनां प्रतिभावतां चायं धर्मो यत्ते तदेकतानमानसा बाह्यज्ञान-विरहिताः सम्पद्यन्ते। अन्यथा का वा प्रतिभा? किं नाम वैशिष्ट्यम्?

बहोः कालादनन्तरं व्यपगतो गौरचन्द्रस्य मोहः। तदानीं सोऽबुद्ध बहवो जनाः समुपस्थिताः, अबुद्ध स्वयं वाग्जालं वितनोति, किञ्च स्वगौरवायैवेदमिति स्वल्पसंशयानन्तरमबुद्ध केवलं तदीयेनैव वाचोयुक्तीन्द्र-जालेनाविष्टाश्च विमोहिताश्चैतावन्तो जनाः समवेताः। गौरचन्द्रो हि सिद्धो वाग्मी, भाषणमेव तस्य गृहारामौ, भाषणमेव तस्यास्थिमांसम्। मत्स्यस्येव

सलिलम्, नक्षत्राणामिव गगनम्, अग्नेरिवेन्धनम् गौरचन्द्रस्य जनसंमर्दः। अतो न विसिष्मिये गौरचन्द्रः. सस्मितवदनोऽसौ किंकर्तव्यनामूढां जननीमवदत्, मातः किञ्चित् सलिलमानयेति। एवमुक्त्वा स्त्रीबहुले तस्मिन् जनसागरे नेत्रे सञ्चाल्य तत्र कोऽपि वृत्तपत्रस्य लेखकः प्रवर्त्तं वा न वेत्यपश्यत्। सोऽपश्यत्, परं व्यर्थं तस्य दर्शनम् यतः वृत्तपत्रसंपृक्तो नरो वा नारी वा कोऽपि तत्र नासीत्। अयं तावत् संसारे महान् दोषो यच्छिरसि यथाकालम् इतिवृत्तरचयिता न वर्त्तते इति कति नाम सुवर्णमयाः स्वप्नाः स्वप्नेष्वेव विलीयन्ते।

जननी तु जलानयनार्थं गृहं प्रविश्यापश्यद् वधूं शय्यायां शयानां स्फुरन्तीं कातरं चारटन्तीम्,हन्त मातरहं म्रिये, नाहमितः परं जीवामीत्यादि। अतो विस्मृत्य सलिलानयनं वध्वाः शुश्रूषामारेभे। अभ्यासदोषेण वा भवतु कुलधर्मगुणेन वा भवतु यद् वसुमती तदानीं निरतिशयां यन्त्रणामनुभवन्त्यासीत् तत्र नास्ति संशयलेशोऽपि। गौरचन्द्रस्य मातापि यत् तां यन्त्रणामवबुद्धवती तदपि निःसन्देहम्। अतः प्रियपुत्रस्य पिपासावृत्तान्तं विस्मरन्त्या तया गरीयानेवापराधोऽनुष्ठित इति वक्तुं नोत्सहामहे।

न खलु जलमानीतमिति भृशमसन्तुष्टोऽभूद् गौरचन्द्रः। वाग्मित्वप्रकटनस्य द्वे एव प्रधाने अङ्गे—वृत्तपत्रस्य लिपिकरः सलिलपात्रं च—ते चानुपस्थिते वीक्ष्य गौरचन्द्र उपस्थिताया महिलामण्डल्या उपरि कटूक्तीर्वर्षितुमुपचक्रमे।

यूयमेव स्त्रियो निखिलदोषाणां गुरवः—न खलु यूयं स्वयं साधवो भवेत न वापरान् साधुत्वं स्वीकर्तुं दद्यात, यूयं स्वनासां छिन्त परेषां च यात्राभङ्गं विधत्त। दूरे तावदास्तां सत्कर्मणि सहयोगिता, स्वोपकारवार्त्तासूत्साहप्रकटनं वा, पितृपितामहानामाचरितानामुल्लेखपुरःसरमस्माकमेव परिहासाः क्रियन्ते। अत्र नर्मार्थमेव समागता इमाः, मम चतुर्दशपुरुषाणां श्राद्धसन्दर्शनायैव समागताः। अपसरत मे गृहात्, अपसरत, ननु

ब्रवीमि अपसरत, इदानीमेवापसरत। अन्यथैकेनैव मुष्ट्याघातेन युष्माकं नासिकां चूर्णपेषं पिनष्मि, न खलु जानीथ यूयम् ?

स्त्रीणां हि गौरचन्द्राद् भीतिरेवासीदिति पूर्वमेवोक्तम्। कथम् ते तस्मादबिभयुस्तदिदानीं बुद्धम्। तिरस्कारस्य ताडनेन समवेता रमण्यः कान्दिशीकतां जग्मुः।

अस्यैव क्रोधस्य वशेन गौरचन्द्रेण गृहं प्रविश्याविगणय्य जनन्यास्तत्रावस्थानं स्निग्धगम्भीरनिर्घोषमवोचि वसन, इदमेव तावदन्तिमवारं पृच्छामि त्वाम्, मां पुत्रं प्रसोतुं दास्यसि वा न वा ?

"वसन" स्तावन्निरुत्तरः। पूर्ववदेव पुनःपुनः पार्श्वं विवर्त्तनं हाहाकारं चाकरोत्।

"तात गौरचन्द्र" इत्युक्त्वा यावज्जननी वचनार्थं व्याददाति वदनं तावदेव सकृद् रोषाकषायितां दृष्टिं निक्षिप्य गृहाद् विनिर्गतो गौरचन्द्रः। तदानीं च रात्रौ नववादनकाले पत्न्या दुरभिसन्धेः प्रतिकारार्थं सभागृहमुद्दिश्य प्रस्थितः। मनसा च सङ्कल्पितवान् स्त्रीपुरुषयोः साम्यसम्पादनार्थं सति प्रसङ्गे बलप्रयोगोऽपि विधेय एवं सभायामवधार्य सभायाः कार्यविवरण्यां तद्विलेखनीयमिति। अन्यथा समस्याया अस्याः पूरणस्योपायान्तरं न दृश्यते।

## द्वितीयः परिच्छेदः

### [ पाठकपाठिकयोर्जीवितमरणे ग्रन्थकृदायत्ते ]

व्यतीतस्तदानीं रात्रेर्द्वितीयः प्रहरः। कोलाहलमयं कलिकातानगरमपि निस्तब्धप्रायं सञ्जातम्। विपुलमपि जनस्रोतः शुष्कमिव शीर्णमिव सङ्कुचितमिव सदन्तर्हितं सिकतास्तूपे। (पाठकमहाशयसमीपेषु, जनस्रोतसोऽनुरोधो मयावश्यं परिपाल्यते, परमत्र सिकतास्तूपं कस्य पदार्थस्योपमानमिति नैव विज्ञायते मया।) केवलं कदापि कुत्रापि भाटकशकटम् अश्वौ भीषयितुं विकटध्वनिपुरःसरं मृतप्रायौ घोटकावनुधावति।

अश्वयुगलमपि प्राणभयादेकाग्रेण चेतसा सममेव धावति। बहवस्तावद्वेतालाना-मस्तित्वे न श्रद्धते परं वेतालेभ्योऽतीव बिभ्यति। रात्रौ सन्दिग्धस्थलेन गच्छन्तो भयाद्धावितुं न शक्नुवन्ति नापि प्रत्यावृत्य पश्चाद्द्रष्टुमुत्सहन्ते। भाटकघोटकानामवस्थापि प्रायेण तादृश्येव। अन्तरा-न्तरा वृतिमवलम्ब्य भित्तिमवलम्ब्य लौहशलाकामयीं वेष्टनीं वावलम्ब्य एकैको रक्षिपुरुषो निमीलिताक्षः प्रदीपहस्तः परमतत्त्वद्वितयस्य ध्याने निमग्नो वर्तते। तत्र प्रथमं—मा तावत् सार्जनमहोदयोऽनेन पथा गच्छतु, द्वितीयं—कश्चन चौरो वा मत्तो वा स्वयमागत्यात्मानं ग्राहयतु। ये नावलम्बमानं व्यजनं समाकृष्य सञ्चालयन्ति ये च रक्षाविधिं निर्वर्तयन्ति उभये एते इहकालं परकालं च युगपदेव संरक्षन्ति—न खलु ध्यानं विजहति, न वा कार्यं विस्मरन्ति। एतद्व्यतिरिक्तं च कुत्रापि पथिपार्श्वे वा द्विभूमस्थे गृहे वा मृदङ्गध्वनिर्मनुष्यकण्ठविनिःसृतेन ओयाक् ओयाक् ध्वनिना मिश्रितः मदमत्तस्य कलिकातानगरस्य विरक्तिमेवोत्पादयति। सुप्तप्रायमपि स्वप्तुं न प्रभवति कलिकातानगरम्।

वस्तुतस्तु नाहं कलिकातां वर्णयितुमुपविष्टो नापि वालेख्यमङ्कयितुम्। गौरचन्द्रो हि सभास्थलाद् गृहं प्रत्यावर्तते इति—ऐतिहासिकनवाख्यानस्य सार्थक्याय एतानि वाक्यानि व्ययीक्रियन्ते। न खल्वेतद् विस्मरणीयं भवद्भिः।

तावत्यां रजन्यां सभां समुपस्थाय गौरचन्द्रोऽपश्यद् रुद्धं तावत् सभागृहस्य द्वारं न खलु तत्र प्रवेशः सम्भवति इति। प्राकृतजनो हि एतावतैव नैराश्यमुपगत इत एव पणाद्विमुखः पलायिष्यत। परं गौरचन्द्रस्याध्यवसायोऽप्रतिवध्यः, सङ्कल्पोऽविचाल्यः, साहसं च दुर्जयम्। असाध्यमपि कदापि साध्येत गौरचन्द्रस्त्वभीष्टान्न विचलेत्। प्राभविष्य-महं बहुभिर्मनोहारिणीभिरुपमाभिर्वाच्यमिदं समुज्ज्वलीकर्तुं परं तत्र प्रयोजनाभावः। यो ह्यसम्भवमपि वास्तवं विधातुं विनिबद्धपरिकरस्तस्य प्रतिज्ञाविषये उपमाप्रयोगो न केवलं धृष्टता किन्तु पूर्णवातूलतैव।

स्वयं तावद् गौरचन्द्रः स्त्रुश्तोलिन्याः सम्पादकस्य गृहमुपस्थितः। तेन साकं च सभ्यानां गृहेषूवस्थायापेक्षितसभ्यसंख्यां पूरयित्वा समवेताः सर्वे सभास्थलं प्रापुः।

असाधारण्याः सभाया इदमधिवेशनमतीव सार्थकमभूदिति नैतत् पृथग् वक्तुमावश्यकम्। क्रमेण च प्रस्तावो भाषणं वादः अनुवादः प्रतिवादः वितर्कः वितण्डा—कियद् वा वर्ण्येत। अहं तावत् क्षुद्रबुद्धिः क्षुद्रो मानवः कथङ्कारं नाम वाक्यसागरं तं मसीरेखयाङ्कयेयम्। साहारामरुभूमिश्चेत् पत्रमभविष्यत्, मिशरस्य शिखामन्दिरम् (Egyptian pyramid) च लेखनी भूमध्यसागरश्च मसीभाजनं तथापि रजन्या अस्याः कार्यविवरणं लिखितुमुदसहिष्ये वा न वेति यथार्थया वक्तुं न शक्यते। मदीयायामिदानीन्तन्यामवस्थायां वर्तमानेन चोपकरणजातेन तु कथमपि नोत्सहे। इदमत्र भवद्भिरवधेयम्, यानि तावदुदाहरणानि समुल्लिखितानि सर्वाणि तानि भारतबाह्यान्येव। पाण्डित्यं चेदस्ति, पाण्डित्यं चेत् प्रकटनीयं तर्ह्यवश्यमेवमेव विधेयम्। किं बहुना न खल्वहं तत् कार्य्यविवरणमत्र प्रकाशयितुमुत्सहे। सद्यस्तस्यापठने यस्य संसारयात्रा न निर्वहेत् स सभासम्पादकस्य पुस्तके पठतु यदि पठितुमिच्छेत्। प्रतीक्षणं चेत् सम्भवेत् तर्हि श्वः प्रातः सम्पादकस्याभिमतेन साकं वृत्तपत्रेषु वाचनीयम्।

स्त्रीपुरुषयोः सम्यक् साम्यविधानाय गौरचन्द्रेण यथारीति प्रस्तुतम्। यथाविधि च गौरचन्द्रस्य प्रस्तावोऽसौ परिगृहीतः, अनुमोदितोऽवलम्बितः सभापुस्तके च लिखिताकारेण विपरिणमितः। किञ्चित्त्वत्र वक्तव्यम्। सत्यस्य जयस्तावद् ध्रुवः, जयात् पूर्वं युद्धमप्यवश्यम्भावि, अन्यथा कुत्र वा जयः। अत एव गौरचन्द्रस्य प्रस्तावं प्रतिहत्य तस्य च विरोधप्रयासमास्थाय केचन स्वां दुर्बलतां साहसिकतां च प्रकटयामासुरिति नैतत् पृथग् वक्तुमावश्यकम्।

तेन च जयेन प्रोल्लसितः, सभाभङ्गत ऊर्द्ध्वं रजन्या द्वितीयं प्रहरमतिवाह्य कर्णवालिशरथ्याम् (Cornwallis Street) अवलम्ब्य गृहं प्रत्यावर्तमान

आसीद् गौरचन्द्रः । एतस्यैव ज्ञापनार्थं मदीयोऽयं प्रयासः । वहव एव विपया विस्मृता मया वर्णयितुम्। तेपु चैको यथा—मिर्जापुररथ्यायाः कुत्रचित् स्थाने स्त्रुयत्तोलिन्या निर्माणशालासीन् प्रतिष्ठिता। विचित्रसभावेष-समाच्छादितो गौरचन्द्रस्ततो गृहं गच्छन्नासीत्। अपरञ्च, शकट-शुल्कोपयोगि द्रविणं पार्श्वे नासीदिति गौरचन्द्र एकक एव पादचारेणा-गच्छत्। अनेन चार्थाभावेनेतिवृत्तस्यास्याद्दष्टं सुप्रसन्नम्। गौरचन्द्रश्चे-च्छकटं परिचाल्यागमिष्यत्, नैव प्राभविष्याम वयं तमनुगन्तुम्। अत एव समवलम्ब्य धैर्य्यं निरुध्य च निश्वासं निःशब्दपदसञ्चारं मया गौरचन्द्रेण च साकमागच्छन्तु भवन्तः।

येषां मानसक्षेत्रस्य परिसरः स्वल्पः ताद्दशाः क्षुद्रप्राणा मनुजाः ग्रस्यन्त उन्मादेन। गौरचन्द्रस्तु विराट् पुरुषः, नाध्यगच्छदुन्मत्तताम्। तथापि न खल्वसावाभ्यन्तरीणतरङ्गविक्षोभेण न विचलितः। न खलु प्राकृतिकबलसंघर्षः सर्वथा शक्यते परिहर्तुम्, भूधरोऽपि भूकम्पेन विचलति। अत एव गौरचन्द्रः पथि गच्छन्नन्तरान्तरा तिष्ठेत्, अन्तरान्तरा च विविधाभिरङ्गभङ्गिभिः प्रसभं दक्षिणहस्तस्य सञ्चालनं विदध्यात्, वामकरतले च दक्षिणेन करमुष्टिना सशब्दमाघातं कुर्य्यात् इति नैतच्चित्रम्। एकपार्श्वस्थ-पादपथादपरपार्श्वस्थपादपथम्, पुनरपि तस्मात् पार्श्वात् पार्श्वान्तरम्—मुहुर्मुहुर्गौरचन्द्र इत्थमेवाचलत् एतदपि नैव नाभ्युपगम्यते मया। मतेरस्थैर्येण पदविक्षेपोऽप्यस्थिरः सञ्जात इत्यपि स्वीकरोम्येव। परम् अत्र वीजमासीत्।

सभायां गौरचन्द्रः कृतकृत्यः सिद्धकामः सञ्जातः। न खलु सभायां निर्धारितां प्रतिज्ञामवगत्य पुनरपि वसुमती प्रत्यवस्थातुं प्रभवेत्, विर्नायासं पुरुषत्वलाभमनुमन्येत, निखिलमपि नारीकुलमुपायान्तराभावेनानिच्छदपि तस्या एव सरणिमनुसरेत्—न हि प्रमोद ईद्दशो निरोद्धुं शक्यते। कामं गौरववार्त्तेयं मोदवार्त्तेयं प्रतिदेशं प्रतिनगरं प्रतिग्रामं च घण्टाघोषं घोपयिष्यते, तथाप्यद्यैव रात्रौ वङ्गप्रदीपाख्ये पत्रे एतद्विपयकः प्रबन्धस्तत्सम्पादकेन विले-खनीयो न वेति दोलायमानमतिरासीद् गौरचन्द्रः। अत एव तेन सर्पगतिर-

वलम्बिता,अत एव चान्तरान्तरा सहसा निश्चलतयावस्थितम्। कदाचिच्चिन्तयति वङ्गप्रदीपस्य गृहं गच्छेयम्, तदात्व एव रथ्याया दक्षिणं पार्श्वमागच्छति, पुनरपि मन्यते अनेन समयेन प्रायेण निद्रितः स्याद् वङ्गप्रदीपः, सद्य एवावस्थाय सशिरःकम्पं चिन्ता। तदानीमेव सिद्धान्तयति स्वगौरवं परमुखेण व्यक्तमेव शोभनम्, सिद्धान्तसमनन्तरमेव वेगेन रथ्याया वाम-पार्श्वे आगमनम्। क्षणाच्च युगपत् सर्वेषामेव भावानां समावेशो भवति तस्य मानसे, तदानीमेकस्य पादस्योत्तोलनेनापरः पादः स्खलति, पद-द्वयं यावदग्रे सरति पदमेकं प्रत्यावर्तते, स्वस्थानावस्थितयोरपि पदयोः, देहप्रतिमा द्विर्वामं द्विश्च दक्षिणतो विकम्पते। किं बहुना, गौरचन्द्रस्य आपाततः परिदृश्यमानस्य तस्यास्थिरभावस्य कारणमासीदिति मया प्रदर्शितम्। कारणञ्च तद् वङ्गप्रदीप एव। वङ्गप्रदीपो हि वङ्गदेशीय-भाषयोपनिबद्धं वङ्गोन्नतिकेन्द्रीभूतं भुवनप्रथितं वृत्तपत्रम्—येन वृत्तान्तोऽयं न विज्ञायते तस्य नाम महाराजराजा-बाहादुरप्रभृतीनां नामसूचितो निष्कास-नीयम्। सति प्रसङ्गे, वङ्गप्रदीपगतमन्यदग्रे।

पूर्वमेवोक्तम्—न खलु मुधा किमप्युच्यते मया—पथिपार्श्वे स्थाने स्थाने रक्षिपुरुषा अवर्तन्त। कश्चन च रक्षिपुरुष आलोकस्तम्भमेकं देहयष्ट्या-वलम्ब्य निमीलितनयनोऽचिन्तयत्—व्रजवासिनीनां गोपयुवतीनां भाण्डं भंक्त्वा नवनीतं मुषित्वा किषणजी ता अतीव समुद्वेजयति। यशोदा-मातुरनुरोधेन कयापि किमपि नोच्यते, किञ्च तदानीं मादृशः सावधानो रक्षिपुरुषोऽपि नासीत्। इदानीं कोम्पानिराज्ये मम पुरतश्चेत् सङ्घटेतायं वृत्तान्तस्तर्हि किषणजी नवनीतभाण्डतो यावद्धस्तमुत्तोलयेत् तावदेव—भगवद्ध्यानमग्नेन रक्षिपुरुषेण परमार्थत एव यावत् प्रसारितो दक्षिणः पाणिस्तावदेव—अहो दैवी गतिश्चित्रा—गौरचन्द्रस्य शरीरयष्टिस्तस्य पाणेः प्रान्तं प्राप्ता। ततश्च संस्पर्शस्ततश्चोभयोर्ध्यानभङ्गः। न खलु महान्तोऽपि तत्त्वज्ञाः प्रभवन्ति भावाद् भावान्तरापत्तेः कारणं विनिर्देष्टुम्, अतः किषणजीं विचिन्तयता रक्षिपुरुषेण कथमकस्मात् 'श्वशुरा' इत्युक्तं तत् कथं मया

विज्ञायेत, स त्ववोचत् 'श्वशुरा' इति। गौरचन्द्रोऽपि वङ्गप्रदीपं विचिन्तयन्नासीत् सोऽपि सहसावदत्–क्या ह्याय। चित्तवृत्तीनां घातप्रतिघातेनैव नाटकस्य समुत्पत्तिः, शब्दस्योपरि शब्दनिपातेनैव कोलाहलस्य समुत्पत्तिः, अयमेव नैसर्गिको नियमः। अत एवात्रापि तस्य कार्य्यं संवृत्तम्। रक्षिपुरुषेण पूर्वं केवलं श्वशुरा इत्युक्तम् इदानीमुक्तम्, "श्वशुरा वाओरा, मातोयारा" इति। अगतिकतया च गौरचन्द्रस्य मुखेन 'यओ' इत्युच्चरितम्। रक्षिपुरुषेण पुनरप्युक्तम् 'चल थानापर', सर्वाणि चाङ्गानि चञ्चलानि विहितानि। गौरचन्द्रोऽप्याङ्ग्या भाषया प्रत्युत्तरं प्रतिपद्य ततोऽप्यधिकतरं व्यधादङ्गसञ्चालनम्। फलञ्च—उभयोर्वेगेन गमनम्, पुरतो गौरचन्द्रः पश्चादारक्षिकपुरुषः, क्रमेण च परमार्थत एव नरधावनम्, आनुषङ्गिकश्च शब्दः - 'गृह्यतां चोरः' "मातोयारा" इत्यादि।

धावनम् धावनम् धावनम्। न खलु विजानाति गौरचन्द्रः कथं स धावतीति तथापि धावति। न खलु तस्य धीरताया असद्भावः, इयत्यां रात्रौ सभासंग्रहणं सभातश्चैकाकी वा प्रत्यागमनं न खलु कापुरुषः कर्तुं प्रभवेत्। नापि तस्य शरीरे बलं नासीत् ज्वरोच्छिष्टः प्लीहोदरो वङ्गाधिवासी प्रायेणेदृग् वेगवान् न भवति, तथापि धावनं—भ्रमेण धावनम्। आरक्षिकपुरुषोऽपि धावति, तदपि भ्रमेणैव। कति वा संसारे प्रत्यावृत्य पश्यन्ति – इयमेव गतिः संसारस्य।

धावतां तावदिमौ, परं पाठकपाठिका इदानीं सर्वथैव ग्रन्थकृदधीनाः। इदानीमहमिच्छामि चेन्मारयेयम्, इच्छामि चेत् परिरक्षेयमेताः। इदानीं मम करुणैकायत्ता इमाः संवृत्ताः। अत एव ग्रन्थकृतामीदृशः सम्मानः अत एवैवं बिभ्यति जना ग्रन्थकृद्भ्यः। अपि न प्रत्यहमेव प्रत्यक्षीकरोषि दक्षिणाप्रदानेन स्मितमुखेन ग्रन्थकृत्करकवले उपनिपत्य सुशीलः सुबोधश्च पाठकोऽन्ते रुदन्नपि न लभते निस्तारम्। कोमलतमायामपि शय्यायां प्रसभं शयनेन यस्या अस्थिभङ्गस्य सम्भावना तामपि सुकोमलप्राणां पाठकस्य मनोरथप्रियतमां नायिकामारोप्य समुत्तुङ्गं गिरिशृङ्गम् "इदानीं पातयामि

इदानीं पातयामि" इति कृत्वैव विमुञ्चति ग्रन्थकारः। बहुतरमश्रुपातं बहुतरं विच्छेदं बहुतरं च दुःखमनुभाव्य आशायाः सुखप्रान्तं संस्पर्श्य धीरं शान्तं च नायकं पितृपैतामहस्य वासभवनस्य पक्षद्वारे इष्टकाबद्धजलावतारस्याधस्ताद्, अगाधे सागरगर्भे निमज्ज्य भद्रजनवत् किञ्चिदपसरति। एषैव रीतिर्ग्रन्थकाराणाम्। प्रभुत्वं वर्तत इत्येवेदृशं कौशलम्। अहमपि तावद् ग्रन्थकार एव।

गौरचन्द्रस्तावदनन्तक्षेत्रं व्याप्यानन्तकालपर्यन्तमारक्षिकपुरुषताडितो धावेत्, मुहूर्त्तेन वा रक्षिपुरुषस्य कराले कवले कवलितः स्यात्, अथवा विपत्प्रशान्तमहासागरे सन्तरणलीलां सन्दर्श्य अपरिलक्षितः पाठकैरवितर्कितश्च पाठिकाभिर्वेलाभूमिमासाद्य हास्यराशिं विकिरेत्—सर्वमेतत् कुर्य्यात् परं मम सम्मतिस्त्वपेक्ष्यते। अत एवोक्तं मया—पाठकपाठिकयोर्जीवितमरणे ग्रन्थकृदायत्ते इति।

साम्प्रतन्तु भवतां धैर्य्यं परीक्षितुं मया तावद्विश्रामः क्रियते। भवन्तश्च तावद् चिन्तयन्तस्तिष्ठन्तु।

# आत्म-विनिग्रहः ।

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

अयि आत्मनीना गैर्वाणीप्रचारकाग्रण्यः ! मयि परमकृपयामुमात्म-विनिग्रहं साभिनिवेशमाकर्णयत—यत एकैकेनाप्ययमासेवनीयः सर्वदा सर्वथा श्रेयोऽर्थितज्ञजेन। कोऽयम् आत्म-विनिग्रहो नाम ? उच्यते—आत्मनः अन्तःकरणस्य विशेषेण निग्रहणम् नियमनम्, विषयाटवीषु अभीक्ष्णम् आहिण्डिष्णोः मानस मर्कटस्य आत्मानन्दाऽरण्यानी निकुञ्ज-विहरणोन्मुखीकरणम् इत्येतत् । आत्म-शब्दार्थः अपरिमितः ; आत्म-शब्द उपलक्षणं दशेन्द्रियाणामपि । मन एव दशेन्द्रियाणाम् अध्यक्षायते ; 'मनो दशेन्द्रियाध्यक्षं तत्राऽन्तर्गोलके स्थितम्' इति पञ्चदशी उपदिशति ।

'स्वस्मिन् निगृहीते स्वकुटुम्बकमपि सकलं निगृहीतं भवति'—इति द्राविडाऽऽभाणकः कश्चित् प्रथते बहोः कालादारभ्य ।

'स्वभावतो विषयविषयाणि इन्द्रियाणि, न ब्रह्मविषयाणि' ; शब्द-स्पर्श-रूप रस गन्धादिविषयास्वादमोहितानि खलु अमूनि निकामं सज्जन्ते स्रक् चन्दन वनिता-गीत वादित्राद्युपभोगसातत्ये विषयाः किल एते अन्वर्थनामधेयाः—विषिण्वन्ति=अवबध्नन्ति—स्वेन रूपेण निरूपणीयं कुर्वन्ति इति यावत्, विषयाकारतापन्नानि कुर्वन्ति इत्येतत् ।

'आत्मानात्माकारं स्वभावतोऽवस्थितं सदा चित्तम् ।
आत्मैकाकारतया तिरस्कृताऽनात्मदृष्टि विदधीत ॥'
'मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयाऽऽसक्तं मोक्षे निर्विषयं स्मृतम् ॥'

उच्चावचेषु अवाङ्मनसगोचरेषु अनिर्वचनीयेषु अवीच्यधःपातननिष्णातेषु तेषु तेषु भोगसाधनेषु इक्षुवद् मनःप्रवृत्त्यनुसारं सारासारविवेचनं विनैव

अनारतं स्वारस्येन व्याप्रियमाणानि च प्रीयमाणानि च क्षणम् अक्षाणि अमूनि खलु अन्तेऽतितरां निर्विण्णानि, नित्यानन्दघन-घन-निर्विशेषे परे ब्रह्मणि विलयनम् अभिलष्यन्ति ; कैवल्यं च आसादयन्ति आदर-नैरन्तर्य-सत्कारसंसेवनाद्यभ्युपायैः सद्गुरुप्रतिबोध-पुरःसरैः ;

वशीकृते मनस्येषां सगुण-ब्रह्म शीलनात्
तदेवाऽऽविर्भवेज्ज्योतिरपेतोपाधिकल्पनम् ॥
निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेष-निरूपणैः ॥
'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम् ॥'
'शैवा वयं न खलु तत्र विचारणीयं
पञ्चाक्षरी-जप-परा नितरां तथापि ।
चेतो मदीयमतसी-कुसुमावभासं
स्मेराननं स्मरति गोपवधू-किशोरम् ॥'
'ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते ॥
अस्माकं तु तदेव लोचन-चमत्काराय भूयाच्चिरं
कालिन्दी-पुलिनाङ्गनेषु विहरन्नीलं महो धावति ॥'
'वंशीविभूषितकरान्नवनीरदाभात्
पीताम्बरादरुण-बिम्बफलाधरोष्ठात् ।
पूर्णेन्दु सुन्दरमुखादरविन्दनेत्रात्
कृष्णात् परं किमपि तत्त्वमहं न जाने ॥'
'तवाऽमृतस्यन्दिनि पाद-पङ्कजे
निवेशितात्मा कथमन्यदिच्छति ?
स्थितोऽरविन्दे मकरन्द-निर्भरे
मधुव्रतो नेक्षुरकं हि वीक्षते ॥'

'मृद्वीका रसिता, सिता समशिता स्फीतं निपीतं पयः,
स्वर्यातेन सुधाऽप्यधायि, कतिधा रम्भाधरः खण्डितः ?
सत्यं ब्रूहि मदीय जीव ! भवता भूयो भवे भ्राम्यता,
'कृष्णे'त्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः ॥'
'रमन्ते योगिनोऽनन्ते निर्गुणे परमात्मनि' ।

तथा च, अयम् आत्म-विनिग्रहः श्रीमद्भगवद्गीतायाम्—

'अमानित्वम् अदम्भित्वम् अहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यम् आत्म-विनिग्रहः ॥
इन्द्रियार्थेषु वैराग्यम् अनहङ्कार एव च ।
जन्म-मृत्यु-जरा-व्याधि-दुःखदोषानुदर्शनम् ॥
... ... ... ...

इत्यादिना प्रबन्धेन,

एतज् ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥'

इति आत्मज्ञान-साधनतया उपदिष्ट इति अस्मदादिभिः सन्ततम् आत्म-विनिग्रहणे प्रयतितव्यम् इति शम् ॥

---

# योषिद्धर्मः

प्रियपाठकमहाभागाः, उपहृतानि खलु भवद्भ्यः सहधर्मिणीचर्यामधिकृत्य भगवतो वात्स्यायनस्य सूत्राणि सोपस्काराणि, साम्प्रतं वेदस्मृतिपुराणेतिहासेभ्य आर्ययोषितां धर्मांश्च समाचारांश्च प्रतिपादयिष्यामः। प्रथमतः पुनः प्राचीनभारते योषितो भृशमुत्पीडिताः पुरुषैः, तासां च दोषाणामेवोपवर्णनमार्यशास्त्रेषूपलभ्यते न पुनर्लेशतोऽपि गुणानाम्, तासामस्वातन्त्र्यमेव भारतवर्षस्य पराधीनतायां निदानमित्यादीन्याधुनिकानां संस्कृतम्मन्यानामुच्चावचानि प्रलपितानि प्रमाणोपन्यासपुरःसरं निराक्रियन्ते। प्रबन्धेऽस्मिन् स्त्रीप्रशंसापराणि वराहमिहिराचार्यपद्यान्युदाहृत्य व्याख्यायन्ते।

जये धरित्र्याः पुरमेव सारं
पुरे गृहं सद्मनि चैकदेशः।
तत्रापि शय्या शयने वरा स्त्री
रत्नोज्ज्वला राज्यसुखस्य सारः॥ १॥

धरित्र्या वसुन्धरायाः जये विजये सति, पुरमेव नगरमेव सारं श्रेष्ठम्। सप्तद्वीपां वसुमतीं विजित्यापि स्वपुरमेव श्रेष्ठतयाकलयति वीरः। तत्र च पुरे गृहम् एव सारम्। पुरेऽपि मातेवा जन्मनः सुखदुःखयोः साक्षि गृहमेव श्रेष्ठम्। तत्रापि सद्मनि गृहे च एकदेशः शयनकक्षः सार इति विभक्तिविपरिणामेनान्वयः। "सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरोक्तेः। तत्रापि तस्मिन्नपि शय्या सारा श्रेष्ठा, या किल कान्तेव समाश्लिष्य सादरमपनयति निखिलं खेदम्। तत्रापि शय्यायां रत्नोज्ज्वला विविधमणिमाणिक्याद्युचिताभरणसन्निवेशसमुज्ज्वलकान्तिः वरा रूपयौवनलावण्यसौशील्यादिगुणगणसम्पन्नतया स्पृहणीयतमा स्त्री कामिनी राज्यसुखस्य सारं ब्रह्मानन्दसहोदरविगलितवेद्यान्तरसर्वेन्द्रियसन्तर्पणालौकिकानन्दा-

तिरेकप्रदायित्वात्। को वा वरकामिनीप्रेमरसं निर्विशन् राज्यसुखं न तृणाय मन्येतेति भावः।

उक्तञ्च—

राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम्।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम्॥ इति॥ १॥

रत्नानि विभूषयन्ति योषा भूष्यन्ते वनिता न रत्नकान्त्या।
चेतो वनिता हरन्त्यरत्ना नो रत्नानि विनाङ्गनाङ्गसङ्गम्॥ २॥

योषाः स्त्रियः रत्नानि मणिमाणिक्यादीनि विभूषयन्ति विशेषेण शोभयन्ति। वनिताः स्त्रियः पुनर्न रत्नकान्त्या मणिमयूखेन भूष्यन्ते अलङ्क्रियन्ते। एतदेव प्रतिपादयति—वनिताः स्त्रियः अरत्ना रत्नविवर्जिताः चेतो मानसं हरन्ति आवर्जयन्ति, रत्नानि पुनरङ्गनाङ्गसङ्गं विना कामिनीगात्रसंसर्गम् अनवाप्य नो चेतो हरन्ति इत्यनुषङ्गः, 'यावत् स्त्रिया अङ्गे न श्लिष्यन्ति तावच्चित्तहराणि न भवन्ती'ति भावः। असाधुदर्शिनः खलु ते ये रत्नानां स्त्रीजनभूषकत्वमातिष्ठन्ते ये वा रत्नानामङ्गनागात्राणां च साधारणभूषणभूष्यभावमभिप्रयन्ति। उत्सार्य्य मात्सर्यं निष्पक्षपातया दृष्ट्या समीक्ष्यते चेदङ्गनागात्राण्येव परिवर्धयन्ति रत्नानां शोभामिति प्रतिभायात्। सर्वथाहार्यशोभाविरहिता अपि तरुण्यः समावर्जयन्ति मानसानीत्यनुभवसिद्धमेव सर्वेषाम्, मणयस्तु यावदङ्गनाङ्गसमुचितसन्निवेशसौभाग्यं नासादयन्ति तावद् विच्छाया इव प्रतिभासन्ते। तदुक्तं राजशेखरेण—

'अङ्गं चङ्गं णिअगुणगुणालंकिअं कामिणीणं
पच्छाअन्तो उण तणुसिरिं भाइ णेवच्छलच्छी।'

भारविणा च—'न रम्यमाहार्यमपेक्षते गुणः' इति। कविकुलचूडामणिनापि कालिदासेन भङ्ग्यन्तरेण नारीगात्राणामेवालङ्कारत्वं प्रतिपादितं—'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इति। पश्चात्त्येनापि विपश्चिता कवयितम्—

Loveliness needs not the foreign aid of ornaments,

But is, when unadorned, adorned the most.

विसृत्वरशिखासहस्रभासुराणां समग्रजगदुद्भासकानामपि मणिरत्नानामङ्गनाङ्गनां पुरतो निष्प्रभत्वं तदलङ्कार्य्यत्वं चेत्यहो विश्वातिशायि रामणीयकमङ्गनागात्राणाम् ॥ २ ॥

आकारं विनिगूहतां रिपुबलं जेतुं समुत्तिष्ठतां
तन्त्रं चिन्तयतां कृताकृतशतव्यापारशाखाकुलम् ।
मन्त्रिप्रोक्तनिषेविणां क्षितिभुजामाशङ्किनां सर्वतो
दुःखाम्भोनिधिवर्त्तिनां सुखलवः कान्तासमालिङ्गनम् ॥ ३ ॥

"वरा स्त्री राज्यसुखस्य सार" इति प्रथमश्लोकप्रतिपादितेऽर्थे युक्तिरुपन्यस्यते—आकारमिति। आकारं बहिराकृतिं विनिगूहतां प्रच्छादयताम्। यथा सुखदुःखभयक्रोधादयो मानसा विकारा अपरैर्मुखादिसन्दर्शनेन नाभ्यूह्येरन् तथा बहिर्मुखादिविकारान् निपुणं प्रच्छादयताम्। आकारादयो हि प्रायेण सूचयन्त्यान्तरं भावम्। तदुक्तम्—

आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम्।
गर्भस्थं केतकीपुष्पमामोदेनेव षट्पदाः ॥

इति। किञ्च,

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च।
नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः ॥

इति। तथा च कौटिल्यः—'आकृतिग्रहणमाकारः। तस्य संवरणमायुक्तपुरुषरक्षणमाकार्यकालात्' इति। रिपुबलं शत्रुसैन्यं जेतुम् अभिभवितुं समुत्तिष्ठताम् प्रयतमानानाम्। राज्ञा हि निरन्तरमरिजयाय प्रयतनीयमिति नीतिविदः। समुत्तिष्ठताम् इत्यत्र परस्मैपदं चिन्त्यम्, उदोऽनूर्ध्वकर्मणीति सूत्रेणात्मनेपदप्रसङ्गात्। तन्त्रं स्वराष्ट्रगतं शुभाशुभम्। "तन्त्रं स्वराष्ट्र-

चिन्तायामावापः परचिन्तने" इति वैजयन्ती। चिन्तयताम् अनुध्यायताम्। कृताकृतशतव्यापारशाखाकुलम्। कृताश्च अकृताश्च कृताकृताः। व्यापाराणां कर्मणां शाखा विस्तारः व्यापारशाखाः। शतं व्यापारशाखाः शतव्यापारशाखाः। "दिक्संख्ये संज्ञायाम्" इति सूत्रस्यानित्यत्वाभ्युपगमादसंज्ञायामपि समासः। कृताकृताः शतव्यापारशाखाः ताभिः आकुलं व्याप्तम्। राज्ञः कर्तव्येषु स्वपरराष्ट्रचिन्ताया एव मुख्यत्वं सर्वेषां सम्मतम्। तत्र स्वराष्ट्रस्य मङ्गलार्थं बहव उपाया आस्थेया राजभिः। कृत्स्नमायव्ययजातं पर्यवेक्षणीयम्, विमार्गप्रस्थिताः प्रजा दण्डेन नियमनीयाः, विवादाश्च प्रशमनीयाः, इष्टापूर्तानि च प्रवर्तनीयानि एवमुच्चावचानि कर्माणि सदैवानुष्ठेयानीति नास्ति लेशतोऽपि सुखं नाम।

तदुक्तं कालिदासेन [ शा. ५।६ ]—

नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम्॥ इति।

मन्त्रिप्रोक्तनिषेविणाम्। मन्त्रिभिः सचिवैः यत् प्रोक्तं कथितं नीतिशास्त्रविहितं नियमजातमित्यर्थः, तन्निषेविणां सादरमनुतिष्ठताम्, मन्त्रिमतानुसारेणैव व्यवहरताम्। यन्त्रपुत्रिकायाः कुतः सुखमिति भावः। सर्वतः सर्वस्मादपि, अङ्गादङ्गात् सम्भूतात् पुत्रादपि, इतरेषां तु कथैव नास्ति। तथाच कौटिल्यः—'कर्कटकसधर्माणो हि जनकभक्षा राजपुत्राः' इति। उक्तं च कामन्दकीये [ ७।१-२ ]—

प्रजात्मश्रेयसे राजा कुर्वीतात्मजरक्षणम्।
लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः॥
राजपुत्रा मदोन्मत्ता गजा इव निरङ्कुशाः।
भ्रातरं वापि निघ्नन्ति पितरं वाभिमानिनः॥

इति। अत एव दुःखाम्भोनिधिवर्तिनां निरन्तरं दुःखसागरे निमग्नानाम् अहर्निशं दुःखमेवानुभवताम् इति यावत्। क्षितिभुजां नृपाणां कान्ता-

समालिङ्गनम् अनुरक्तसुन्दरीसमाश्लेषः सुखलवः सुखलेशः। उक्तञ्च दशकुमारचरिते—"अधिगतनीतिशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम्। आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः सम्पद्यते, इयत ओदनस्य पाकायैतावदिन्धनं पर्याप्तमिति मानोन्मानपूर्वकं देयम्। उत्थितेन च राज्ञा क्षालिताक्षालिते मुखे मुष्टिमर्धमुष्टिं वाऽभ्यन्तरीकृत्य कृत्स्नम् आयव्ययजातम् अह्नः प्रथमेऽष्टमे वा भागे श्रोतव्यम्। द्वितीयेऽन्योन्यं विवदमानानां जनानामाक्रोशाद्दह्यमानकर्णः कष्टं जीवति।...तृतीये स्नातुं भोक्तुं च लभतेऽवसरम्। भुक्तस्य यावदन्धसः परिणामस्तावदस्य विषभयं न शाम्यत्येव। चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति। पञ्चमे मन्त्रचिन्तया महान्तमायासमनुभवति। तत्रापि मन्त्रिणो मध्यस्था इवान्योन्यं मिथः सम्भूय दोषगुणौ दूतचारवाक्यानि शक्याशक्यतां देशकालकार्यावस्थाश्च स्वेच्छया विपरिवर्तयन्तः स्वपरमित्रमण्डलान्युपजीवन्ति। बाह्याभ्यन्तरांश्च कोपान् गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगृह्णन्ति। षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः। सोऽस्यैतावान् स्वैरविहारकालो यस्य तिस्रस्तिपादोत्तरा नाडिकाः। सप्तमे चतुरङ्गबलप्रत्यवेक्षणप्रयासः। अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः। पुनरुपास्यैव सन्ध्यां प्रथमे रात्रिभागे गूढपुरुषा द्रष्टव्याः। तन्मुखेन चातिनृशंसाः शस्त्राग्निरसप्रणिधयोऽनुष्ठेयाः। द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभेत। तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत किल। कथमिवास्याजस्रचिन्तायासविह्वलमनसो वराकस्य निद्रासुखमुपनमेत्। पुनः षष्ठे शास्त्रचिन्ताकार्यचिन्तारम्भः। सप्तमे तु मन्त्रग्रहो दूताभिप्रेषणानि च" [उः ८] इत्यादि॥ ३॥

श्रुतं दृष्टं स्पृष्टं स्मृतमपि नृणां ह्लादजनकं
न रत्नं स्त्रीभ्योऽन्यत् क्वचिदपि कृतं लोकपतिना।
तदर्थं धर्मार्थौ सुतविषयसौख्यानि च ततो
गृहे लक्ष्म्यो मान्याः सततमबला मानविभवैः॥ ४॥

लोकपतिना ब्रह्मणा स्त्रीभ्यो योषिद्भ्योऽन्यत् अपरं क्वचिदपि कुत्रापि

स्वर्गे वा मर्त्ते वा रसातले वा रत्नं श्रेष्ठं वस्तु। वक्ष्यति च "द्विपहयवनितादीनां स्वगुणविशेषेण रत्नशब्दोऽस्ति" इति। "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इति वैजयन्ती। न कृतं न सृष्टम्। स्त्रीरत्नं कीदृशम्? श्रुतं नाममात्रेणाकर्णितमेव। दृष्टं चक्षुर्गोचरीभूतमेव। स्पृष्टम् अवयवैकदेशेन स्पर्शस्य विषयीभूतमेव। स्मृतं चिन्तितम्, प्रत्यक्षस्य वार्त्ता दूर आस्ताम्, मनसा ध्यातमपि नृणां पुंसाम्। "नृ च" इति पाक्षिको दीर्घाभावः। ह्लादजननं सुखकरम्। तदुक्तं कामन्दकीये [ १।५२ ]—

नामापि स्त्रीति संह्लादि विकरोत्येव मानसम्।
किं पुनर्दर्शनात्तस्या विलासोल्लासितभ्रुवः॥

इति। इतरेषु रत्नेषु कानिचिद् दृष्टान्येव परितर्पयन्ति नेत्राणि कानिचिच्च स्पृष्टान्येव शीतलयन्त्यङ्गानि, एकमपि तु नाम्ना न प्रीणयति न वा स्मरणपथमनुप्राप्तं ह्लादयति। स्त्रीरत्नं तु रत्नान्तरविलक्षणं लोकोत्तरमेव रत्नं वेधसा विनिर्मितं यत् खलु नाम्ना श्रवणसरणिमनुप्रपन्नमपि जनयति मनःप्रह्लादम्, चक्षुर्विषयमवतीर्णमपि स्नपयति ज्योत्स्नारसेन नयनयुगलीम्, स्वल्पं स्पृष्टमपि पीयूषपूरेणाप्लावयति, स्मृतिपदमुपारूढमपि प्रतिपादयत्यमन्दमानन्दम्। तदर्थं तस्या एव कृते धर्मार्थौ धर्मा अनुष्ठीयन्ते, अर्थाश्चोपार्ज्यन्ते। "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायेन दिव्याङ्गनानङ्गरसलिप्सयैव यागादीननुतिष्ठन्ति विवेकिनः। तदर्थमेव चायासयत्यात्मानमर्थोपार्जनेन। कामिनीसम्भोगसाधनत्वेनैव धर्मार्थयोरुपयोगः, अन्यथा तयोरकिञ्चित्करत्वम्। मोक्षस्त्वन्य एव तदर्थमल्पीयांस एव प्रयतन्ते। ततः स्त्रीभ्य एव सुतविषयसौख्यानि पुत्राधिगतिः इन्द्रियसौख्यं च। अबलाः स्त्रियः, गृहं भवने लक्ष्म्यः श्रियः अतः सततं निरन्तरं मानविभवैः सम्मानप्रदर्शनेनार्थादिप्रदानेन च मान्याः पूज्याः। तथाचोक्तं भगवता मनुना [ ९।२६-२८ ]—

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन॥

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥
अपत्यं धर्मकार्य्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥

किञ्च,

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राऽफलाः क्रियाः ॥ [ ३।५५-५६ ]

किञ्च,

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।

भगवती श्रुतिरप्याह—जायेदस्तम् । जायैव गृहमिति तदर्थः ॥

वक्ष्यते चात्रैव—

स्त्रीणां गुणा यौवनरूपवेष-
दाक्षिण्यविज्ञानविलासपूर्वाः ।
स्त्रीरत्नसंज्ञा च गुणान्वितासु
स्त्री व्याधयोऽन्या चतुरस्य पुंसः ॥

उक्तञ्च भगवता व्यासेन—

यस्य भार्या शुचिर्दक्षा मिष्टान्नप्रियवादिनी ।
आत्मगुप्ता भर्त्तृभक्ता सा स्त्रीरित्युच्यते बुधैः ॥
या च भार्य्या विरूपाक्षी कश्मला कलहप्रिया ।
उत्तरोत्तरवक्त्री च सा जरा न जरा जरा ॥
निर्विण्णे निर्विण्णा मुदिते मुदिता समाकुलाऽऽकुलिते ।
प्रतिबिम्बसमा कान्ता संक्षुब्धे केवलं भीता ॥ ४ ॥

येऽप्यङ्गनानां प्रवदन्ति दोषान्
वैराग्यमार्गेण गुणान् विहाय।
ते दुर्जना मे मनसो वितर्कः
सद्भाववाक्यानि न नाम तेषाम् ॥ ५ ॥

येऽपि नरा अङ्गनानां स्त्रीणां गुणान् उत्कर्षान् विद्यमानानपि विहाय परित्यज्य वैराग्यमार्गेण निर्वेदप्रतिपादनमुखेन दोषान् प्रवदन्ति कीर्तयन्ति ते दुर्जनाः मत्सरिणः खला इति मे मनसः चित्तस्य वितर्क आशङ्का। उक्तञ्च—"यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः" इति। दृश्यन्ते हि केचन सन्न्यासमार्गमनुप्रपन्ना ये स्त्रीणां जाज्वल्यमानानपि गुणनिकरान् गज-निमीलिकयाऽवधीरयन्तस्तासां दोषकीर्तने सहस्रजिह्वतामात्मनः प्रकटयन्ति। अहं तावदिमान् पिशुनत्वेन सम्भावयामि, सर्वथाऽश्रद्धेयमेतेषां वचनम्। तेषां तानि वाक्यानि न नाम सद्भाववाक्यानि परमार्थवचनानि न भवन्ति। दुराग्रहवशवर्तितयैव तैरेवं प्रलप्यते, न खलु भूतार्थव्याहृतिस्तेषां सम्भाव्यते ॥ ५ ॥

प्रब्रूत सत्यं कतरोऽङ्गनानां
दोषोऽस्ति यो नाचरितो मनुष्यैः।
धाष्ट्र्येन पुम्भिः प्रमदा निरस्ता
गुणाधिकास्ता मनुनात्र चोक्तम् ॥ ६ ॥

हे वैराग्यमार्गपथिकाः, सत्यं प्रब्रूत परमार्थतः कथयत न तु दुराग्रह-ग्रहिलतया मिथ्या वदत, अङ्गनानां स्त्रीणां कतरो दोषोऽस्ति कः प्रधानो दोषो विद्यते यो मनुष्यैः पुरुषैः नाचरितो नानुष्ठितः। प्रमदासु तावत् पुरुषैर्दौःशील्यादयो बहवो दोषा उद्भाव्यन्ते, परं सत्यं कथयत इमे दोषाः पूर्वं पुरुषैराचरिता वा न वा? यथा पुरुषेषु साधवो दुष्टाश्च दृश्यन्ते प्रमदा-स्वपि तथैव। एतावानत्र विशेषः—प्रमदासु यास्तावद्दुष्टास्ताभिर्गतानुगतिकतया पुरुषकृष्टमेव वर्त्मानुस्त्रियते, न त्विदंप्रथमतया किमप्यनुष्ठीयते। पुम्भिः पुरुषैः धाष्ट्र्येन धृष्टतया निर्लज्जतया प्रमदाः स्त्रियो निरस्ताः लीलया इमे

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥
अपत्यं धर्मकार्य्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥

किञ्च,

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राऽफलाः क्रियाः ॥ [ ३।५५-५६ ]

किञ्च,

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
भगवती श्रुतिरप्याह—जायेदस्तम् । जायैव गृहमिति तदर्थः ॥

वक्ष्यते चात्रैव—

स्त्रीणां गुणा यौवनरूपवेष-
दाक्षिण्यविज्ञानविलासपूर्वाः ।
स्त्रीरत्नसंज्ञा च गुणान्वितासु
स्त्री व्याधयोऽन्या चतुरस्य पुंसः ॥

उक्तञ्च भगवता व्यासेन—

यस्य भार्या शुचिर्दक्षा मिष्टान्नप्रियवादिनी ।
आत्मगुप्ता भर्तृभक्ता सा स्त्रीरित्युच्यते बुधैः ॥
या च भार्य्या विरूपाक्षी कश्मला कलहप्रिया ।
उत्तरोत्तरवक्त्री च सा जरा न जरा जरा ॥
निर्विण्णे निर्विण्णा मुदिते मुदिता समाकुलाऽऽकुलिते ।
प्रतिबिम्बसमा कान्ता संक्षुब्धे केवलं भीता ॥ ४ ॥

येऽप्यङ्गनानां प्रवदन्ति दोषान्
वैराग्यमार्गेण गुणान् विहाय ।
ते दुर्जना मे मनसो वितर्कः
सद्भाववाक्यानि न नाम तेषाम् ॥ ५ ॥

येऽपि नरा अङ्गनानां स्त्रीणां गुणान् उत्कर्षान् विद्यमानानपि विहाय परित्यज्य वैराग्यमार्गेण निर्वेदप्रतिपादनमुखेन दोषान् प्रवदन्ति कीर्तयन्ति ते दुर्जनाः मत्सरिणः खला इति मे मनसः चित्तस्य वितर्क आशङ्का । उक्तञ्च—"यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः" इति । दृश्यन्ते हि केचन सन्न्यासमार्गमनुप्रपन्ना ये स्त्रीणां जाज्वल्यमानानपि गुणनिकरान् गज-निमीलिकयाऽवधीरयन्तस्तासां दोषकीर्तने सहस्रजिह्वतामात्मनः प्रकटयन्ति । अहं तावदिमान् पिशुनत्वेन सम्भावयामि, सर्वथाऽश्रद्धेयमेतेषां वचनम् । तेषां तानि वाक्यानि न नाम सद्भाववाक्यानि परमार्थवचनानि न भवन्ति । दुराग्रहवशवर्तितयैव तैरेवं प्रलप्यते, न खलु भूतार्थव्याहृतिस्तेषां सम्भाव्यते ॥ ५ ॥

प्रब्रूत सत्यं कतरोऽङ्गनानां
दोषोऽस्ति यो नाचरितो मनुष्यैः ।
धाष्टर्येन पुम्भिः प्रमदा निरस्ता
गुणाधिकास्ता मनुनात्र चोक्तम् ॥ ६ ॥

हे वैराग्यमार्गपथिकाः, सत्यं प्रब्रूत परमार्थतः कथयत न तु दुराग्रह-ग्रहिलतया मिथ्या वदत, अङ्गनानां स्त्रीणां कतरो दोषोऽस्ति कः प्रधानो दोषो विद्यते यो मनुष्यैः पुरुषैः नाचरितो नानुष्ठितः । प्रमदासु तावत् पुरुषैर्दौःशील्यादयो बहवो दोषा उद्भाव्यन्ते, परं सत्यं कथयत इमे दोषाः पूर्वं पुरुषैराचरिता वा न वा ? यथा पुरुषेषु साधवो दुष्टाश्च दृश्यन्ते प्रमदा-स्वपि तथैव । एतावानत्र विशेषः—प्रमदासु यास्तावद्दुष्टास्ताभिर्गतानुगतिकतया पुरुषकृष्टमेव वर्त्मानुस्त्रियते, न त्विदंप्रथमतया किमप्यनुष्ठीयते । पुम्भिः पुरुषैः धाष्टर्येन धृष्टतया निर्लज्जतया प्रमदाः स्त्रियो निरस्ताः लीलया इमे

दोषनिकरस्य इति दोषदुष्टतया चित्रिताः। ताः स्त्रियो गुणाधिकाः दया-दाक्षिण्यसौशील्यादिभिर्गुणैः पुरुषेभ्योऽधिका विशिष्टाः। अत्र अस्मिन् विषये मनुना महर्षिप्रवरेण च उक्तम् ॥ ६ ॥

किमित्यपेक्षायामाह—

सोमस्तासामदाच्छौचं गन्धर्वः शिक्षितां गिरम् ।
पावकः सर्वमेध्यत्वं तस्मान्निष्कसमाः स्त्रियः ॥ ७ ॥

सोमः चन्द्रमाः तासां नारीणाम्, सम्बन्धसामान्यविवक्षया षष्ठी। शौचं पावित्र्यम् अदात् प्रसादीकृतवान्। गन्धर्वः गानमेव धर्मो यस्य तादृशो देवयोनिविशेषः। शिक्षितां गिरं निखिलजनश्रवणसुभगां समीचीनां वाचम् अदात् इति पूर्वतोऽनुषङ्गः। पावकः यः खलु निखिलानि वस्तुजातानि स्वतेजोमहिम्ना पवित्रीकरोति सोऽग्निः सर्व-मेध्यत्वं सर्वास्वप्यवस्थासु पावित्र्यं स्पर्शनयोग्यत्वं चादादिति शेषः। तस्मात् निष्कसमाः स्त्रियः, एवं विविधगुणगणविशिष्टतया सदा पवित्रतया च रत्नमालेव सदैव सादरं सानुरागं च कण्ठे धारयितुं योग्याः।

यद्यपि मुद्रितपुस्तके 'अग्निश्च सर्वभक्षित्वम्' इति पाठस्तथापि स न सम्यग् लगतीति याज्ञवल्क्यवचनानुसारेण "पावकः सर्वमेध्यत्व"मिति पाठः कल्पितः। यद्यपि श्लोकोऽयं मनुप्रणीतत्वेनोदाहृतं तथापि मुद्रितासु मनु-संहितासु नैवोपलभ्यते। याज्ञवल्क्यसंहितायां [ १।७१ ] पुनः किञ्चित्-परिवर्तिताकार उपलभ्यते। तथाच तत्र पाठः—

सोमः शौचं ददावासां गन्धर्वश्च शुभां गिरम् ।
पावकः सर्वमेध्यत्वं मेध्या वै योषितः सदा ॥ इति ॥ ७ ॥

ब्राह्मणाः पादतो मेध्या गावो मेध्याश्च पृष्ठतः ।
अजाश्वा मुखतो मेध्याः स्त्रियो मेध्यास्तु सर्वतः ॥ ८ ॥

ब्राह्मणाः पादतः पादयोर्मेध्याः पवित्राः। ब्राह्मणानां पादग्रहणं सर्वैः कर्तुं युज्यत इत्यर्थः। गावः च तथा गावः पृष्ठतः पृष्ठभागे मेध्याः

पवित्राः। तासामार्द्रपृष्ठत्वविधानं सर्वथा युज्यत एव। अजाश्वाः छागा घोटकाश्च मुखतः मुखे मेध्याः पवित्राः। तद्भुक्तावशेषतृणादिस्पर्शेऽपि नोच्छिष्टत्वदोषशङ्केत्यर्थः। स्त्रियो योषितः तु सर्वतः सर्वेष्वङ्गेषु स्पर्शालिङ्गनाधरपानादिष्वित्यर्थः, मेध्याः पवित्राः ॥ ८ ॥

स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित्।
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥ ९ ॥

स्त्रियो योषितः अतुलम् असमम् इतरवस्तुवैलक्षण्येन पवित्रम्। नपुंसकत्वमेकत्वं चार्षम्। एताः कर्हिचित् कदापि न दुष्यन्ति दुष्टतामापद्यन्ते। हि तथाहि मासि मासि प्रतिमासं प्रवर्तमानं रजः शोणितम् आसां दुष्कृतानि पापानि मनसा सङ्कल्पितानि अपकर्षति विनाशयति। स्त्रियो हि स्वभावत एव पवित्राः संयतेन्द्रियाश्च, यदि कदाचित् कारणविशेषवशात् कापि पापचिन्ता समुदियादासां मानसे तर्हि समनन्तरया रजःप्रवृत्त्यैवामूर्निष्कल्मषतां नीयन्ते ॥ ९ ॥

जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥ १० ॥

"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। यत्रैता हि न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः" इत्युक्त्वेदानीं स्त्रीणामनादरकरणे दोषः प्रदर्श्यते महर्षिणा मनुना—जामयः स्वसारः कुलस्त्रियश्च अप्रतिपूजिता असम्मानिता उत्पीडिता इत्यर्थः। यानि गेहानि शपन्ति आक्रोशन्ति तानि कृत्याहतानीव आभिचारिक्या क्रियया समाक्रान्तानीव समन्ततः सर्वतो विनश्यन्ति नाशं प्राप्नुवन्ति। यथाभिचारक्रियया समूलमुन्मूल्यन्ते वंशास्तथा स्त्रीणामाक्रोशेनापि, अतः सर्वथा सम्माननीया एव नार्य इति फलितम् ॥ ११ ॥

जाया वा स्याज्जनित्री वा सम्भवः स्त्रीकृतो नृणाम्।
हे कृतघ्नास्तयोर्निन्दां कुर्वतां वः कुतः सुखम् ॥ ११ ॥

जाया भार्या वा भवतु जनित्री जनयित्री माता वा भवतु, नृणां मनुजानां सम्भवः समुत्पत्तिः स्त्रीकृतो नारीमूलक एव। हे कृतघ्नाः,

यस्याः प्रसादेन समधिगतं युष्माभिर्जन्म, या च कुलानां वः प्रतिष्ठापिका तयोर्जननीभार्ययोः निन्दां कुर्वतां कुत्सां प्रचारयतां वः कुतः सुखम् श्रेयो भवेत्। उक्तञ्च :—

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥

इति। अहो युष्माकं कृतघ्नतायाः प्रकारः। यया खलु दशमासानरुन्तुदां वेदनां विषह्य यूयं गर्भे धृताः, यया च निरययन्त्रणामनुभूय यूयं प्रसूताः, यया चाविगणितशरीरपातं यूयं परिरक्षिताः स्तन्यपीयूषदानेन च लालितास्तामेव निखिलगुरुश्रेष्ठां मातृदेवीं विनिन्दथ। किमेवं कुर्वतां वः सहस्रधा न विदीर्यते रसनया। यया च युष्माकं बीजं ध्रियते यया च युष्मदर्थमपत्यानि प्रसूय युष्मत्कुलस्य स्थितिः सम्पाद्यते सर्वथा यन्मूलं युष्माकं वंशगौरवम् तामपि कुलप्रतिष्ठां शरीरार्धभूतां सहधर्मचारिणीं विनिन्दथ! ॥ १२ ॥

दम्पत्योर्व्युत्क्रमे दोषः समः शास्त्रे प्रतिष्ठितः।
नरा न तमवेक्षन्ते तेनात्र वरमङ्गना ॥ १२ ॥

दम्पत्योः जायापत्योः व्युत्क्रमे व्यभिचारे—पुरुषस्य परस्त्रीगमने स्त्रियाश्च परपुरुषसंसर्गे, यो दोषो दुष्टता स शास्त्रे धर्मशास्त्रादौ समः प्रतिष्ठितः तुल्यतया व्यवस्थापितः। यथा मनुना परपुरुषरतां नारी-मुद्दिश्योक्तम्—

व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम्।
शृगालयोनिञ्चाप्नोति पापरोगैश्च पीड्यते ॥९।३०

तथा परदारगामिनं पुरुषमप्यधिकृत्योक्तम्—

न हीदृशमनायुष्यं लोके किञ्चन विद्यते।
यादृशं पुरुषस्येह परदारोपसेवनम् ॥ ४।१३४।

विष्णुपुराणेऽप्युक्तम् [ ३।११।१२२-२३ ]—

परदारान्न गच्छेत्र मनसापि कदाचन ।
किं वाचास्थिबन्धोऽपि नास्ति तेषु व्यवायिनाम् ॥
मृतो नरकमभ्येति हीयतेऽत्रापि चायुषः ।
परदाररतिः पुंसामुभयत्रापि भीतिदा ॥

ब्रह्मवैवर्तपुराणेऽप्युक्तम्—

इहातिनिन्द्यः सर्वत्र नाधिकारी स्वकर्मसु ।
परत्रैवान्धकूपे च यावद्वर्षशतं वसेन् ॥

इत्यादि । "यत् पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्" इति धर्मशास्त्रवचनमप्यत्र साक्षिभूयमावहति । नराः शास्त्रेषु बहुशो विघोषितं दोषं न अवेक्षन्ते परदारोपसेवननिषेधं न प्रतिपालयन्तीत्यर्थः, स्त्रियः पुनरवेक्षन्ते इति शेषः । निवर्तन्ते च परपुरुषसंसर्गात् । तेन कारणेनात्र व्यभिचारविषये अङ्गनाः स्त्रियो वरं नरापेक्षया श्रेयस्यः । व्यभिचारो हि स्त्रिया वा भवतु पुरुषस्य वा भवतु तुल्यतया दोषभाक् । परं पुरुषैः शास्त्रमर्यादा विभज्यन्ते, स्त्रीभिस्तु न तथा इति स्त्रिय एव श्रेयस्यः । अत्रेदमपरमपि द्रष्टव्यम्, कदाचित् कस्याश्चित् स्त्रियाः सञ्जाते स्वल्पेऽपि शीलभ्रंशे पुरुषैः सहस्रचक्षुष्कत्वमात्मनः प्रकटय्य महता दण्डेन योज्यते वराकी, स्वयं पुनर्निर्विशङ्कमेवाचर्य्यते परदारगमनम् । सुष्ठु खलूक्तम्—

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ इति ॥ १२ ॥

बहिर्लोम्ना तु षण्मासान् वेष्टितः खरचर्मणा ।
दारातिक्रमणे भिक्षां देहीत्युक्त्वा विशुध्यति ॥ १३ ॥

न केवलं स्त्रीणां व्यतिक्रमे प्रायश्चित्तं विहितं स्मृतिकारैः, पुरुषाणामपि धर्मपत्नीव्यतिक्रमे गरीय एव व्यधायि प्रायश्चित्तमिति प्रायश्चित्तशरीरं प्रदर्शयति—बहिर्लोम्नेति । दारातिक्रमणे परस्त्रीनिषेवणे बहिर्लोम्ना

खरचर्मणा यस्य खलु गर्दभचर्मणो बहिर्लोमानि न शातितानि प्रत्युत देदीप्यमानानि गर्दभत्वमेवावबोधयन्ति परिदधानस्य, तादृशेन गर्दभचर्मणा षट् मासान् अर्द्धसंवत्सरं न त्वेकद्वानि दिनानि वेष्टितः समाच्छादितशरीरः भिक्षां देहीति द्वाराद् द्वारं भिक्षां याचमानः ततः गुरुपातकात् विशुध्यति विमुच्यते। अत्र प्रायश्चित्तस्य गुरुत्वमेवापराधस्य गुरुत्वमनुष्ठातुश्च खरकल्पत्वं गमयति ।। १३ ।।

न शतेनापि वर्षाणामपैति मदनाशयः ।
तत्राशक्त्या निवर्तन्ते नरा धैर्येण योषितः ।। १४ ।।

मदनाशयः कामभोगाभिलाषः वर्षाणां शतेनापि पुनः पुनश्चरितार्थोऽपि न अपैति नापगच्छति न शाम्यतीत्यर्थः उक्तञ्च—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।।

तत्र कामविषये नराः पुरुषाः अशक्त्या इन्द्रियसामर्थ्यस्योपक्षीणत्वा निवर्तन्ते विरमन्ति न तु वशीकृतेन्द्रियतया। योषितः पुनः धैर्येण संयमेन निवर्तन्ते। "मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु" इति कोषः। इतोऽपि पुरुषापेक्षया श्रेयस्त्वं नारीणाम्। कामभोगाभिलाषस्य सर्वतो बलीयस्त्वेपि पुरुषा वार्द्धके गलितेन्द्रिया असामर्थ्यात् स्त्रीसङ्गान्निवर्तन्ते, स्त्रियः पुनः सत्यपि सामर्थ्येऽनितरसाधरणेन संयमबलेन निवर्तन्ते पुरुषसंसर्गात् ।।१४।।

अहो धाष्टर्यमसाधूनां निन्दतामनघाः स्त्रियः ।
मुष्णतामिव चौराणां तिष्ठ चौरेति जल्पताम् ।। १५ ।।

अनघाः दोषलेशास्पृष्टाः स्त्रियः निन्दतां कुत्सयमानानाम् असाधूनां दुर्जनानां धाष्टर्यं निर्लज्जता च साहसं च अहो! अहो इत्याश्चर्ये। केषामिव ? मुष्णतां प्रसह्य पथिकजनस्य सर्वस्वम् अपहरताम्, तिष्ठ चौरेति जल्पतां यस्य स्वमपहरति तमेव पलायमानम् उद्दिश्य तिष्ठ चौर तिष्ठ रे तस्कर तिष्ठ तिष्ठ क यासि, इति जल्पताम् आक्रोशतां चौराणां लुण्ठाकानाम् इव। अहो औत्तराधर्यम्! स्वयं पापं समाचरन्तः पुरुषा न केवलं नापत्रपन्ते नारीभ्यः

प्रत्युत सर्वथा शुद्धशीलासु स्त्रीषु अविद्यमानानेव दोषानुद्भाव्य ता विनिन्दन्ति। स्वयं स्त्रीष्वपराध्यन्तः स्वापराधांस्तास्वारोपयन्तीति किमतः परं विस्मयास्पदं स्यात्। तथाचाङ्गलानामाभाणकः—"Attack is the best defence" इति। इमे हि दुरात्मानस्तेषां दस्यूनां सरणिमनुसरन्ति ये प्रसह्य पथिकान् मलमल्लकशेषान् विधाय कण्ठगतान् प्राणानादाय कथञ्चिन पलायमानांस्तान् उद्दिश्य चौरङ्कारमाक्रोशन्ति ॥ १५ ॥

पुरुषश्चटुलानि कामिनीनां
कुरुते यानि रहो न तानि पश्चात्।
सुकृतज्ञतयाङ्गना गतासू-
नवगुह्य प्रविशन्ति सप्रजिह्वम् ॥ १६ ॥

पुरुषः कामिनीनां जातकामानां रमणीनां रहो निर्जने यानि चटुलानि प्रियाचरितानि कुरुते। कुरुते इत्यात्मनेपदेनात्मन एव परितृप्त्यै तत्तद् विदधाति तासां तृप्तिस्त्वानुषङ्गिकीति प्रतीयते। पश्चात् किञ्चित्कालादूर्ध्वं प्रौढप्रायतामुपागतायां तस्यां तानि न कुरुते। अहो दौर्जन्यं जनानां यत्ते कुसुमितयौवनानां कान्तानां प्रियं विधाय स्वयञ्च स्वर्गसुखं निर्विश्य व्यतिगतायां कियत्यांचित् कालकलायां दुःस्वप्नविस्मारं विस्मृत्य तं ब्रह्मानन्द-सहोदरं सुखातिशयमौदासीन्यमेवावलम्बन्ते। अङ्गनाः स्त्रियः पुनः सुकृतज्ञ-तया कृतवेदित्वातिरेकेण पूर्वानुभूतं प्राणवल्लभप्रतिपादितं सुखलवं स्मारं स्मारं गतासून् व्यपेतप्राणानपि प्रियान् अवगुह्य सानुरागं समालिङ्ग्य सप्रजिह्वं चितानलं प्रविशन्ति, पत्यनुरोधान्निरययन्त्रणासदृशीं दाहयन्त्रणामपि न गणयन्ति, मृत्युमपि तृणीकुर्वन्ति॥ १६ ॥

स्त्रीरत्नभोगोऽस्ति नरस्य यस्य
निःस्वोऽपि सम्प्रत्यवनीश्वरोऽसौ।
राज्यस्य सारोऽशनमङ्गनाश्च
तृष्णानलोद्दीपनदारु शेषम् ॥ १७ ॥

यस्य नरस्य स्त्रीरत्नभोगः वरकामिनीसम्भोगः अस्ति, असौ सुभगः निःस्वोऽपि अकिञ्चनोऽपि सम्प्रति सम्भोगकाले अवनीश्वरः पृथिवीपतिः। 'सम्प्रति' इत्यत्र 'माम्प्रति' इति कैश्चित् पठ्यते, मम मतेनेति च व्याख्यायते। यद्यपि तस्य काणवराटिकापि नास्ति तथापि यथेच्छं दिव्याङ्गनानङ्गरसमनुभवन्नसौ राज्यसुखमेवानुभवति। तथाहि, राज्यस्य सारः स्थिरांशः श्रेष्ठांश इति यावत्। अशनम् रसनातर्पणविविधान्नपेयोपयोगः, अङ्गनाश्च वरवनितासम्भोगश्च। शेषम् अवशिष्टं वैभवादि तृष्णानलोद्दीपनदारु आकाङ्क्षानलसमुत्तेजकमिन्धनमेव। धनरत्नादिना कदापि कस्यापि तृप्तिर्नोपजायते, केवलं यथाधिकाधिकं वैभवमुपनमेत् तथैव प्रयत्नो भवति। परार्ध्यभोजनेन वराङ्गनानिषेवणेन च सौख्यं प्रत्यक्षसिद्धमेव सर्वेषाम्। अनयोरपि भोजनसुखमङ्गनोपभोगसुखस्य शततमीमपि कलां न स्पृशति, तस्य केवलं रसनेन्द्रियतर्पकत्वात् तदितरस्य पुनः सर्वेन्द्रियसन्तर्पकत्वात् स्वर्गसुखतोऽपि स्वादीयस्त्वाच्च। तेन सर्वथाङ्गनैव राज्यसुखस्य प्रधानमुपकरणं तच्च यस्य स्वायत्तं किं तस्याकिञ्चित्करेण विभवेन ॥ १७ ॥

कामिनीं प्रथमयौवनान्वितां
मन्दवल्गुमृदुपीडितस्वनाम्।
उत्स्तनीं समवलम्ब्य या रतिः
सा न धातृभवनेऽस्ति मे मतिः ॥ १८ ॥

प्रथमयौवनान्विताम् अभिनवतारुण्यविमण्डिताम्। मन्दः अल्पः वल्गुः रम्यः मृदुः मधुरः पीडितः स्तब्धः स्वनः शब्दः यस्याः ताम्। कान्तेन शनैः सोपचारं समालिङ्गिता मृदुमन्दमनोहराव्यक्तभाषिणीम् उत्स्तनीम् उद्गतस्तनां समुद्भिद्यमानकुचां कामिनीं जातमन्मथां योषितं समवलम्ब्य परिष्वज्य या रतिः निरतिशया प्रीतिः सञ्जायते सा धातृभवने वेधसो गृहे ब्रह्मलोकेऽपीत्यर्थः नास्ति न विद्यते इति मे मतिः इत्यहं मन्ये। ब्रह्मलोकप्राप्त्यर्थं कति वा शास्त्राणि न परिशील्यन्ते, कति वा व्रतानि न परिपाल्यन्ते कियद् वा तपो न तप्यते, कियान् वा क्लेशो न सह्यते, परं सर्वमेतन्मूषक-

ग्रहणाय शिखरिखननायासमेवानुहरति। अहो जनानां व्यामोहः अहो तेषां वल्मीके हिमाद्रिभ्रमः यत् ते मुग्धकान्तास्तनसङ्गनोऽपि केलिविश्रान्त-कान्तावदनकमलवल्गत्कान्तिसान्द्रनकारादपि वेदाभ्यासजडस्य विषय-व्यावृत्तकौतूहलस्य ब्रह्मणो लोकं सातिशयं मन्यन्ते। वस्तुतस्तु वामलोचनाविलासस्य पुरतो ब्रह्मलोकसुखं नितान्तत एवाकिञ्चित्करम् ॥१८॥

तत्र देवमुनिसिद्धचारणै-
र्मान्यमानयितृसेव्यसेवनात्।
ब्रूत धातृभवनेऽस्ति किं सुखं
यद्रहः समवलम्ब्य न स्त्रियम् ॥ १९ ॥

तत्र धातृभवने ब्रह्मलोके देवमुनिसिद्धचारणैः देवैर्मुनिभिः सिद्धाख्य-दैवयोनिविशेषैः कुशीलवैश्च मान्यानां पूज्यानां मानयितॄणां पूजयितॄणां सेव्यानां सेवनार्हाणां च सेवनात् परिचर्यातः अन्यत् किं सुखम् अस्ति यत् रहः निर्जने स्त्रियं कामिनीम् अवलम्ब्य आश्रित्य न अधिगम्येत। ब्रह्मलोके केवलं स्वापेक्षया समुन्नतानां स्तुतिगीतय एव अनवरतं प्रवर्तन्ते। किं ततः सहृदयानां सुखलेशोऽपि जायते ॥ १९ ॥

आब्रह्मकीटान्तमिदं निबद्धं
पुंस्त्रीप्रयोगेण जगत् समस्तम्।
व्रीडात्र का यत्र चतुर्मुखत्व-
मीशोऽपि लोभाद् गमितो युवत्याः ॥ २० ॥

निगमयति—आब्रह्मेति। इदं प्रत्यक्षतः परिदृश्यमानं समस्तं समग्रं जगत् आब्रह्मकीटान्तं सर्वलोकपितामहाद् ब्रह्मण आरभ्य निकृष्टतमं कीटं यावत् पुंस्त्रीप्रयोगेण स्त्रीपुरुषसम्प्रयोगेण निबद्धं संग्रथितम्। अत्र स्त्री-पुरुषसमागमे का व्रीडा का लज्जा यत्र ईशोऽपि योगिनामग्रगण्यो वृन्दारक-वृन्दानामपि वन्दनीयः संयमिनां धुरि कीर्त्तितो देवदेवोऽपि युवत्या लोभात् त्रिभुवनललनाकुलललामायमानायास्तिलोत्तमायाः सौन्दर्यसन्दर्शनलालसया चतुर्मुखत्वं गमितः मुखचतुष्टयोपेतत्वम् आपादितः। विचार्यतां तावत्

कथं वोच्चावचप्राणिजातसमाकुलं जगदिदं समुत्पन्नम्। ब्रह्मण आरभ्य सरीसृपं यावत् समग्रं प्राणिजातं मैथुनधर्मेणैव सृष्टमित्यत्र सर्वश्रुतिस्मृति-पुराणेतिहासानामैकमत्यम्। तर्हि यत् खलु सर्वैः समाचर्यते, यः खलु धर्मः समुच्छ्रितनीचनिर्विशेषं सर्वैरेव प्राणिभिः परिपाल्यते तत्र का लज्जा सचेतसाम्? "का वा गणना सचेतनेषु, अपगतचेतानान्यप्यायास्यन्ते मदनेन। तथाहि कुमुदिन्यपि दिनकरकरानुरागिणी भवति, कमलिन्यपि शशिकरद्वेषमुज्झति, निशापि वासरेण सह मिश्रतामातनोति, ज्योत्स्ना-प्यन्धकारमनुवर्तते। छायाऽपि प्रदीपाभिमुखमवतिष्ठते। तडिदपि जलदे स्थिरतां व्रजति। जरापि यौवनेन सञ्चारिणी भवति।"* दृश्यतां यस्य धैर्यस्य तुला नास्ति, यस्य संयमस्यौपम्यं नोपलभ्यते सोऽपि योगीश्वर-स्तिलोत्तमासन्दर्शनलाम्पट्येन मुखचतुष्टयं प्रादुष्कृतवान्। गीतायामपि श्रीभगवता प्रोक्तम्—

"धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ" इति। अतएव सर्वैरत्र धर्माविरुद्धेन मार्गेण तृतीयः पुरुषार्थोऽर्जनीय इति सिद्धम्॥ २०॥

---

## समालोचनम्

अर्थसंग्रहः। महामहोपाध्यायलौगाक्षिभास्करप्रणीतः। परमहंस-रामेश्वरभिक्षुकृतार्थसंग्रहकौमुदीसहितः। बी-ए विरुदविमण्डितेन डि. भि. गोखेलमहोदयेन परिष्कृतः आङ्गलभाषामयेणानुवादेन च संयोजितः। पुण्यपत्तनस्थ-ओरियेण्टाल्-बुक्-एजेन्सीसंस्थातो डाक्तार एन्. जी. सर्देशाइमहोदयेन प्रकाशितः। मूल्यं सार्धं रूप्यकम्। (Published by Dr. N. G. Sardesai, Oriental Book Agency, Shukrawar Peth, Poona)

पूर्वमीमांसाशास्त्रं हि पारिभाषिकशब्दबाहुल्याद् यागाद्यनुष्ठानज्ञान-सापेक्षत्वाच्च सुतरामेव दुर्बोधं जिज्ञासुभिर्विशेषतश्च शास्त्रेष्वकृतपरिश्रमैर्बालैः। अत एव च शास्त्रस्यास्य सुगमत्वसम्पादनाय विरचितानि सुबहूनि प्रकरणपुस्तकानि तैस्तैः पण्डितप्रकाण्डैः। एष्वेव च प्रकरणग्रन्थेष्वन्यतमोऽयमर्थसंग्रहो महामहोपाध्यायलौगाक्षिभास्करविरचितः। परमर्थसंग्रहोऽप्ययमन्तरेणाध्यापकव्याख्यानं नैव सुकरमवबोद्धमित्यस्यापि विरचिताष्टीका मीमांसाशास्त्रपारङ्गमैर्विपश्चिद्भिः। टीकास्त्विमा मूलग्रन्थतः सुतरामेव दुरवबोधा भवन्तीति नैतत् परोक्षं प्रेक्षावताम्, एषा पुना रामेश्वरभिक्षुविरचितार्थसंग्रहकौमुदी विविधापेक्षितविषयविन्यास-भासुरापि सारल्यातिशयेनातिमात्रं मनोरमा संवृत्तेति प्रमोदते नश्चेतः। सम्पादकेन च गोखलेमहोदयेनाधुनिकीमेव शैलीं समवलम्ब्य महतायासेन परिष्कृतं मूलं च टीका च, छेदादिसन्निवेशेन, समुद्धतानामंशानामाकरस्थल-प्रदर्शनेन विषयविभागादिनिर्देशेन पाठान्तराद्युपनिबन्धनेन चातिमात्रं हृदयङ्गमत्वं नीतोऽयं सटीकोऽर्थसंग्रहः। अन्ते च सन्निविष्टा विषमतम-शब्दानां सव्याख्यानाकारादिक्रमेण सूचिः सर्वथा संवर्धयत्येवोपयोगितां ग्रन्थस्य। अर्थसंग्रहस्य बहून्येव मुद्रणानि प्रत्यक्षीकृतान्यस्माभिः परं

तेषामेकमप्येतस्य समशीर्षिकां नारोहतीति सावधारणमुच्यते। ईदृशमतिमनोहरमपि पुस्तकमन्तरान्तरा परिदृश्यमानैर्मुद्रणप्रमादैर्नितरामुद्वेजयति हृदयानि सहृदयानाम्। तथाच चुलुकीकृतमीमांसारहस्यानां पण्डितप्रवराणां किञ्जवडेकरशास्त्रिमहोदयानां प्रस्तावनायामपि बहवोऽक्षरविच्युतय उपलभ्यन्ते। आशास्यते च पुनर्मुद्रणावसरेऽवश्यमत्रावदध्यात् सर्देशाइमहाभाग इति। अवश्यं संग्राह्यमिदं पुस्तकं दर्शनतत्त्वबुभुत्सुभिरिति शिवम्।

श्रीश्रीरामगीता। टाकीनिवासि-काव्यतीर्थ-स्मृतिविनोद-विद्याभूषणोपाधिक-श्रीइन्दीवरकृष्णदेवशर्मकृतया सान्वयसारसङ्कलनीसमाख्यया टीकयोपेता ततकृतानुवादसहिता ( वङ्गाक्षरैर्मुद्रिता ) च। मूल्यमाणकषट्कम्।

ब्रह्माण्डपुराणान्तर्गतस्याध्यात्मरामायणस्योत्तरकाण्डस्थेयं परमोपादेयोपदेशपरम्पराप्रतिपादिनी रामगीतावश्यमेवानुशीलनीया संसारतापसन्तप्तान्तरैर्मोक्षमार्गं प्रपित्सुभिर्मनुजैः। अत्र च मूलग्रन्थस्य द्वाषष्टिः श्लोका अतीव विषमा अपि श्रीमत इन्दीवरकृष्णविद्याभूषणमहोदयस्य व्याख्यानकौशलेनातिमात्रं सुखबोध्याः सञ्जाताः। येषां च संस्कृतभाषायां तादृशी व्युत्पत्तिर्नास्ति तेषां कृते सन्निविष्टे विस्तृते वङ्गभाषामयेऽनुवादे प्रसङ्गक्रमेण बहवो विषयाः समीचीनया सरण्या विचारिताः। आशास्यते च समग्रमप्यध्यात्मरामायणं विस्तृतटीकानुवादादिभूषितं प्रकाश्यानुग्राह्यपक्षे स्थापयिष्यन्ति स्वदेशवासिनो विद्याभूषणमहाभागा इति शिवम्।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| March, 1933. | १८५४ शकीये फाल्गुने १५श-वर्षस्य ११श-संख्या | Vol. XV. No 11. |
|---|---|---|

## तन्त्रस्य प्राचीनता

[ निबन्धकः—श्रीप्रभातचन्द्रचक्रवर्त्ती काव्यतीर्थः, एम, ए, पि, आर, एस्, पि, एच्, डि । ]

सुप्राचीनं तन्त्रशास्त्रम् । प्रचलतां तन्त्राणां प्राचीनता नातिगभीरापि तन्त्रोक्तानां कर्मकलापानामुपासनाविधेश्च वैदिकयुगादेव प्रवृत्तिरिति ज्ञायते । मनुसंहिताटीकाकर्त्त्रा कुल्लूकभट्टेन श्रुतिं द्विधा विभज्य तन्त्रस्यापि श्रुतिरित्याख्या चक्रे । अद्यत्वे शाम्भवीविद्यापरपर्य्याये शास्त्रविशेषे निरूढमपि तन्त्रं पुरा प्रायेण सर्वेषामेव शास्त्राणां प्रतिपादकमासीत् । शैवागमः शाक्तागमश्च प्राधान्येन तन्त्रनाम्नैवाभिधीयेते । काश्मीरीयः शैवागमोऽपि तन्त्रमित्येवाख्यायते । वेदाः सर्वधर्म्ममूलम्—'वेदोऽखिलो धर्म्ममूलम् ।' वेदेभ्य एव भारतीया आर्य्यास्तेषाम् अध्यात्मचिन्तामूलीभूतानि सूत्राण्युपलेभिरे । चर्चिते धर्मानुष्ठानस्येतिवृत्ते इदमेव ज्ञायते यद् बह्वोः कालाद् वेदोक्तैः सन्ध्यावन्दनादिभिः सहैव ववृधिरे भारते वर्षे पौराणिक्यस्तान्त्रिक्यश्च विविधानां देवानामर्चापद्धतयः । अविशेषेण

प्रतिष्ठितानामपि वैदिकधर्मवेग्रां मन्वादिस्मृतीनां पुराणानां तन्त्राणाञ्चासीत् किञ्चन प्रातिस्विकं वैशिष्ट्यम्। यथाहि पुराणे ब्रह्मविष्णुमहेश्वराः प्रधानदेवतात्वेनोपवर्णितास्तथा तन्त्रेऽपि शिवशक्ती प्राधान्येनोपास्यदेवते। पुराणविशेषे च शक्तिमाहात्म्यं शक्तिपूजाप्रकरणञ्च विशेषेणालोचिते। पुराणेषु देवीपुराणकालिकापुराणप्रभृतीनि सन्ति च भूयांसि शाक्तपुराणान्यपि। अद्यापि तान्त्रिकः पौराणिकश्चेत्युभयविधिनैवार्च्यते महामाया। तान्त्रिका मन्यन्ते—शिवशक्तिसंयोगादर्द्धनारीश्वरविग्रहाद् वा विश्वस्य जगतः सृष्टिर्जातेति, सांख्योक्ताभ्यां प्रकृतिपुरुषाभ्यां सहास्ति साम्यं तन्त्रोक्तस्य शिवशक्तितत्त्वस्य। परं साङ्ख्यीया प्रकृतिरचेतना जगत्कारणीभूता तान्त्रिकी महाशक्तिः पुनश्चेतनेत्यस्ति च भेदोऽपि। अनुष्ठानदिशा वेदपुराणतन्त्रोक्तासु क्रियासु संश्च भेदः परिलक्ष्यते; आचमने, घटस्थापने, अङ्गन्यासे जपादौ च भिन्न एव विधिर्वेदे पुराणे तन्त्रे च। सत्स्वपि प्रकारभेदेषु यावत्प्रास्थानिक्या उपासनायाश्चरमं लक्ष्यमेकमेवेत्यत्र नास्ति सन्देहलेशोऽपि। ये नाम देवाः पुराणेषूपलभ्यन्ते तेष्वनेकेषामेव बीजमन्त्रा ध्यानानि पूजापद्धतयश्च तन्त्रेष्वप्यवलोक्यन्ते। वैदिकयज्ञकर्माङ्गीभूतानि पशुहननादीन्याथर्वणिकानि च मारणोच्चाटनवशीकरणादीनि पुनस्तान्त्रिकधर्मानुष्ठानेष्वन्तर्भवन्ति परिलक्ष्यन्ते। वैदिकी गायत्रीव तन्त्रेऽपि बहुदेवतानां गायत्र्यः समुपलभ्यन्ते। एतद्व्यतिरिक्तानि च यमादीनि योगाङ्गानि योगसाधनप्रणाल्यश्च तन्त्रे विशेषेणोपदिदिशिरे। तदेतत् पश्यतः स्वत एव मनसि जागर्त्ति यदस्तु नाम नामतो भिन्नो वैदिकः पौराणिकस्तान्त्रिको वा धर्मः, मूलन्तु सर्वेषामेकमेव, भेदः परमाचारे प्रस्थाने च। तदनेन प्रबन्धकेनानुमीयते—यत् पुराणपरायत्ते भारते आसीत्तन्त्रस्याप्यलघीयः प्राधान्यम्, वेदपुराणयोरानुगत्येऽपि तस्य स्वकीयं किञ्चन स्वरूपम्। तन्त्रस्य स्वातन्त्र्यं तावन्न केवलं भूतशुद्धौ षट्कर्मसु पञ्चतत्त्वसाधनायां वा निबद्धं, परं प्रवृत्तिवर्त्मनापि यन्निवृत्तिकौशलं ब्रह्मानन्दापरपर्य्यायमुपलब्धुं क्षमेत तद्विघोषणमेव तन्त्रस्य

वैशिष्ट्यमिति जानीमः। अत एवाभ्युपगन्तव्यं यदार्य्याणां धर्म्यकर्मणि न खलु हीयते पुराणात् तन्त्रप्रभाव इति।

ऋग्वेदे शक्तेर्मूर्त्तिभेदाः कालीताराप्रभृतयः समुल्लिखिता दृश्यन्ते। ऋग्वेदे प्रधानाः स्त्रीदेवताः उषा इला सरस्वती शची मही अग्नायी इत्येताः। यद्यपि वैदिकयुगे ऋषयो जलाग्निप्रभृतीनां प्राकृतशक्तीनां तदधिष्ठातृदेवताविशेषाणां वोपासनायामासन् प्रवृत्तास्तथापि विशिष्य शक्तिरिति नाम्ना नास्ति कस्या अपि देवतायाः समुल्लेखः। ऋग्वेदस्य परिशेषे विष्णुपत्न्या लक्ष्म्या नामोल्लेखो दृश्यते। यदि च ऋग्वेदे शक्तितत्त्वं सुस्पष्टं न भासते तथापि महाशक्तेर्नामान्तरं मायापदमसकृदुल्लिखितं दृश्यते। उक्तञ्च—'इन्द्रो मायाभिः पुरुरूप ईयते' ( ऋग्वेद ) इति, अश्विनीयुगलञ्च मायामाशिश्राय। अथेदानीं प्रष्टव्यं मायेति कः पदार्थः, यच्छक्त्या बहुरूपं धर्त्तुं शक्नुयात्, यत्प्रभावेण च लौकिकमलौकिकञ्च सर्वं साधयितुं प्रभवेत् न तन्मायातिरिक्तं किमपि। शास्त्रे माया भगवच्छक्तित्वेनोपवर्णितास्ति। पुराणेषु तन्त्रेषु वा शक्तेरेव नाम माया वा महामाया वा। मार्कण्डेयपुराणे सृष्टिस्थितिलयकारणीभूताया महामायाया लोकोत्तरं रहस्यमुपवर्णितम्। साङ्ख्यीया प्रकृतिरपि मायात्वेनोपवर्णिता—'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' इति। वेदान्तेषु सदसद्भ्यामनिर्वचनीयस्वरूपाया अविद्यापरपर्यायाया मायाया विशेषेण समुल्लेखः प्राप्यते। मायावादं विवृण्वद्भिर्वैदान्तिकैः मायोपहितमिति मायोपाधीति मायाकल्पितमिति च बहुधैव मायाशब्दो व्यवाहारि। माया शक्तिश्चेत्यभिन्नौ पदार्थौ। न खलु निर्गुणं ब्रह्म मायामनाश्रित्य प्रभवति सृष्ट्यादिकर्मणि। श्रूयते—वेदान्तमार्गप्रवर्त्तकैः श्रीशङ्करभगवत्पादैरपि शक्तेरलौकिको महिमा स्वीकरणीय इति तत्कृतं दक्षिणामूर्त्तिस्तोत्रमेवात्र प्रकृष्टं प्रमाणम्। 'प्रपञ्चसारा'भिधस्तन्त्रग्रन्थोऽप्याचार्य्यपादकृत इति मन्यन्ते बहवः।

ऋग्वेदे शिवः शिवा चेति शब्दद्वयं दृश्यते; परं मन्यते—नेदं

परमस्य पुंसः परायाः शक्तेश्च वाचकत्वेन व्यवहृतमिति। ऋग्वेदीयं देवीसूक्तं (ऋग्वेद—१०।१२५) मार्कण्डेयपुराणीयदेवीमाहात्म्यमिव महाशक्तेः स्तुतिरूपमित्यत्र मन्ये सर्वेषामविसंवाद एव। या नाम वस्वादित्यादिदेवानां चराचरब्रह्माण्डस्य च प्राणशक्तित्वेन व्यराजत सा एव शाक्तानां शक्तिर्वैष्णवानां नारायणी शैवानां शिवा विश्वस्य जगतस्त्वाद्या शक्तिर्वा मूलं कारणं वेति सर्वत्र कीर्त्त्यते। ब्राह्मण उपनिषदि च अम्बा अम्बालिका अम्बिका उमा हैमवती अन्नपूर्णा काली कराली दुर्गेति च महाशक्तेः प्रचरन्ति नामानि दृश्यन्ते(१)। तैत्तिरीये शतपथे च ब्राह्मणे अम्बिका रुद्रस्वसेत्युक्तम्(२)। माया विद्या अविद्या प्रकृतिः शक्तिश्चेत्यनर्थान्तरम्, भेदः पुनरभिधाने। शक्तिं वियोज्य शक्तं शाक्तं वा पदार्थं याथार्थ्येनावबोद्धुं न वयं प्रभवामः। विश्वान्तर्विराजमानां शक्तिमिमां मानवा चिरायैव पूजितवन्तः। शक्तितत्त्वं वा शक्तिवादो वा न तावन्नूतनं वस्तु। शक्तिवादमालम्ब्य विश्वस्य तावतां पदार्थानां विश्लेषणे कृते सर्वाण्येव वस्तूनि शक्तेः कणरूपाणीति प्रतिपश्यामः। उपनिषदां परा विद्या (यया तदक्षरमधिगम्यते) तथा तन्त्रस्य परा वाक् परा शक्तिर्वा वस्तुतोऽभिन्ने। सर्वा विद्यास्तस्या एव महाविद्यायाः स्फुरणमात्रम्। मानवानां ज्ञानविज्ञाने च बुद्धिप्रज्ञे च स्मृतिमेधे च सर्वा कार्य्यकरी शक्तिश्च महाशक्तेरेवांशरूपाणि। शक्तितत्त्वमिदं देवीमाहात्म्ये विशेषतो विवृतमस्ति। सूक्ष्मदृष्ट्याऽवलोकयतां विश्वस्य जगतो बहिरन्तः सर्वत्रैव शक्तेर्विलासः परिस्फुरेत्। अत एव शास्त्रकृद्भिर्ब्रह्माण्डं शक्तिमात्रासमूहात्मकमिति निरदेशि(३)—'शक्तिमात्रासमूहस्य विश्वस्यानेकवर्त्मनः' इति।

ऋग्वेदसंहितायां देवविशेषत्वेन शिवनामनि स्पष्टमनुल्लिखितेऽपि रुद्रस्तावद् विशेषेणोल्लिखितः। रुद्रस्य रुद्ररूपता रौद्रकर्माणि च बहुत्र वर्णितानि। मन्ये अयमुग्ररूपो रुद्र एवोत्तरकाले तन्त्रादौ भैरवनाम्ना प्रसिद्धिमगमदिति। ब्राह्मणानां निरुक्तिदर्शनादेतदेव मनस्यापतति यद्

१। दक्षिणामूर्त्युपनिषत्, अन्नपूर्णोपनिषत्, देव्युपनिषत् त्रिपुरोपनिषच्च द्रष्टव्याः।
२। तैः ब्राः १।६।१०।४। ३। वाक्यपदीय ३।२ (साधनसमुद्देशः)।

रोदनाद् भीमगर्जनाद् वा रुद्रस्य रुद्रसंज्ञा (यद्रोदीत्तद् रुद्रस्य रुद्रत्वम्)। ऋग्वेदस्य किञ्चन सूक्तं रुद्राध्याय इति प्रसिद्धम्। वेदेषु प्रधानदेवतात्वेन रुद्रोऽपूज्यत इत्यत्र नास्ति संशयलेशः। रुद्रयागो रुद्रपूजा च वैदिकयुगादेव भारते वर्षे प्रवृत्ते। यथा हि पुराणोक्तेषु पञ्चसु देवेषु शिवः प्राथम्यमधिचकार तथा प्राचीनकाले रुद्रपूजा रुद्राध्याय-पाठश्च यज्ञादीनां प्रधानमङ्गमासीत्।

यजुर्वेदस्य वाजसनेय्यां संहितायां—शिवस्त्र्यम्बकः कृत्तिवासाः पिनाकहस्तश्चेति पुराणप्रसिद्धानि शिवस्य नामान्युपलभ्यन्ते (१)। व्याघ्रकृत्तिः पिनाकी वा पिनाकपाणिर्वेति नामनी पुराणेषु तन्त्रेषु च बहुत्रोपलभ्येते। शिवनाम्नो मङ्गलमयतामवबुध्यमानाः प्राचीना ऋषयः श्रद्धया तस्मै नेमुः त्वमस्मान् मा हिंसीः (मा मा हिंसीः) इत्युक्त्वा काले काले च सकरुणमस्तुवन्। 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्', इत्यादिसंहितांशमवलोक्य सुस्पष्टं प्रतीयते यत् तदानीं यथा कथञ्चनापि शिवपूजा नियतं प्रचलितासीत्।

शतपथब्राह्मणे (२) शिवस्य रुद्राद्यष्टौ नामानि (रुद्रः, सर्वः [शर्वः] , पशुपतिः, उग्रः, अशनिः, भवः, महान् देवः, ईशानश्च) दृश्यन्ते। अथर्ववेदे शिवशक्त्योर्विविधानि नामान्येव केवलं नोपलभ्यन्ते, तत्र विविधा-स्तान्त्रिका आचारा विशेषेण तन्त्रोक्तानां षट्कर्म्मणामपि बहूनि निदर्शना-न्युपलभ्यन्ते। आथर्वे भवशर्वमृडपशुपतिभूतपतिप्रभृतीनि सर्वाण्येव शिवनामानि सन्ति। (३)

तदेवं ज्ञायते यत् तन्त्रोक्ता शिवशक्त्युपासना नाधुनिकी परं स्मरणा-तीतकालादेवेयं धर्मभूमौ भारते वर्षे प्रचलिता वर्त्तते। कौलाचार्य्या-स्तन्त्रशास्त्रं वेदात्मकमिति प्रत्यपादयन् (४)। वैदिकस्य विधेरवि-रोधेनैवंभूतोपासना प्रावर्त्तत; कालक्रमेण च यज्ञानुष्ठानादिषु वैदिका-

१। यजुर्वेद (वाजसनेयी संहिता) ३।६०-६३। २। शतपथ ६।१।३।१८। ३। अथर्ववेदे,११।१।२२। ४। कुलार्णव २।८६।३।

चारेषु स्त्रीणां दशामनुप्रपन्नेषु पौराणिकधर्मानुष्ठानानीव तान्त्रिकानुष्ठानान्यपि काश्मीरात् कुमारिकापर्य्यन्तं समग्रे भारते स्वं प्रभावं वितनितुं कल्पान्यासन्। तान्त्रिकी दीक्षा तान्त्रिकविधानेन शक्तिपूजा चार्य्यधर्म्मस्य प्रधानवैशिष्ट्यविधया बहोः कालात् समाद्रियेते। अद्यापि बहूनां गेहे महामाया कुलदेवतेति पूज्यते। इष्टलाभार्थं वा शत्रुदमनार्थं वा भवोच्छेदाद्यर्थं वा चिरादेव नरा येन केनापि रूपेण महाशक्तिमर्चयन्तो वर्त्तन्ते। अर्च्चनया भगवतीं परितोष्य रामो दुर्ज्जयं रावणं जेतुमलमासीत् व्रजाङ्गनाश्च कात्यायनीव्रतमनुष्ठाय भगवन्तं गोविन्दं पतित्वेनाविन्दन्। ईदृशी शक्तिपूजा मातृरूपेण साधना चान्यासामपि जातीनां प्राचीनेष्वितिहासेषूपलभ्येते।

वैदिके साहित्ये न केवलं शिवशक्त्योर्भिन्नाकाराणि नामान्येवावलोक्यन्ते परं बहुत्र तन्त्रविहितानुष्ठानानां केषाञ्चन तान्त्रिकाचाराणां प्रतिच्छायाऽपि स्पष्टं दृश्यते। तन्त्रस्य वामाचारवीराचारप्रभृतिषु प्रसिद्धेष्वाचारेषु प्रचरत्स्वपि यत्तदा तान्त्रिकानुष्ठानस्योपकरणानि मद्यमांसादीनि यज्ञाङ्गत्वेन साधनाया वैधोपायत्वेन वा परिगृहीतानीत्यत्र नास्ति संशयः। वयमिह कौलाचारप्रधानाङ्गस्य सुरापानस्यैव विशेषेणालोचनमिच्छामः। वेदस्यैकाधिकस्थले सोमरसस्य मधुनो मद्यस्य वा पानप्रसङ्गमवलोक्य मन्यामहे यत्तदा मद्यमेकान्ततोऽपेयमदेयमग्राह्यं मासीत्। किं बहुना तदानीमपि मद्यपानं मन्वाद्यनुशिष्टानां पञ्चानां महापातकानामन्यतमत्वेन नागण्यत। ऋग्वेदस्यानेकत्र सोमरसपानवृत्तान्तो वर्त्तते। देवा ऋषयश्च (प्रधानतो यज्ञस्य ऋत्विजः) श्रद्धया यथाविधि सोमरसं पपुः। एतस्मादेवैतेषां 'सोमपा' इति नामान्तरमासीत्। सोमरसस्य च प्रसिद्धसोमलतानिर्य्याससम्भूतमद्यविशेषत्वे वा तेजस्करपानीयत्वे वा नास्ति सन्देग्धव्यं किञ्चित्; मधु अमृतमिति शब्दद्वयी सोमरसस्य नामान्तरमिति कृत्वा तत्र तत्र व्यवहृता। रागात्मकत्वेन पुनरयं क्वचित् 'राजा' इत्युच्यते ("सोमं राजानम्")।

सोमरसस्यौग्र्यं वर्णयन्त ऋषयः सुरापानवार्त्तामपि स्पष्टमुदलिखन्। तदुक्तम् ऋग्वेदे—यथा हि दुर्मदः सुरां निपाय महता विक्रमेण युध्येतैवमेव हृदयस्थः सोमरसोऽपि जनान् वीर्य्यवत्तरान् करोतीति।(१) वैदिके सौत्रामणीयागे सुरापानं विधीयते। अनेन यज्ञप्रसङ्गेन सुरापानस्य दोषोद्घाटनं कुर्वाणेन कात्यायनर्षिणा स्फुटं किमप्युपहसितम्—घटशः पीयमानापि या न पिबतः स्वर्गमुपदिशेत् सा सुरा लवशः पीता यज्ञादौ ऋत्विजः कथमपि न स्वर्गं गमयेत्। (२) अथर्ववेदे विविधविधया सुरापानस्य विशेषेणातिथये सुरादानस्य समुल्लेखो वर्त्तते।(३) तैत्तिरीयब्राह्मणे सोमरसः सुरा च क्रमेण देवानां मनुष्याणाञ्च श्रेष्ठं पानीयं वस्त्विति कृत्वा निर्द्देशोऽस्ति। यथा मानवानां सुरा प्रधानं पानीयम् एवं देवानां सोमरसः परममदनीयं वस्तु। (४) सुराया नामान्तरं रसः। सम्भाव्यते—मधुनः पुष्पस्य गुडस्य पर्य्युसितान्नस्य गलितफलादेश्च रसात् समुत्पन्नमिति सुरा साधारण्येन रसनाम्नाऽभ्यधायि। शतपथब्राह्मणे सुरा अन्नजलौषधीनां रसत्वेनाभिहिता। (५)

सुराया मध्वित्यन्यन्नाम। ऋषयो मेनिरे—समुद्रवनस्पतिगोप्रभृतयः सर्वे पदार्था एव मधु क्षरन्तीति। किमन्यत् पार्थिवो धूलिकणोऽपि मधुमयः ("मधुमत् पार्थिवं रजः")। इदञ्च मधु अमृततुल्यं जीवनशक्तिप्रदञ्च। जगदम्बाऽसुराणां युद्धे परिश्रान्ता मधु पीत्वा शक्तिमाजर्ज्जयदिति सप्तशत्यामपि प्रतिपादितम् (६)। तदेतज्ज्ञायते—यतो रसो मधु वा निःसरति, यस्य चोपयोगेन शरीरे शक्तिः संक्रामति तदेव केनचनार्थेन सुराशब्दवाच्यम्। अत एव तान्त्रिका रसस्राविणं यावन्तं पदार्थं मद्यमिति, पदार्थानां कठिनांशं मांसमिति च निर्दिदिशुः। तेषां युक्तिबलेन येऽन्नपानादीनपि गृह्णन्ति तेऽपि सुरापायिणः।

---

१। ऋग्वेद—१०।८६।१। २। यदुदुम्बरवर्णानां घटीनां मण्डलं महत्। पीतं न गमयेत् स्वर्गं किं तत् क्रतुगतं नयेत्॥ भाजा श्लोकः। ३। अथर्व १०।२।५; ४। तै, ब्रा, १।३।३।२, ५। शतपथ १२।७।१।७, तथा १२।८।१।४। ६। गर्ज गर्ज क्षणं मूढ मधु यावत् पिबाम्यहम् (चण्डी)।

दैवैर्वैदिकस्मार्त्तैर्वचनैः सुरापानं निषिद्धत्वेन व्यवस्थापितम्, तान्त्रिकेषु तत्तात्पर्य्यमन्यदेव। ते ब्रुवन्ति—अविधिपूर्वकं सुरापानमेव शास्त्रप्रतिषिद्धं लोकगर्हितञ्च। परं देवताविशेषोद्देशेन निवेद्य क्रियाङ्गतया वैधभावेन यदि सुरां पिबेयुस्तर्हि न तन्निन्दितं न वा निषिद्धम् प्रत्युत श्रेयस्करमेव। तान्त्रिकाः सुरापानस्याध्यात्मिकीं व्याख्यामप्यामनन्ति—

ब्रह्मरन्ध्रात् क्षरेद्‌ या तु सोमधारा वरानने।
पीत्वानन्दमयीं तां यः स भवेन्मद्यसाधकः॥ इति।

अस्य तात्पर्य्यञ्चैतत्—ब्रह्मरन्ध्राद् या चिदानन्दमयी सोमधाराऽमृतबिन्दुर्वा विनिर्गच्छति—योगशक्त्या यस्तां पिबेत स एव वस्तुतो मद्यसाधकः। इदमवलोकयतां किं न मनस्युदियात्—यत् साधकपेया सुरा न शौण्डिकालयविक्रेयम् मद्यं परमानन्दमयस्यात्मनोऽमृतवर्षणम् इति। अस्यामृतकणस्य स्वादमनुभवतैव गीतं साधकोत्तमेन रामप्रसादेन—'सुरापान करिने आमि सुधा खाइ जय काली बले' ( नेदं मम सुरापानं जय कालीति वदतः सुधापानमिदं पुनः )।

विधानतः सुरापानं कदापि निन्दितं धर्मविगर्हितञ्च नासीत्। देवासुराणां मध्येऽनेकेषामेव सुरापानवार्त्ता श्रूयते। आचारचिन्तामणितन्त्रे लिखितम्—कौलचूडामणिना रावणेनानुष्ठिते भैरवीचक्रे निमन्त्रितौ रामलक्ष्मणौ यथाविधि पात्रादिकमगृह्णताम्। रावणस्य शक्तिर्यथाऽसीमा मद्यपानशक्तिरपि तथाऽद्भुता। एतदप्युक्तं तन्त्रे—अतिरिच्यमानेन पानदोषेण हतबुद्धिर्लङ्केश्वरो विननाश ( अतिपानफलाद्‌ यस्माद्‌ रावणो निधनं गतः )। रेवतीरमणस्य बलरामस्य सुरापानोन्मादवार्त्ता बहुष्वेव पुराणेषूपलभ्यते।

मद्यपानवर्जं पशुबलिमांसाशनस्त्रीसम्भोगाद्याचाराश्च (तान्त्रिकाचाराः) प्राचीने काले धर्म्यकार्यस्य वैधाङ्गरूपेणानुष्ठिता अभूवन्नित्यत्र प्रभूतं प्रमाणम् उपलभ्यते। तान्त्रिको यथा—'वामे रामा रमणकुशला दक्षिणे पानपात्रम्' आदाय कौलाचारमनुतिष्ठति वैदिकयुगे यज-

मानोऽपि तथा सपत्नीक एव वेदविहितं यज्ञादिकं पानाहारांश्च समपादयत्। एवंभूतयज्ञसंयोगादेव स्त्रियाः पत्नीति नाम बभूव (१)। यज्ञादौ स्त्रिया अपि प्रभूतं प्राधान्यं प्रभूता च प्रतिष्ठाऽऽसीत्। पत्नीं विरह्य्य कृतो यज्ञः किलाफलोऽभवत् (२)। भैरवीचक्रलतासाधनादीनां वृत्तान्तेऽनालोचितेऽपि बहुष्वेव तान्त्रिकाचारेषु स्त्रीसाहचर्य्यं विशेषेण परिलक्ष्यते। एतद्वर्जं योनिपुष्पस्य योनिमुद्राया योनिपीठपूजायाश्च वार्त्ता तन्त्रशास्त्र आलोचिता। शतपथब्राह्मणे योनिरुत्तरवेदित्वेन(३) यज्ञपात्रत्वेन चाभिहिता। अन्यत्र निषिद्धोऽपि परस्त्रीसम्भोगः सामवेदीयवामदेव्योपासनाया अङ्गत्वेनोपवर्णित उपनिषदि (छा० उ० १३।२)।

वैदिकयागे पशुवधस्य कर्त्तव्यताऽश्वमेधादियागानां संज्ञात एव स्पष्टं ज्ञायते। देवताविशेषस्य तोषाय तदानीमपि पशुर्व्यशस्यत। वरुणस्य तृप्तये नरबलीकरणस्य (शुनःशेफस्य) आख्यानम् ऋग्वेदे वर्त्तते। तदन्यस्य पाकबलिशाकबलिप्रभृतेर्बलेर्वार्त्ताऽथर्ववेदे समुल्लिखितास्ति(४)। अभ्यागतानामृषीणां भोजनार्थं मधुपर्केण सह मृगादिपशुमांसस्यापि दानविधिरासीत्। दैवे पैत्रे च कर्मणि मांसभोजनस्य व्यवस्थाऽऽसीत्। मांसेन पितृपुरुषाणां श्राद्धक्रियाऽपि तदानीमप्रथत।

अन्यच्च, अथर्ववेदे तन्त्रोक्ताभिचारिकी क्रिया बाहुल्येन दृश्यते। पानपात्रस्य, चक्रस्य, वामदेव्योपासनाया रक्तवसनाया योषितः सुभगादेव्या मधुमतीदेव्याश्च विवृतिरथर्वणे परिदृश्यते। तन्त्र उत्तममध्यमादिभेदेन पानपात्रं विचारितम्, वामदेव्यसाधनाऽप्युक्ता। 'लोहितवाससो योषितो' लोहितवसनां तान्त्रिकसाधनावतीं भैरवीं स्मृतिपथमारोपयन्ति। संहितातो ब्राह्मणाच्च यानि तावत् प्रमाणान्युल्लिखितानि तत एव स्पष्टं ज्ञायते यत् तान्त्रिकाचारनाम्नाऽप्रथितापि शिवशक्तिसाधनपद्धतिर्बहोः कालाद् भारते वर्षे प्रचरतीति। यैरुपकरणैर्यन्त्रमन्त्रादिभिश्च कौलाः

---

१। पत्युर्नो यज्ञसंयोगे (पा. ४।१।३३) २। तै० ब्रा० २।२।२।६, ३। शत० ब्रा० ७।३।१ २८, ४। अथर्व कुन्तापसूक्त १३१।११-१२।

शक्तिसाधनामादधति तेष्वनेकान्येव वैदिकयुगादागतानि। ईश्वरमुखोच्चारितत्वेन यदि वेदस्य प्रामाण्यमविसंवादि (तद्वचनादाम्नायस्य प्रामाण्यम्) तदा स्वयं शिवमुखाद्विनिर्गतं तन्त्रशास्त्रमप्यभ्रान्तत्वेन परिगणनीयम्। ऋग्वेदीयदेवीसूक्तस्य सप्तशत्याश्च विना भाषावैषम्यं नास्त्यर्थगतः कोऽपि भेदः। यस्य योगमार्गस्य हिरण्यगर्भः प्रवर्त्तयिता यश्च पातञ्जलादिषु योगदर्शनेषु विस्तरेणोपनिबद्धः तन्त्रेऽपि तस्यैव साधनप्रणाली समुपदिष्टा; तान्त्रिकाश्च तान्येव योगाङ्गानि साधनभेदेनानुतिष्ठन्ति। एभिः कारणैस्तन्त्रोक्तो धर्म्मो योगसाधनप्रणाली च वेदविरुद्धाविति वा शास्त्रविरुद्धाविति वा न मन्तव्यम्।

उपनिषदां ब्रह्मविद्या यथा रहस्याख्यया प्रथते एवं तन्त्रोक्तयोगप्रक्रियापि महारहस्यसंज्ञयाभिहिता। उपनिषदां जीवब्रह्मणोस्तादात्म्याभिन्नेनाद्वैतसिद्धान्तेन मुक्तितत्त्वेन च सह तान्त्रिकसाधनायाश्चरमलक्ष्यस्य नास्त्यणीयोऽपि वैलक्षण्यम्। अत्र च तन्त्रस्यैकद्वानि वचनान्युद्ध्रियन्ते—

'जीवः शिवः शिवो जीवः स जीवः केवलः शिवः।" कुलार्णवतन्त्रम्

'न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि।
ज्ञानादेव हि मुक्तिः स्यान्नान्यथा वीरवन्दिते॥' कुलार्णव १।१०५

'देहान्ते शाश्वती मुक्तिरिति शङ्करभाषितम्॥' कुलार्णव १४।७

'ऐक्यं जीवात्मनोराहुर्योगं योगविचक्षणाः।' कुलार्णव ६।३०

तन्त्रे प्रवृत्तिर्निवृत्तिश्चेत्युभयविधमार्गस्य विधानमेव प्रदर्शितम्। येषां स्त्रीमद्यमांसादिपदार्थानामुपभोगेन प्राकृतानामास्तां धर्मलाभः पतनमेव भवति नियतम्, तान्त्रिकास्तमेव प्रवृत्तिमार्गं द्वारीकृत्य चरमां सिद्धिं लिप्सन्ते—

'यैरेव पतनं द्रव्यैः सिद्धिस्तैरेव चोदिता।' कुलार्णव
तथा—'येनैव नरकं याति तेनैव मोक्षमाप्नुयात्॥'

परमिदमत्र स्मरणीयम्—स्थूलदृष्ट्या प्रवृत्तिमार्गोपासका अपि कौलाचार्य्याः केवलं भोगार्थम् इन्द्रियवृत्तेः कृतार्थतार्थं वा कदापि मद्यपानं

पशुहिंसां स्त्रीसम्भोगादिकं वा वैधतया धर्माङ्गतया च न निरदिशन् (आत्मार्थं प्राणिनां हिंसा कदाचिन्नोदिता प्रिये)। एकतो लघीयसे स्वार्थायाभिचारिकीं क्रियामनुष्ठाय अपरतश्च भोगायावैधं मद्यपानादिकमाश्रयीकृत्य साम्प्रतिकाः कौलमार्गावलम्बिनः पवित्रं तन्त्रोक्तधर्मं लोकेष्वधन्यं निन्दनीयञ्च प्रत्यपादयन्। महदिदं परितापपदं नाम। यस्याः साधनाया उन्नतायादर्शाय बौद्धधर्मयाजका अपि शिरो नमयाम्बभूवुः, यस्या निदर्शनं तिव्वत-चीन-प्रभृतिषु जनपदेष्वद्यापि परिलक्ष्यते, या वैष्णवेषु शैवेषु चानालक्षितमनुप्रविष्टा ( अन्तःशाक्ता बहिः शैवाः सभायां वैष्णवा मताः। नानारूपधराः कौला विचरन्ति महीतले॥ ) यया साधनया प्रदर्शितेन पवित्रेण मातृभावेनोपास्य रामप्रसादकमलाकान्तरामकृष्णप्रभृतयो महान्तः पुरुषा अक्षयपदलाभेन धन्याः समभवन् तस्याश्चिरप्रवृत्तायास्तान्त्रिकसाधनायाः कथामात्रेणापि जना जुगुप्सया नासाकुञ्चनं विदधति। किमतः परं परितापपदं स्यात्। आपाततः प्रवृत्तिमूलतया प्रतीयमानाया अपि तान्त्रिकसाधनायाश्चरमं लक्ष्यं निवृत्तिमार्गस्य त्यागो वैराग्यञ्च। विना निवृत्तिं शान्तिर्नास्ति ( त्यागाच्छान्तिर्निरन्तरम् )। अत एव शास्त्रकाराः प्राहुः—

'न मांसभक्षणे दोषो न मद्ये न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥

केवलभोगेन परमार्थरूपा निवृत्तिर्नैव लभ्यते प्रत्युतोत्तरोत्तरं कामना वर्द्धते एव—

'न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥'

भारतीया उपासका त्यागस्येमं महोपदेशं जगत्युच्चैः प्राचारयन्। यदि केऽपि तान्त्रिकाचारं दृष्ट्वा मन्यन्ते इत्थं प्रवृत्तिमार्गमुपास्य न केऽपि परमार्थं लभेरन् तदा वयमुत्तरयामः प्रवृत्तिद्वारा निवृत्तेरनुमार्गणमेव तान्त्रिकाचार्य्याणां मुख्यमुद्देश्यम्। यत्र बहूनामाचाराणां बहूनाञ्च

साधनानुष्ठानानां प्रवृत्तिरुद्दिष्टा—तत्रैव तन्त्रशास्त्रे 'अक्रियैव परा पूजा' इत्युक्त्वा सर्वविधानत्याग एव परमो धर्म इति जोघुष्यते। कलौ आगमोक्तेन विधिना साधनानुष्ठानमेव मुमुक्षुभिः कर्त्तव्यमिति स्वयं महादेवेनोक्तम् ( महानिर्वाण २।७ )। सन्न्यासग्रहणं विरजाहोमो ब्रह्म-दीक्षा च तन्त्र उक्तानि। तत्त्वमसीत्यादीन्युपनिषदां महावाक्यानीव तन्त्रेऽपि परतत्त्वविषयाणि बहून्येव वचनान्युपदृश्यन्ते। तन्त्रोक्तानि कुण्डलिनीशक्तिध्यानं लययोगः षट्चक्रभेदः सहस्रारस्थदिव्यब्रह्मपुरञ्च साधनासाम्राज्येऽपूर्वाणि वस्तूनि। एतदनुरूपा साधनाप्रणाली नान्यत्रोप-लभ्यते।

---

# कालस्येङ्गितम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—स्वर्गततारकनाथस्मृतिरञ्जनः ]

भो दुर्योधनस्यान्तश्चरसहचर दातृशिरोमणे कर्ण, त्वय्यप्यशेषाणि सत्कर्माणि नियतमेवावर्तन्त। त्वं तावदमरस्य पुत्रः, शूरः, कृतास्त्रः, तथापि जनन्या अपराधेन—अबलायाः स्त्रिया अपराधेन सहिष्णुतया प्रथितस्य महाशयस्य ते महति मानसे, धार्मिकस्य वीरस्य ते धर्मानुगते मानसे एवं क्रोधायाश्रयं दत्त्वा न खलु त्वया शोभनमनुष्ठितम्। ब्रूहि कर्ण, ब्रूहि तावत्, अपि नाम सहिष्णुप्रवरस्य ते मातुरपराधसहनक्षमं धैर्यं नासीत्। अथवा कोऽत्र तवापराधः, कालस्य छायापातः सञ्जातः, जगत् कालस्याधिकाराभिमुखं प्रसरति स्म, अत एव तवापि पदस्खलनं समजनि, त्वं तावन्मातृद्वेषी संवृत्तः। भवतु तद् यथा तथा वा, किमिति भ्रातृणा-मप्युपरि विद्वेषस्ते जातः? न खलु विजानद्भिरेव तैर्वञ्चितस्त्वम्। भवन्तु सुविदितमेवासीत्त्वया। तत् किमिति त्वं भ्रातृद्रोही सञ्जातः?

साधनानुष्ठानानां प्रवृत्तिरुद्दिष्टा—तत्रैव तन्त्रशास्त्रे 'अक्रियैव परा पूजा' इत्युक्त्वा सर्वविधानत्याग एव परमो धर्म इति जोघुष्यते। कलौ आगमोक्तेन विधिना साधनानुष्ठानमेव मुमुक्षुभिः कर्त्तव्यमिति स्वयं महादेवेनोक्तम् ( महानिर्वाण २।७ )। सन्न्यासग्रहणं विरजाहोमो ब्रह्म-दीक्षा च तन्त्र उक्तानि। तत्त्वमसीत्यादीन्युपनिषदां महावाक्यानीव तन्त्रेऽपि परतत्त्वविषयाणि बहून्येव वचनान्युपदृश्यन्ते। तन्त्रोक्तानि कुण्डलिनीशक्तिर्ध्यानं लययोगः षट्चक्रभेदः सहस्रारस्थदिव्यब्रह्मपुरञ्च साधनासाम्राज्येऽपूर्वाणि वस्तूनि। एतदनुरूपा साधनाप्रणाली नान्यत्रोप-लभ्यते।

---

# कालस्येङ्गितम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—स्वर्गततारकनाथस्मृतिरञ्जनः ]

भो दुर्योधनस्यान्तश्चरसहचर दातृशिरोमणे कर्ण, त्वय्यप्यशेषाणि सत्कर्माणि नियतमेवावर्तन्त। त्वं तावदमरस्य पुत्रः, शूरः, कृतास्त्रः, तथापि जनन्या अपराधेन—अबलायाः स्त्रिया अपराधेन सहिष्णुतया प्रथितस्य महाशयस्य ते महति मानसे, धार्मिकस्य वीरस्य ते धर्मानुगते मानसे एवं क्रोधायाश्रयं दत्त्वा न खलु त्वया शोभनमनुष्ठितम्। ब्रूहि कर्ण, ब्रूहि तावत्, अपि नाम सहिष्णुप्रवरस्य ते मातुरपराधसहनक्षमं धैर्यं नासीत्। अथवा कोऽत्र तवापराधः, कालस्य छायापातः सञ्जातः, जगत् कालस्याधिकाराभिमुखं प्रसरति स्म, अत एव तवापि पदस्खलनं समजनि, त्वं तावन्मातृद्वेषी संवृत्तः। भवतु तद् यथा तथा वा, किमिति भ्रातॄणा-मप्युपरि विद्वेषस्ते जातः? न खलु विजानद्भिरेव तैर्वञ्चितस्त्वम्। एवन्तु सुविदितमेवासीत्त्वया। तत् किमिति त्वं भ्रातृद्रोही सञ्जातः?

तव बुद्धिभ्रंश एव संवृत्तः। कालस्य साहाय्यार्थमेवावतीर्ण आसीस्त्वम्। जन्मनो व्यभिचारादेव तपःसम्पन्नस्यापि सर्वत्रैव प्रतिहतास्ते प्रयत्नाः। पुनः पुनर्लक्ष्यभ्रष्टोऽसि जातः, न च स्वल्पेष्वपि कार्येषु दृष्टं त्वया साफल्यम्। मातृद्वेषिणः परिणाम ईदृश एव भवति। अतः खलु ब्रवीमि सूर्यपुत्रोऽपि त्वं साक्षात् कलिकालांश एव। अहो दौर्भाग्यमस्माकम्! अस्माभिरद्यापि त्वदीयकर्मसूत्रांशोऽच्छिन्न एव रक्ष्यते। अपि नामालक्षितेन त्वया कायव्यूहावलम्बनेन अस्मदीयजीवभावेन साकमैकात्म्यं स्वीकृतम्। प्रभूतं ते तप आसीत्, परं भ्रातृद्वेषेणानुतप्तस्य जीवितस्य कीदृशः परिणामः सञ्जातः! धरातलेन ग्रस्तं ते रथचक्रम्, चिराय खलु विलुप्तं त्वदभिशप्तहृदयाद् गुरुदत्तं दिव्यास्त्रजालम्, कालस्य कठोरेणेङ्गितेन त्वदीयं वीरहृदयमपि व्यथितम्। हृतसर्वस्वो दुःस्थः पथिक इव विभीषणसमरमहाश्मशानेन विनष्टाशस्त्वं पञ्चत्वं गतः। विस्मयविमूढेन जगता दृष्टं मातृद्वेष्टाशेषं पुण्यसम्भारं सञ्चित्याप्यन्ततो विफलकाम एव संवृत्तः। पित्रादिगुरुजनावमानी तद्नाश्रवश्च विद्युद्विलायमेव विलीयते महाशून्ये, यद्वा तृणवद्देवोर्ध्वशोषं विशुष्यति महाप्रान्तरे। भोः कर्ण, प्रज्ञावतापि विदितवेदितव्येनाप्यन्तिमकाले स्वापराधस्मरणपराङ्मुखेण त्वया विनिन्दितो धर्मः। एतत् सर्वथानुपयुक्तमेवासीत्तव। दुःखेनैव ब्रवीमि तव क्रोधस्त्वां तपस्यायाः फलाद् वियोजितवान्।

भोः शकुने! अपि नाम त्वमेव त्रेतायाः कालनेमिः? कलेः कपटतालक्षणेनांशेन गान्धारेषु परिगृह्य जन्म सहोदरापतेरन्नेन तदीय एवान्तःपुरे मन्ये तदीय एव चान्तर्हृदये संवर्धित आसीः, भागिनेयस्य दुर्योधनस्य हितानुध्यानमेव त्वदीयं नियतं व्रतमासीत्। गान्धारराज्यं भारतवर्षस्य प्रान्तसीम्न्येवावस्थितम्। तस्यामेव सीम्नि कपटपाशकस्य समुत्पत्तिः। अहो कुक्षण एव श्मशानभूमाविव गृध्रसमागमः प्रान्तभूमितः शकुनिः पाशकहस्तो हस्तिनापुरस्यान्तःपुरेऽभ्यगच्छत् प्रवेशावकाशम्। कलेः कर्मक्षेत्रे कपटताप्यपेक्षितमुपकरणम्। साम्राज्यस्य

राजसभायां राज्ञोऽनुमताः पुत्राः, पित्रादिष्टा एव पुत्राः, पित्रादिगुरुजनानां पुरत एव द्यूतक्रीडायां प्रसक्ताः, अनुगतभ्रातृतनयस्य पुत्रहितार्थिनो राज्ञो ज्येष्ठतातस्यादेशेन अभिप्रेतायां द्यूतक्रीडायां प्रसक्ताः। इच्छामय, त्वदीय-संसारलीलाभूमौ विचित्राभिनयसन्दर्शनमन्तरेण तदवबोधशक्तिं मादृशः क्षुद्रो जीवः कुतो वाधिगच्छेत् ?

महाराजस्य शान्तनोर्द्वितीयदारपरिग्रहादारभ्य सुहृद्द्यूते पाशकक्रीडनं यावत् कालप्रभावः शनैः परिवर्धमानः कुरुक्षेत्रमभिनीतवान्। कुरु-क्षेत्राभिनयस्य सुसम्पत्तयेऽन्यत्र कृतानि कालायोजनानि शनैः कुरुक्षेत्राभि-मुखान्यभवन्। राज्ञो गृहे आयोजनानां फलानि प्रजयावश्यमनुभवि-तव्यानि—राजा कालस्य कारणम्।

कालत्रयेऽप्यमितप्रभावो भगवान् व्यासः स्वावतारप्रयोजननिष्पाद-नाय यथाविधि सामग्रीं समाहृत्य भूभारहरणानन्तरं भगवद्वदनारविन्द-विगलितं कृष्णार्ज्जुनसंवादरूपं गीताशास्त्रं प्रचारयामास।

इत्थं च कलिकालशक्तौ प्राबल्यं दृढमूलत्वञ्चाधिगतायां तत्काल-समुत्पन्ना महापुरुषा अपि नैव प्रबभूवुः कालशक्तिं प्रतिहत्य सत्यं प्रति-ष्ठापयितुम्। श्रीभगवान् नरनारायणरूपेणावतीर्य युगप्रलयमध्यत एव युगधर्मस्यानुकूल्यं स्वीकृत्य गीताया महावाक्यानि प्राचीचरत्। योग्य-कर्षकेण योग्यक्षेत्रेषूप्तं बीजं स्वत एव यथाकालमङ्कुरितं क्रमेण पत्र-पुष्पफलभारावनतमहामहीरुहे परिणमति। गीताया अप्युदात्तं वचनं भारतस्य कर्मक्षेत्रे यथाकालम् आर्त्तानामवसन्नानां च जीवानां हृदया-काशे परिस्फुरत् कल्याणमेवावहेत्, निर्वाणोन्मुखो दीपः पुनः स्नेहेन सिक्तः पुनरपि प्रज्वलितोऽन्धकारं तिरयेत्। इत्थञ्च गीतायाः प्रयो-जनोपलब्धिर्गीतायाः पठनपाठनादिकञ्च लुप्तप्रायस्यार्यवर्णाश्रमसमाजस्य विलोपं प्रतिबध्नीयात्। धर्म्यसमाजस्य चेदृशीं पौनःपुनिकीं प्रतिष्ठा-मवसादमुखे जीवा अनुभविष्यन्ति। अवतीर्णस्य—युगधर्मस्थापनाय

नराकारेणावतीर्णस्य भगवतः कार्य्यं कदाप्यसाफल्येन नोपहन्येत यथा-कालं नियतमेव साफल्यमधिगमिष्यति।

अवतारस्य प्राथमिके कर्मक्षेत्रे कुरुक्षेत्रे समरसम्भाराः सम्भृताः। समागताश्च वीराः स्वाभीष्टं पक्षं परिगृह्य सज्जेषु रथेष्वस्त्राद्युपकरणैः साकं दर्शनीयदिव्यमूर्त्या प्रकाशमविन्दन्त।

युगे युगे नैमिषारण्यस्य पुण्यभूमौ गोष्ठ्यां समवेता महर्षयो जगतो हितार्थं शास्त्रार्थान् प्रचारयन्ति। भगवान् नरनारायणो मरणराज्ये द्वापरयुगावसानस्य परिचायकभूमौ पवित्रश्मशानस्थल्याः शस्त्रानल-दग्धदीप्तवीरनिकरशरीरकान्तिपूरसमुद्भासितां दिङ्मण्डलीं प्रति भवि-ष्यद्दृष्टिं विनिक्षिप्य निर्वाङ् निश्चलश्च स्थितः। क्षणं च गजानां बृंहितानि तुरगाणां हेषणानि वीराणां बाह्वास्फोटनानि रथचक्राणां संक्रीडितानि रणतूर्याणां तुमुलारावः दिव्यानां च शङ्खानां गगनमेदिनी-विदारी विषमो निनादः सर्वमेवैकपदे स्तब्धतामीयुः, मन्ये बलीयसोऽनेहसः सर्वङ्कषो वज्रनादः सर्वान् परिभूयात्मानं प्रत्यतिष्ठिपत्। तस्मिन्नेव च मुहूर्त्ते—अवश्यम्भाविनो व्यतिकरस्य सम्भारसमावेशावसरे वीरश्रोतृ-वृन्दानां पुरतः कुलपतेरिव कालनियन्तुः कृष्णस्य वदनकमलाद्विनिः-सृता मकरन्दबिन्दवो दक्षिणानिलवीजिता योग्याधारे रक्षिताः। त एव श्रीमद्भगवद्गीता—कलेः शास्त्रार्थप्रचारः।

कालस्य प्रभावः—कालस्य गतिरव्याहतैव। श्रीमतोऽर्जुनस्यापि चित्ताकाशे कालस्य छायापातः समजनि। प्राक्तनसुकृतिप्रभावेण जगद्-गुरोः सर्वज्ञस्य भगवतः सान्निध्यात् तस्य प्रागदर्शनमभूत्। दृष्टश्च तेन—समरोऽयं वर्णाश्रमधर्मविलोपानुबन्धीति। एतेन च समाक्रान्त-मस्य मानसं विषादेन। उक्तश्च तेन—गोविन्द नाहं योत्स्ये। लब्धा-वसरा धार्त्तराष्ट्रा मां रणे निहन्युश्चेन्निघ्नन्तु नाम इति।

संशयाकुलमानस इदानीमर्जुनः। यदा तावद् युद्धस्यास्य परि-णामेन जगति विस्तारमासादयेत् कालस्य प्रभावः तदा न खलु युद्धमिदं

राजसभायां राज्ञोऽनुमताः पुत्राः, पित्रादिष्टा एव पुत्राः, पित्रादिगुरुजनानां पुरत एव द्यूतक्रीडायां प्रसक्ताः, अनुगतभ्रातृतनयस्य पुत्रहितार्थिनो राज्ञो ज्येष्ठतातस्यादेशेन अभिप्रेतायां द्यूतक्रीडायां प्रसक्ताः। इच्छामय, त्वदीय-संसारलीलाभूमौ विचित्राभिनयसन्दर्शनमन्तरेण तदवबोधशक्तिं मादृशः क्षुद्रो जीवः कुतो वाधिगच्छेत् ?

महाराजस्य शान्तनोर्द्वितीयदारपरिग्रहादारभ्य सुहृद्द्यूते पाशकक्रीडनं यावत् कालप्रभावः शनैः परिवर्धमानः कुरुक्षेत्रमभिनीतवान्। कुरु-क्षेत्राभिनयस्य सुसम्पत्तयेऽन्यत्र कृतानि कालायोजनानि शनैः कुरुक्षेत्राभि-मुखान्यभवन्। राज्ञो गृहे आयोजनानां फलानि प्रजयावश्यमनुभवि-तव्यानि—राजा कालस्य कारणम्।

कालत्रयेऽप्यमितप्रभावो भगवान् व्यासः स्वावतारप्रयोजननिष्पाद-नाय यथाविधि सामग्रीं समाहृत्य भूभारहरणानन्तरं भगवद्वदनारविन्द-विगलितं कृष्णार्ज्जुनसंवादरूपं गीताशास्त्रं प्रचारयामास।

इत्थं च कलिकालशक्तौ प्राबल्यं दृढमूलत्वञ्चाधिगतायां तत्काल-समुत्पन्ना महापुरुषा अपि नैव प्रबभूवुः कालशक्तिं प्रतिहत्य सत्यं प्रति-ष्ठापयितुम्। श्रीभगवान् नरनारायणरूपेणावतीर्य युगप्रलयमध्यत एव युगधर्मस्यानुकूल्यं स्वीकृत्य गीताया महावाक्यानि प्राचीचरत्। योग्य-कर्षकेण योग्यक्षेत्रेषूप्तं बीजं स्वत एव यथाकालमङ्कुरितं क्रमेण पत्र-पुष्पफलभारावनतमहामहीरुहे परिणमति। गीताया अप्युदात्तं वचनं भारतस्य कर्मक्षेत्रे यथाकालम् आर्त्तानामवसन्नानां च जीवानां हृदया-काशे परिस्फुरत् कल्याणमेवावहेत्, निर्वाणोन्मुखो दीपः पुनः स्नेहेन सिक्तः पुनरपि प्रज्वलितोऽन्धकारं तिरयेत्। इत्थञ्च गीतायाः प्रयो-जनोपलब्धिर्गीतायाः पठनपाठनादिकञ्च लुप्तप्रायस्यार्यवर्णाश्रमसमाजस्य विलोपं प्रतिबध्नीयात्। धर्म्मसमाजस्य चेदृशीं पौनःपुनिकीं प्रतिष्ठा-मवसादसुखे जीवा अनुभविष्यन्ति। अवतीर्णस्य—युगधर्मस्थापनाय

राजसभायां राज्ञोऽनुमताः पुत्राः, पित्रादिष्टा एव पुत्राः, पित्रादिगुरुजनानां पुरत एव द्यूतक्रीडायां प्रसक्ताः, अनुगतभ्रातृतनयस्य पुत्रहितार्थिनो राज्ञो ज्येष्ठतातस्यादेशेन अभिप्रेतायां द्यूतक्रीडायां प्रसक्ताः। इच्छामय, त्वदीय-संसारलीलाभूमौ विचित्राभिनयसन्दर्शनमन्तरेण तदवबोधशक्तिं मादृशः क्षुद्रो जीवः कुतो वाधिगच्छेत् ?

महाराजस्य शान्तनोर्द्वितीयदारपरिग्रहादारभ्य सुहृद्द्यूते पाशकक्रीडनं यावत् कालप्रभावः शनैः परिवर्धमानः कुरुक्षेत्रमभिनीतवान्। कुरु-क्षेत्राभिनयस्य सुसम्पत्तयेऽन्यत्र कृतानि कालायोजनानि शनैः कुरुक्षेत्राभि-मुखान्यभवन्। राज्ञो गृहे आयोजनानां फलानि प्रजयावश्यमनुभवि-तव्यानि—राजा कालस्य कारणम्।

कालत्रयेऽप्यमितप्रभावो भगवान् व्यासः स्वावतारप्रयोजननिष्पाद-नाय यथाविधि सामग्रीं समाहृत्य भूभारहरणानन्तरं भगवद्वदनारविन्द-विगलितं कृष्णार्ज्जुनसंवादरूपं गीताशास्त्रं प्रचारयामास।

इत्थं च कलिकालशक्तौ प्राबल्यं दृढमूलत्वञ्चाधिगतायां तत्काल-समुत्पन्ना महापुरुषा अपि नैव प्रबभूवुः कालशक्तिं प्रतिहत्य सत्यं प्रति-ष्ठापयितुम्। श्रीभगवान् नरनारायणरूपेणावतीर्य युगप्रलयमध्यत एव युगधर्मस्यानुकूल्यं स्वीकृत्य गीताया महावाक्यानि प्राचीचरत्। योग्य-कर्षकेण योग्यक्षेत्रेषूप्तं बीजं स्वत एव यथाकालमङ्कुरितं क्रमेण पत्र-पुष्पफलभारावनतमहामहीरुहे परिणमति। गीताया अप्युदात्तं वचनं भारतस्य कर्मक्षेत्रे यथाकालम् आर्त्तानामवसन्नानां च जीवानां हृदया-काशे परिस्फुरत् कल्याणमेवावहेत्, निर्वाणोन्मुखो दीपः पुनः स्नेहेन सिक्तः पुनरपि प्रज्वलितोऽन्धकारं तिरयेत्। इत्थञ्च गीतायाः प्रयो-जनोपलब्धिर्गीतायाः पठनपाठनादिकञ्च लुप्तप्रायस्यार्यवर्णाश्रमसमाजस्य विलोपं प्रतिबध्नीयात्। धर्म्यसमाजस्य चेदृशीं पौनःपुनिकीं प्रतिष्ठा-मवसादमुखे जीवा अनुभविष्यन्ति। अवतीर्णस्य—युगधर्मस्थापनाय

नराकारेणावतीर्णस्य भगवतः कार्य्यं कदाप्यसाफल्येन नोपहन्येत यथा-कालं नियतमेव साफल्यमधिगमिष्यति।

अवतारस्य प्राथमिके कर्मक्षेत्रे कुरुक्षेत्रे समरसम्भाराः सम्भृताः। समागताश्च वीराः स्वाभीष्टं पक्षं परिगृह्य सज्जेषु रथेष्वस्त्राद्युपकरणैः साकं दर्शनीयदिव्यमूर्त्या प्रकाशमविन्दन्त।

युगे युगे नैमिषारण्यस्य पुण्यभूमौ गोष्ठ्यां समवेता महर्षयो जगतो हितार्थं शास्त्रार्थान् प्रचारयन्ति। भगवान् नरनारायणो मरणराज्ये द्वापरयुगावसानस्य परिचायकभूमौ पवित्रश्मशानस्थल्याः शस्त्रानल-दग्धदीप्तवीरनिकरशरीरकान्तिपूरसमुद्भासितां दिङ्मण्डलीं प्रति भवि-ष्यद्दृष्टिं विनिक्षिप्य निर्वाङ् निश्चलश्च स्थितः। क्षणं च गजानां बृंहितानि तुरगाणां ह्रेषणानि वीराणां बाह्वास्फोटनानि रथचक्राणां संक्रीडितानि रणतूर्याणां तुमुलारावः दिव्यानां च शङ्खानां गगनमेदिनी-विदारी विषमो निनादः सर्वमेवैकपदे स्तब्धतामीयुः, मन्ये बलीयसोऽनेहसः सर्वङ्कषो वज्रनादः सर्वान् परिभूयात्मानं प्रत्यतिष्ठिपत्। तस्मिन्नेव च मुहूर्त्ते—अवश्यम्भाविनो व्यतिकरस्य सम्भारसमावेशावसरे वीरश्रोतृ-वृन्दानां पुरतः कुलपतेरिव कालनियन्तुः कृष्णस्य वदनकमलाद्विनिः-सृता मकरन्दबिन्दवो दक्षिणानिलवीजिता योग्याधारे रक्षिताः। त एव श्रीमद्भगवद्गीता—कलेः शास्त्रार्थप्रचारः।

कालस्य प्रभावः—कालस्य गतिरव्याहतैव। श्रीमतोऽर्जुनस्यापि चित्ताकाशे कालस्य छायापातः समजनि। प्राक्तनसुकृतिप्रभावेण जगद्-गुरोः सर्वज्ञस्य भगवतः सान्निध्यात् तस्य प्रागदर्शनमभूत्। दृष्टञ्च तेन—समरोऽयं वर्णाश्रमधर्मविलोपानुबन्धीति। एतेन च समाक्रान्त-मस्य मानसं विषादेन। उक्तञ्च तेन—गोविन्द नाहं योत्स्ये। लब्धा-वसरा धार्त्तराष्ट्रा मां रणे निहन्युश्चेन्निघ्नन्तु नाम इति।

संशयाकुलमानस इदानीमर्जुनः। यदा तावद् युद्धस्यास्य परि-णामेन जगति विस्तारमासादयेत् कालस्य प्रभावः तदा न खलु युद्धमिदं

वैधकर्मतया युज्यते विनिर्देष्टुम्। यतो विधिबोधितं कर्म कदापि नैव संसाधयत्यहितं जगतः, प्रत्युत हितमेव नियतं सम्पादयति, प्रकृतेन पुनर्युद्धेन कथमपि कल्याणं नोपजन्यते। कुलस्त्रीणां च वैधव्येन व्यभिचारदोषस्य प्राबल्यात् समुत्पन्ना भविष्यत्कालीनाः प्रजाः, दूरे तावद् वार्त्ता वर्णाश्रमधर्मपालनस्य—वर्णाश्रमधर्मोचितैः संस्कारैरपि हीयेरन्। वर्णसङ्करोत्पन्नानां प्रज्ञा नैव प्रभवेत् पवित्रं वर्णाश्रमतत्त्वमवबोद्धुम्।

वर्णसाङ्कर्योत्पन्ना जीवा बुद्धिमन्तोऽपि कुटिलमतयो भविष्यन्ति। यद्यपि ते राजनीत्यादिषु जागतिककर्मजातेषु सविशेषामेव योग्यतां प्रकटयिष्यन्ति तथापि धर्मरहस्यविज्ञानाय नैव प्रभवेयुः। संशयदोलामधिरूढोऽर्जुन एवमेव विचिन्तयति, चिन्तयंश्च चिन्ताबीजं भगवते विज्ञाप्य यातनाव्यथितान्तःकरणस्य चाकाङ्क्षाः प्रकटय्य अनुमत्यपेक्षया सोत्कण्ठमुत्तरं प्रार्थयमानः स्थितः। इत ऊर्ध्वभाविनी प्रश्नोत्तरमालैव श्रीमद्भगवद्गीतेति प्रसिद्धा।

---

## कर्म-चोदना

[ निबन्धकः—के. ए. रामलिङ्ग-शास्त्री ]

केयं कर्मचोदना नाम, कर्मणः सुकृत-दुष्कृतात्मकस्य चोदना प्रेरणा प्रवर्तना इति यावत्। अस्वतन्त्रोऽसौ जन्तुर्जननान्तरसम्पादितशुभाशुभकर्मफलोपभोगानुगुणम् उत्तमं च शरीरम् उपाददानः प्रकृतिपरवशः प्रतिक्षणं स्वीयवयोऽवस्था-चित्तवृत्त्यनुरूपं क्रीडनम् आतनोतीत्येतदतिरोहितमेव।

'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥

इति श्रीमद्भगवदुक्तेः,

'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाऽशुभम्।
नाऽभुक्तं क्षीयते कर्म कल्प-कोटि-शतैरपि॥' इति स्मृतेश्च,

किंच,

'यस्माच्च येन च यथा च यदा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म।
तस्माच्च तेन च तथा च तदा च तच्च
तावच्च तत्र च विधातृ-वशादुपैति॥' इति नीतेश्च,

यद्यपि, बुद्धिपूर्वकारी सकलश्चेतनवर्गः 'सदा सुखं मे भूयात्' 'कदापि दुःखं मा भूत्' इति सुखमात्रमेव सर्वदा सर्वथा अभिलषति, तथापि, जन्मान्तरीयपुण्य-पापानुरूपं सुखं च दुःखं च क्रमेण वा व्युत्क्रमेण वा अचिन्तितमेव आपतति। अहो! बलवती भवितव्यता—

'प्रायः शुभं च विदधात्यशुभं च जन्तोः।
सर्वङ्कषा भगवती भवितव्यतैव॥'

इति भवभूतिसुव्याहृतेः; 'अलङ्घ्या भवितव्यता' इति अभिनन्द-सूक्तेश्च;

'अज्ञो जन्तुरनीशोऽयम् आत्मनः सुख-दुःखयोः।
ईश्वर-प्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा॥'

इति अभियुक्तसुभाषितात्; ईश्वरो न कमपि जीवं दुःखयति सुखयति वा स्वातन्त्र्येण। किं तर्हि? तत्तच्चेतनवर्गाणां प्रारब्धानु-सारमेव सुखं च दुःखं च अनुभावयतीति न ईश्वरस्य वैषम्यं वा नैर्घृण्यं वा जीव-वर्गेषु चिन्तनीयम्।

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥'

'तत् सृष्ट्वा तदेवाऽनुप्राविशत्' इतिश्रुतिशीर्षोपदेशेन, 'आत्मा स भोक्तुः' इति श्रीमद्भगवत्पादीय-भाष्येण च यद्यपि जीवो नाम अयं न चिदात्मनो भिद्यते, तथापि बीजाङ्कुर-सदृशानादिभवसम्पादितप्रारब्ध-फलानुभवस्य मुक्तेष्ववद् दुर्निवारत्वात्,

'पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्'

इत्युक्तरीत्या प्राणिजालानि जायन्ते च म्रियन्ते च, सुख्यन्ति च दुःख्यन्ति च ; शिशूनां शैशव-लीलायां सूक्ष्मेक्षिकया परिशीलितायाम्, सच्चिदानन्दमयत्वम् आत्मनः सम्यग् अवगम्येतैव। अपत्यपदवाच्यानि अमूनि जीवजालानि खलु द्वित्राणि सम्भूय दारुमयीः प्रतिबिम्बमयीर्वा देवताप्रतिमाः प्रतिष्ठाप्य भवनाङ्गने वा भवन-कुट्टिमे वा, स्फटिक-विद्रुमादिमालाभिरलङ्कृत्य वाद्यानि वादयित्वा घण्टां नादयित्वा गेयानि गायन्ति देवपूजां प्राह्णे च अपराह्णे च मध्याह्ने च किं बहुना सर्वदा च कुर्वन्ति, कर्पूरारात्रिकं दर्शयन्ति, नृत्यन्ति च ; शकटी रथ्यासु जवेन धावयन्ति, मण्डलीकुर्वन्ति, एकेन कृतं व्यायामं दृष्ट्वा अपरे च आरचयन्ति इति अनुभवसिद्धमिदं सर्वेषाम्। 'जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा…' इत्यादिश्रुतिरपि अमुमर्थं विशद-यत्येव। प्रतिसीरापिहिता नर्तक्यो नर्तकाश्च यथा किल हरिश्चन्द्र-नल-सनत्कुमारादिभूमिकाः चन्द्रवती-सीता-दमयन्त्यादिभूमिकाश्च धार-यन्तस्तत्तत्सन्दर्भानुगुणरसोचितभावविशेषैः सामाजिकानां हृदयानि कदाचिदाह्लादयन्ति, कदाचिद्रोदयन्ति, कदाचिद् विरञ्जयन्ति, कदा-चिन्मूर्च्छयन्ति, किङ्कर्तव्यतामूढानि च चमत्कुर्वन्ति, नन्वेवमेव अर्भक-वृन्दानि प्रतिसदनं बालकेलीः कुर्वन्ति मातापित्रादिबन्धुजनान् सर्वान् प्रेक्षकान् परवशीकुर्वन्तीत्यहो अचिन्तनीयो भगवन्महिमा !

'भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे।
देवस्यैष स्वभावोऽयम् आप्त-कामस्य का स्पृहा ? ॥'

इति श्रीमद्गोविन्दभगवत्पादानां माण्डूक्यकारिकासूक्तेः।

इमानि तोक-निकुरम्बाणि चैतन्यानुप्रवेशपूर्वकजन्मग्रहणात् प्राक् कथम् आसन् ? अव्यक्तान्येव। मध्ये कियन्तंचित् कालं कथम् आसन् ? व्यक्तानि। येन केनचिन्निमित्तेन द्विहायनमात्रे त्रिहायणमात्रे वा वयसि अपमृत्युना अपहृतजीवितानि एतानि कथम् आसन ? अव्यक्तान्येव। अत्र विविच्य वेदनीयं बहु विद्यते, तत्र का परिदेवना ?

'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे नैवं शोचितुमर्हसि ॥

वासांसि जीर्णानि यथा विहाय, नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही' ॥

पुत्र-पौत्रादिबहुविधनामधेय-स्त्रीपुंसादिरूपधेयहायनद्वितय-त्रितयमात्र-प्राणधारणपर्याप्त-भागधेयभाजनानि अमूनि चिदानन्दमयस्य प्रतिबिम्बानि कनकमयानि सहसैव विलीयन्ते च, यत्र कुत्रापि तत्क्षणादेव उत्पद्यन्ते चेति वस्तुतत्त्वं परिशीलनीयं परीक्षकैः ।

'यावद्यस्मिञ्छरीरे प्राणो वसति, तावदायुः' इति श्रुतिशिखरव्याहृतेः जीवानां जन्म-मरणक्लेशाः सदैव सम्भवन्तीति विचिन्त्य, ऐहलौकिक-सुखसाधनतया परिगणितेभ्यः पुत्र-मित्र-कलत्र-पशु-धान्य-धनादिभ्यः पण्डितैर्विरक्तैर्भवितव्यम् इत्युपदिष्टप्रायम् । दिगन्तरलसत्कीर्तिरनन्तकवि-कुञ्जरो भारतवर्ष्वाम्—

'धर्मभूरनुजैः साकं तद्गिरा तत्पुरं ययौ ।
कर्म-चोदनया जीवः कायमन्यं विशन्निव ॥'

इति वर्णयामास ।

धर्मपुत्रो भीमादिभिः सोदरैः पितृव्य-वचनेन वारणावतंसं नाम नगरं प्रविवेश । यथा धर्मभूः जीवः विद्या-कर्म-वासनाद्यैः सह तद्गिरा = तस्य = परमात्मनः गिरा कर्म-चोदनया = कर्मणः सुकृत-दुष्कृतात्मकस्य कर्मणः चोदनया प्रेरणया प्रवर्त्तनया अन्यं देहं विशति, तादृशं हि तत् ।

'कर्मणः सुकृतस्याऽऽहुः शाश्वतं फलमुत्तमम् ।
रजसस्तु फलं दुःखम् , अज्ञानं तमसः फलम् ॥'
'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥
तेषामादित्यवज् ज्ञानं प्रकाशयति तत् परम् ।
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञान-निर्धूत-कल्मषाः ॥'

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय ! सदा तद्भाव-भावितः ॥'

'क्लेश-कर्म-विपाकाऽऽशयैरपरामृष्टः पुरुष-विशेष ईश्वरः' ; तत्परामृष्टास्तु जीवाः ; अतोऽमीषां जीवानां कर्मबन्धोच्छेदार्थं 'वासुदेवः सर्वम्' इति भगवति वासुदेवे अनन्यभावनारूपिणी भक्तिः कर्तव्या सर्वैर्जीवैरिति शुभम् अयनम् उपदिश्यते ।

'न वासुदेव-भक्तानाम् अशुभं विद्यते क्वचित् ।
जन्म-मृत्यु-जरा-व्याधि-भयं वाऽप्युपजायते ॥'

इति सर्वं समञ्जसम् ॥

---

# समालोचनम्

**सर्वलक्षणसंग्रहः ।** भिक्षुगौरीशङ्करेण संगृहीतः ... वृत्तिः । प्राप्तिस्थानम्—श्रीमती मनभरी देवी । ग्राम—पुट्री, पोष्ट्—जमालपुर, जिला—हिसार Vill. Puttri, P. O. Jamalpur. Dist. Hissar, Punjab. मूल्यम्—सार्धचतुराणकमात्रम् ।

"आयुषोऽपि पदार्थानां नान्तं यान्ति पृथक्कृशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥" इति "लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः" इति च लक्षणानां महानेवोपयोगः प्रदर्शितः शास्त्रकृद्भिः । अत्र च सुमनोहरे ग्रन्थे तत्तत्तन्त्रप्रसिद्धानां पदार्थानामकारादिक्रमेणोपनिबद्धानां सुबहूनि लक्षणानि सन्निविष्टानि । अतिमात्रमुपकारकमिदं पुस्तकं सर्वेषामेव संस्कृतभाषानुशीलिनां विशेषतश्च दर्शनशास्त्रे सम्यगकृतश्रमाणां व्युत्पित्सूनाम् । ईदृशमुपयोगावहं स्वल्पमूल्यञ्च पुस्तकं नैवापरं प्रत्यक्षीकृतमस्माभिरिति निर्मायमेव ब्रूमः । न्यायकोशादयश्च व्युत्पन्नजनमात्रोपकारका बहुमूल्याश्च नैव पार्यन्ते संग्रहीतुं सर्वैः । इदं पुनः सारतमञ्च

मितलमश्च २७०० लक्षणसंग्रहात्मकं पुस्तकं केवलं सार्धचतुराणकमूल्यमिति सुशकमेव सर्वैरधिगन्तुम्। वाचकमहोदयानामवगमायात्रत्यानि कतिपयानि लक्षणानि प्रदर्श्यन्ते—

"उपलक्षणत्वम्—स्वप्रतिपादकत्वे सति स्वेतरप्रतिपादकत्वम्, स्वार्थबोधकत्वे सतीतरार्थबोधकत्वम् वा २ स्वासम्बन्धिविशेष्यकेतरबुद्धिजनकत्वम् ३ कादाचित्कत्वे सति व्यावर्त्तकत्वम्, यथा काकादिकं देवदत्तगृहादेः।"

"भाष्यम्—सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

सागरादिवर्णनस्य भाष्यत्वव्यावृत्तये सूत्रार्थैरिति पदवृत्तिव्यावृत्तये वाक्यैरिति, वार्त्तिकस्य तत्त्वनिरासाय सूत्रानुसारिभिरिति, वृत्तेस्तत्त्वव्यावृत्त्यर्थमुक्तं स्वपदानीति।"

एतावतैव शक्येत विस्पष्टमवबोद्धुं पुस्तकस्यास्य परमोपादेयत्वम्। यद्यपि क्वचिदत्र किञ्चित् स्खलितमुपलभ्यते ( यथा—१०५पृष्ठस्थपादटीकायां 'रमिष्ये' इति पदम् ) तथापि न तावता ग्रन्थस्यास्य लेशतोऽप्यपकर्षः, प्रत्युत प्रतिपृष्ठं प्रोल्लासमानानामुत्कर्षनिकराणां समुज्ज्वलीकरणमेव सिध्यति। अतिमात्रप्रशंसनीयोऽयमुद्यमो भिक्षुश्रीगौरीशङ्करस्य च श्रीमत्या मनभरीदेव्याश्च इति तौ सहस्रशः साधुवादानर्हतः। अवश्यं संगृह्यतां पुस्तकमिदं वाचकमहाभागैरिति शिवम्।

**शम्भुचर्योपदेशः।** बि, ए, बि, एल, बिरुदविभूषितेन श्रीमता महालिङ्गशास्त्रिणा विरचितः। प्राप्तिस्थानम्—3, Madhavapuram, Mylapore, Madras. मूल्यमाणकचतुष्टयम्।

के, एम्, वेङ्कटरमणिमहोदयविरचितस्य A day with Sambhuसमाख्यस्य पुस्तकस्य संस्कृतपद्यात्मकोऽनुवादोऽयम्। अत्र च कस्यचन बालकस्य प्रत्यूषसि शय्यात्यागत आरभ्य उषश्चर्या नदीचर्या स्नानचर्या जपचर्या भुक्तिचर्या छात्रचर्या उद्यानचर्या रात्रिचर्या अहिंसा

चर्या च मनोहरतमया भङ्ग्या समुपवर्णिताः। भाषाया माधुर्येण, उपदेशानां गुरुत्वेन भूमिकायाश्च गाम्भीर्येणातिमात्रं हृदयहारीदं पुस्तकमवश्यमेव पठनीयं बालकैरस्मद्देशीयैः। अत्रत्यस्य नदीवर्णनस्य समास्वाद्यतां रसः सहृदयैः—

एहि शम्भो नदीं यावः पुण्यां ग्रामविसर्पिणीम्।
या नः पूरयते क्षेत्रवापीकूपजलाशयान्॥
वन्दस्व सरितं देवीं सायं प्रातः समाहितः।
पुनाति सा नः संहृत्य बाह्याभ्यन्तरमामयम्॥
अस्याः शृणु कथां शम्भो मर्त्यधर्मानुसारिणीम्।
नानाचित्रचरित्राढ्या दीव्यत्येषा हि भूतले॥
जाता संलालिता यैषा दरीपर्वतपालिषु।
प्राप्तसंक्रमणा स्निग्धच्छायासु वनभूमिषु॥
आदौ बुद्बुदमात्राभा कुतोऽप्यारब्धनिर्गमा।
स्पन्दमाना नदीभूय शनैर्निर्याति सारणी॥
लङ्घयन्ती ततो वेगाद् गिरीनपि दरीरपि।
धावत्युत्पतति क्रीडत्यद्रिकूटात् पतत्यपि॥
सा प्रगत्य प्रगत्यैव कटकेष्ववरोहणी।
मध्येमार्गगतैरन्यैरासारैः समुपेयुषी॥
विशालसुभगाकारा प्रवहन्ती भुवस्तले।
प्रविशत्यध्वनि ग्रामान् क्रीडासक्तकुमारकान्॥
एवं वितीर्य लोकानां जलं सस्यविवर्धनम्।
नदी सिन्धुमवाप्नोति सुता मातुरिवाङ्कम्॥
आढ्यं दरिद्रमथवा पूतं पातकिनं च वा।
सा पुनात्यविशेषेण ग्रामे ग्रामे पुरे पुरे॥
नद्याः शुभाया इव ते जीवयात्रा प्रवाहिणी।
शम्भो परोपकारेण सार्थक्यं गन्तुमर्हति॥

अतिमात्रं रमणीयेऽप्यस्मिन् वर्णने "प्रविशत्यध्वनि ग्रामान् क्रीडासक्तकुमारकान्" "नदी सिन्धुमवाप्नोति सुता मातुरिवाङ्कम्" "उषस्युत्थानशीलं त्वामधिगन्तुं प्रियं मम" इत्यादीनि पदजातानि समुद्वेजयन्त्येव मानसानि सहृदयानाम्। आशास्यते च संस्करणान्तरे सुदूरमुत्सारयेयुरिमान् महालिङ्गशास्त्रिमहाभागा इति।

**विषमपरिणयम्।** श्रीमद्गजेन्द्रशङ्करलालशङ्करपाण्ड्ये एम्-ए, बी टी विरचितं पञ्चाङ्कात्मकं नाटकम्। ग्रन्थकृतैव रेवाकाण्टा एजेन्सी देवगड वारीयातः प्रकाशितम्। मूल्यं द्वादशाणकाः।

नवीनामेव रीतिमनुसृत्य विरचितमिदं वियोगान्तं पञ्चाङ्कं नाटकं पाण्ड्येमहाभागेन। यद्यप्यत्रत्यमाख्यानवस्तु वैचित्र्यावहं तथाप्यापादचूडं च्युतसंस्कृतिदोषदूषितत्वात् सर्वथानुपादेयमिदं सहृदयानाम्। यच्च ग्रन्थादौ ग्रन्थकृता विज्ञापितम्—"न वयं पाणिन्यादिव्याकरणस्याध्येतारः। न वास्माकमाधुनिकरूढ्यनुसारेण कृतसंस्कृतभाषाध्ययनेन भाषासंस्कारः सुलभः। तथा ये केऽपि दोषाः पण्डितजनानां दृष्टिपथं गता भवेयुस्ते क्षम्येरन्नित्यत्र न कश्चित् संशयोऽस्माकं हृदये वर्त्तते" इति। अत्र प्रथमत एतदेव वक्तव्यं न खलु विशुद्धतया संस्कृतभाषया प्रबन्धादिविरचने पाणिन्यादिप्राचीनव्याकरणज्ञानमपेक्ष्यते। भाण्डारकरमहोदयविरचितं ग्रन्थद्वितयमाप्टेमहोदयप्रणीतं च पुस्तकमधीत्यापि बहुभिः संस्कृतभाषायां व्युत्पत्तिरधिगतेति बहुशः प्रत्यक्षीकृतमस्माभिः। किञ्च, रसापकर्षकत्वमेव दोषाणां दूषकताबीजम्। प्रतिपदं चेच्छन्दोभङ्गेन वा लक्षणाननुगतपदप्रयोगेण वा विधेयाविमर्शादिना वा रसस्यापायो वापकर्षो वा तर्हि को वा व्युत्पन्नः पठिता तादृशप्रबन्धाध्ययने मनो बध्नीयात्, अव्युत्पन्नाः पुनर्बालाः प्रमादसहस्रदूषितस्येदृशस्य पुस्तकस्याध्ययनेन प्रामादिकानेव प्रयोगान् साधुतयाऽऽकलयेयुरिति तेषां महती हानिः। अत्रत्याश्च दोषा भूयांसश्च गरीयांसश्चेति न शक्यन्त उपेक्षितुम्। उक्तञ्च महाकविना माघेन—

मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥

आशास्यते चेत ऊर्ध्वं ग्रन्थकृता व्युत्पत्तिसमासादनाय प्रयास आस्थास्यते केनापि वा संस्कृतभाषाभिज्ञेन सुहृदा शोधयित्वा ग्रन्था मुद्रापयिष्यन्ते इति ।

यद्यपि लघीयस्यानया पत्रिकया न शक्यन्ते सर्वे दोषाः प्रकटयितुं तथापि ग्रन्थकृतस्तद्बान्धवानाञ्च प्रत्ययार्थं केचनात्र प्रदर्श्यन्ते ।

तृतीयपृष्ठे "स अस्यां दृढबद्धभावः" इत्यत्र सोऽस्यामित्यपेक्ष्यते । पञ्चमे पृष्ठे "प्रवर्तत अहो" इत्यत्र प्रवर्त्ततेऽहो इति पाठ्यम् । सप्तमे पृष्ठे "हस्तपादौ" इत्यत्र समाहारेण भाव्यम् । श्लोकानां प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च चरणयोः सति सम्भवे सन्धिः करणीय इति दिङ्मात्रं प्रदर्शितम् ।

यद्यपि प्रायेण नोपलभ्यन्ते संस्कृतसाहित्ये वियोगान्तानि नाटकानि, यद्यपि च जागर्ति भामहवचनम्—

नायकं प्रागुपन्यस्य वंशवीर्यश्रुतादिभिः ।
न तस्यैव वधं ब्रूयादन्योत्कर्षाभिधित्सया ॥

इति, तथापि प्राक्तनकर्मपरिपाकवशेन निखिलगुणगणोपेतानामपि जनानां क्लेशस्य पराभवस्य वधस्य च प्रत्यक्षसिद्धत्वात् प्रत्यक्षस्य च प्रमाणसहस्रेणाप्यपलपितुमशक्यत्वात्, वियोगान्तनाटकानामेव दुरात्मदुश्चेष्टितप्रदर्शनद्वारा पापाचरणेषु प्रद्वेषबुद्धिसमुत्पादकत्वाज्जनमानसानां च निर्णेजकत्वाद् वियोगान्तनाटकविषये नास्माकं कापि विप्रतिपत्तिः परं पित्रा स्वहस्तेन विषपायनेन पुत्र्या घातनं न खलु सम्भवकोटिं प्रवेष्टुमीष्ट इति नो बुद्धिरिति शिवम् ।

# मीमांसादर्शनम्

( पूर्वानुवृत्तम् )

[ तै० ब्रा० १।६।५ ] इत्येवमादयस्तेषु सन्देहः—किं स्तुतिस्तेषां कार्यम् उत हेतुरिति ? किं प्राप्तम् ? हेतुः स्यादन्नकरणं होमस्य।

नन्वप्रसिद्धे कार्य्यकारणभावे न हेतूपदेशः। सत्यम् एवं लोके, विधायिष्यते तु वचनेन वेदे। शूर्पेण होमे कर्त्तव्येऽन्नकरणं हेतुरित्युप-

---

निगमात् संशयमाह—**तेष्विति।** विमर्शपूर्वकं **हेतु**रिति पूर्वपक्षप्रतिज्ञां व्याचष्टे—**किमित्यादिना। होमस्य** होमसम्बन्धस्य इत्यर्थः। अत्र च पूर्वाधिकरणपूर्वपक्षसूत्रात् "अपूर्वत्वात्" इति हेत्वाकर्षार्थः सौत्रो 'वा'शब्दः, स च भाष्यकृता **स्यात्** इत्यनेनैव व्याख्यातः। यद्यपि 'शूर्पेण जुहोति' इति वर्तमानापदेशस्यार्थवादविधुरस्याविधायकत्वात् अर्थवादतयोपयुक्तस्य च 'तेन हि' इत्यादेः पूर्वाधिकरणन्यायेन वाक्यभेदेन पुनर्हेतु-विधित्वासम्भवाद् अविहिते शूर्पहोमसम्बन्धे निर्विषयस्य हेतुविधानस्यासम्भवः, तथापि होमकर्तव्यताया वाक्यान्तरसिद्धत्वाच्छूर्पहोमसम्बन्धस्य शूर्पेणेत्यस्मादवगतेः, अनुष्ठानस्य च प्रयोगविधिनासिद्धेर्विध्यभावान्नार्थवादत्वम्, नाप्यानर्थक्यम्। "तेन ह्यन्नम्" इति शूर्पहोमसम्बन्धे अन्नकरणत्वरूपहेत्वपदेशान्यथानुपपत्त्या यद् यदन्नकरणं तेन तेन होतव्यमिति विधिवाक्यानुमापकत्वात् अस्येति भावः।

ननु गृहीतव्याप्तिकस्य लोके हेतुत्वेन व्यपदेशात्, अन्नकरणत्वस्य च होमसम्बन्धेन सहागृहीतव्याप्तिकत्वात् कथं हेतुत्वमिति "स्यात्" इति सूत्रावयवं निरस्याशङ्कामाह—**नन्विति।** अत्र क्रियासामान्यवाचिना करोतिना ज्ञानाख्यः क्रियाविशेषो लक्ष्यते, तेन कार्यं गम्यं कारणं च गमकम्। गम्यगमकशब्दयोश्च कृदन्तत्वात् तत्परेण भावप्रत्ययेन सम्बन्धाभिधायिना भवितव्यम् "कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतल्भ्याम्" इति स्मरणात्*, सम्बन्धस्य च कारकाणां क्रियोत्पादनशक्तिरूपत्वात् तस्याश्च व्याप्यव्यापकव्यवहारहेतुत्वेन व्याप्तिरूपत्वात् कार्यकारणभावशब्देन व्याप्तिर्गीयते। तेन व्याप्तिरूपे तस्मिन्नसिद्धे कथं हेतुव्यपदेश इत्यर्थः। **लोके** हेतुव्यवहारात्

---

* "कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनान्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्यः" इति वार्त्तिकवचनमिति मीमांसकादीनां भ्रममपाकुर्वता दीक्षितमहाभागेन वचनस्यास्य भर्तृहरिनिर्मितत्वं प्रतिपादितं "कृत्तद्धितसमासेभ्यः" इति कारिकायाम्।

**दिश्यते। किं प्रयोजनम्? अन्यदपि दर्वीपिठराद्यन्नकरणं यत् तेनापि नाम कथं होमः क्रियेतेति? कुतः? तस्याप्यन्नक्रियायामर्थवत्ता। शक्यते च तेनाप्यन्नं कर्त्तुम्। एतद्धि क्रियत इत्युच्यते। न हि वर्त्तमानकालः कश्चिदस्ति यस्यायं प्रतिनिर्द्देशः। हेतौ च श्रुतिः शब्दः,**

---

पूर्वमेव प्रमाणान्तरेण व्याप्तिसिद्धिरपेक्ष्यत एव, **वेदे तु** सिद्धवद्धेत्वपदेशान्यथानुपपत्तिकल्पितेन यद् यदन्नकरणं तेन तेन होतव्यम् इति **वचनेन** कार्यकारणभावस्य सम्बन्धो **विधायिष्यते** प्रतिपादयिष्यत इति सूत्रावयवेन परिहरति—**सत्यमित्यादिना**।

हेतुः स्यादित्यनेनोक्तमुपसंहरति—**शूर्पेणेति**। अत्र च समस्तस्य केवलहेतुपरत्वात् तदन्यथानुपपत्तिकल्पितसर्वान्नकरणसाधनत्वविधिप्राप्तत्वेन शूर्पस्य तच्छ्रुतेरवश्युत्यानुवादत्वात् उपलक्षणार्थं शूर्पग्रहणम्, तेन शूर्पेणान्येन वा होमे कर्तव्य इत्यर्थः।

ननु "शूर्पेण जुहोति" इति श्रुतं विधिं परित्यज्य शूर्पश्रुतेरुपलक्षणार्थत्वं चाश्रित्य "तेन ह्यन्नम्" इति हेतुनिर्देशान्यथानुपपत्त्याऽश्रुतविधिकल्पने किं प्रयोजनमिति पृच्छति—**किमिति**। उत्तरम्—**अन्यदपीति**। शास्त्रस्य महाविषयत्वं तेन यस्य कस्यचिदन्नकरणस्य सर्वदा लाभात् पुरुषस्यानुष्ठानसौकर्य्यं प्रयोजनमिति भावः।

ननु शूर्पश्रुतेरुपलक्षणार्थत्वेऽपि **तेने**ति साधकतमार्थया तृतीयया कथं दर्व्यादीनां करणत्वप्राप्तिस्तेषामसाधकतमत्वादिति चोदयति—**कुत इति**। "अर्थवत्त्व"पदव्याख्यानेन परिहरति—**तस्यापीति**। दर्व्यादेरप्यन्नक्रियायामुपयोगमात्रमस्त्येवेत्यर्थः। तथापि **तेने**ति तृतीयोक्तसाधकतमत्वासिद्धिरित्याशङ्क्योपपत्तिपदं व्याचष्टे—**शक्यते चेति**। नात्र **तेने**ति साधकतमत्वमभिप्रेतं किन्तु लाङ्गलाद्यपेक्षया दर्व्यादीनामन्तरङ्गसाधनत्वम्, तावन्मात्रेण तृतीयोपपत्तिरिति भावः। यद्वा पूर्वभाष्य एवार्थवत्त्वपदेनापेक्षितं करणत्वं तृतीयालम्बनमभिधाय **क्रियत** इति वर्तमानक्रियतया**पदिष्टस्य** कथं होमसम्बन्धे हेतुत्वमुच्यते एकस्य युगपत् क्रियाद्वयायोगात् इत्याशङ्क्य "उपपत्ति"पदं व्याचष्टे—**शक्यते चेति**। अत्र **क्रियत** इति करोतिना तच्छक्तिमुपलक्ष्यैतस्यावर्तमानत्वमभिधीयते। अथवा लटा भूतभविष्यद्वाचिनोः लुङ्लृटोः अर्थः क्रियायामेव लक्ष्यते, उभयथापि **तेनान्नं क्रियते** कर्तुं शक्यत इति, **अर्थवत्त्वोपपत्तिभ्यामित्युपपत्तिशब्देनो**क्तमित्यर्थः।

ननु करोत्यादेर्मुख्यार्थपरित्यागेन लाक्षणिकार्थत्वं कस्मादाश्रीयते, तत्राह—**एतद्धीति**। कर्तुं शक्यत्वम्। तत्र हेतुः—**नहीति**। 'यस्मान्न **वर्त्तमानक्रियाकालः कश्चिद्द**र्व्यादिहोमसाधनम् **अस्ति यस्यार्थ**स्यायं क्रियत इति **प्रतिनिर्द्देशो** व्यपदेशः तस्माल्लक्षणाश्रयणम्' इति योजना। यदा तु "वर्त्तमानः काल" इति पाठः तदा नहि

स्तुतौ लक्षणा। यदि य दर्वीपिठरादि न साक्षादन्नं करोतीति नान्नकरण-मित्युच्यते, व्यर्थे तस्मिन् शूर्पस्तुतिरनर्थिका स्यात्। शूर्पमपि हि न साक्षादन्नं करोतीति तेन विनार्थेन शूर्पस्य स्तुतिर्नोपपद्यते ॥ २६ ॥

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥**

न त्वेतदस्ति शब्दपूर्वकोऽयमर्थोऽन्नकरणं हेतुरिति। शब्दश्चान्नकरणं शूर्पहोमे हेतुरित्याह, न च दर्वीपिठरहोमे, तेन शब्दपूर्वं शूर्पं न च दर्वीपिठरादेश्चोदना ॥ २७ ॥

---

वर्त्तमानकालोऽन्नक्रियाया अस्मिन् प्रयोगे सम्भवति होमसाधनत्वानुपपत्तेः यस्य क्रिया इति प्रतिनिर्देश इति योज्यम्। एवम् "अर्थवत्त्वोपपत्तिभ्याम्" इति व्याख्यातम्। "अर्थवत्त्वम्" अन्यथा व्याचष्टे—**हेतौ चेति**। **शब्दो** हि-शब्दः **स्तुता**विति। सर्वजनाभिमतेनान्नकरणत्वेन प्राशस्त्यं लक्ष्यत इत्यर्थः।

ननु त्वत्पक्षेऽपि साधकतमार्थतृतीययापेक्षितसाधनत्वस्य कृत्वा शक्तिर्वर्तमानत्वस्य लटा वा भूतभविष्यत्त्वयोर्लक्षणापद्येतेत्याशङ्क्य सिद्धान्तेऽपि शूर्पविषये सा तुल्येति वक्तुं "व्यर्थे स्तुतिः—" इति सूत्रं तस्यार्थं सकलपूर्वपक्षसंकलनायात्रैवाह—**यदि चेति**। **व्यर्थे तस्मि**न्निति दर्व्यादेः साधकतमत्वाद्यभावेनार्थशून्ये तस्मिन् हेतौ शूर्पेऽपि तदभावेन **स्तुतिरनर्थिका स्यादि**त्यर्थः। एतदेव विवृणोति—**शूर्पमपीति**। तेन साधकतमत्वादिना विनेत्यर्थः।

**स्तुतिस्त्विति**। सिद्धान्तसूत्रम्। तत्र तु-शब्दार्थमाह—**[न तु] एतदिति**। हेतुपरत्वम्। "शब्दपूर्वत्वात्"इति व्याचष्टे—**शब्देति**। अन्नकरणत्वस्य होमहेतुताया मानान्तरागोचरत्वादिति भावः। ततः किमित्यत आह—**शब्दश्चेति**। **शूर्पहोमे** शूर्पेण होमे कर्त्तव्य इत्यर्थः। शूर्पेणेति तृतीयाश्रुत्या शूर्पस्य होमकरणत्वावगमादानुमानिकदर्व्याद्यप्राप्तेः होमस्य च शूर्पेण निराकाङ्क्षत्वाच्छूर्पहोम एव हेतुत्वमित्यर्थः। * तथाप्यन्नकरणत्वस्य शूर्पहोमसम्बन्धे हेतुत्वमेवेत्याशङ्क्य "शूर्पेण जुहोति" इति विधिसिद्धत्वेन हेत्वनपेक्षत्वात् स्तुतित्वमेवेति **स्तुतिरिति** सूत्रावयवो योज्यः। निगमनतया सूत्रशेषं योजयति—**तेनेति**। यस्माच्छब्दपूर्वकं शूर्पस्य करणत्वं यस्माच्च हेत्वपदेशस्य स्तुतित्वेनोपपत्तिः तस्माच्छूर्पश्रुतिविरोधाद्धेत्वपदेशानुपपत्त्यभावाच्च न दर्वीपिठरादेर्होमसाधनत्वचोदना तदनुमानमित्यर्थः। न च शूर्पश्रुतिरव्युत्पत्यानुवादत्वान्न होमकरणत्वपरेति वाच्यम्, विध्युद्देशपातिन्यास्तस्यास्तदपेक्षितहोमकरणसमर्पकत्वे सम्भवत्यनुवादत्वकल्पनानुपपत्तेरिति द्रष्टव्यम् ॥ २७ ॥

---

* शूर्पेणेति तावत् करणविभक्तिश्रुत्यैवावरुद्धो होमो नानुमानिकबाधविकल्पसमुच्चयान् प्रतिपद्यते इति तन्त्रवार्त्तिकम्।

**व्यर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥**

इति पुनर्यदुक्तं तत् परिहर्त्तव्यम् ॥ २८ ॥

**अर्थस्तु विधिशेषत्वाद् यथा लोके ॥ २६ ॥**

अस्मत्पक्षेऽर्थोऽस्ति। वाक्यशेषो हि स विधेस्तदा भवति। संवादश्च स्तुतिवचनत्वं तेन यथा वयं शूर्पेणान्नं क्रियमाणं जानीमस्तथा शूर्पेणान्नं क्रियत इत्यवगम्यते। तदा चावर्तमानं स्तोतुं वर्तमानमित्युपदिशति। त्वत्पक्ष एष दोषो यस्य ते हेतुविधिः। विधौ हि न परशब्दार्थः* प्रतीयते। न च वर्तमानमुपदिशन् वेदः शक्यमर्थं विदध्यात्।

---

ननु शूर्पविषयेऽपि साधकतमत्वक्रियावर्त्तमानत्वाद्यर्थाभावात् कथं स्तुतित्वमिति "व्यर्थे स्तुतिः" इति सूत्रार्थस्य पूर्वमुक्तत्वादनुभाषणार्थम् एतत् सूत्रमिति व्याचष्टे—**इति पुनरिति**। तस्य परिहारयोग्यतामाह—**तदिति** ॥ २८ ॥

सूत्रेण परिहरति—**अर्थस्त्विति**। "तु"-शब्दः शङ्काव्यावर्त्तकः। "अर्थ"-शब्दं व्याचष्टे—**अस्मत्पक्ष इति**। **अर्थो**ऽन्नकरणत्वादिरूपः। कुत इत्याशङ्क्य "विधिशेषत्वात्" इति व्याचष्टे—**वाक्येति**। तेन व्रीह्यादिः सर्वनाम्ना परामृष्टः। सत्यपि विधिशेषत्वे कथमर्थसत्तेत्याशङ्क्याह **संवादश्चेति**। विधिशेषतया स्तुतिवचनत्वे चानुवादत्वेन भवितव्यम्, अनुवादश्च मानान्तरसिद्धस्यैवेत्यर्थः। तथापि किमित्याशङ्क्य "यथा लोके" इति व्याचष्टे—**तेनेति**। "शूर्पेण क्रियते" इति श्रुत्या संकीर्त्यत इति अवगम्यत इत्यर्थः। एवमुपयोगित्वमात्रं करणविभक्त्यर्थमभिधाय वर्तमानान्नक्रियात्वाभिधानमुपपादयति—**तदा चेति**। तथा **अवर्तमानम्** अप्यन्नक्रियायोगित्वं शूर्पे **स्तोतुं वर्तमानं व्यपदिशति** श्रुतिरित्यर्थः। "अर्थस्तु विधिशेषत्वात्" इत्यस्य व्यतिरेकं दर्शयन् परपक्षे दोषमाह—**त्वत्पक्ष इति**। **एष इति**। मुख्यत्वाद्यग्रह इति। तत्रापि कथं तदग्रहो दोषस्तत्राह—**यस्येति**। **विधिर**ज्ञातज्ञापनं **हेतु**र्विधिवादित्वात् तवेत्यर्थः।

विधित्वेऽपि कुतो दोषापत्तिरित्यत आह—**विधौ हीति**।

न **परस्यान्यस्य शब्दस्यार्थः** प्रयोजनतया प्रतीयत इत्यर्थः। लक्षणायां हि परशब्दार्थः प्रयोजनं भवति। विधिपक्षे त्वपूर्वार्थविषयत्वान्न लक्षणा युक्तेत्याशयः। भवतु तर्हि मुख्यार्थत्वमत आह—**न हीति**। **वर्तमाना**न्नक्रियं साधकतमं च **उपदिशन् वेद** इत्यर्थः। एकक्रियाविशिष्टस्य शूर्पादेस्तदैव क्रियान्तरायोगात् साधकतमेन च पाकादिना होतुमशक्यत्वादिति भावः।

---

* मुद्रितेषु पुस्तकेषु परः शब्दार्थ इति पाठः।

अस्मत्पक्षे त्वेष परशब्दः परत्र वर्तते यथा लोके बलवान् देवदत्तो यज्ञदत्तादीन् प्रसहत इति। प्रकृष्टबलेऽपि बलवच्छब्दो वर्तमानो न सिंहं शार्दूलं वापेक्ष्य प्रयुज्यते, ये देवदत्तात्तु निकृष्टबलास्तानपेक्ष्य भवति। एवं "तेन ह्यन्नं क्रियते" इति प्रकृष्टान्नकरणेन संस्तवः शूर्पस्य निकृष्टान्यन्यान्यन्न-करणान्यपेक्ष्य भविष्यति ॥ २९ ॥

## यदि च हेतुरवतिष्ठेत निर्देशात् सामान्यादिति चेद-व्यवस्था विधीनां स्यात् ॥ ३० ॥

यद्यपि च भवेदन्नकरणं हेतुर्दर्वीपिठरप्रकाराणां तथापि शूर्प एवावतिष्ठेत। शब्दादन्नकरणं हेतुरिति विज्ञायते। शब्दश्च शूर्पस्याह न दर्वीपिठरादीनाम्।

---

ननु त्वत्पक्षेऽपि मुख्यार्थाभ्युपगमे विरोधः, लक्षणाभ्युपगमे तु स एव दोष इत्याशङ्क्य लाक्षणिक एवार्थः स्वीकर्तव्यः विधिशेषत्वेनानुवादतया प्रमाणान्तरानुसारिण्या लक्षणाया अप्यदोषत्वादित्य[न्यथा] सूत्रयोजनं मत्वाह—**अस्मत्पक्ष** इति। तत्रापि "यथा लोके" इति व्याचष्टे—**यथा लोक इति**। "बलवच्छब्दः प्रकृष्टबले वर्तमानोऽपि" इति सम्बन्धः। यद्यपि भूम्नोऽतिशायनस्य च मतुवर्थत्वाद् विशेषाभिधानाच्च सर्वेभ्यः प्रकृष्टबलत्वं शब्दशक्त्या प्रतीयते, तथापि सिंहादीनामधिकबलत्वावगमान्न तदपेक्ष्यापि बलवति प्रयुक्तः। किन्तु देवदत्तान्निकृष्टबलानपेक्ष्य अधिकबले देवदत्ते स्तुत्यर्थलक्षणया प्रयुक्त इत्यर्थः। दार्ष्टान्तिकमाह—**एवमिति**। शूर्पस्यापि लाङ्गलाद्यपेक्षया प्रकृष्टस्यैवात्यन्तप्रकृष्टत्वेन स्तुतिः 'तेन' इत्यादिना क्रियत इत्यर्थः ॥ २९ ॥

अभ्युपगम्यापि हेतुपरत्वं न दर्व्यादौ प्रसङ्ग इत्याह—**यदि च हेतुरिति**। "यदि चे"त्यादिसूत्रभागं व्याचष्टे—**यद्यपि चेति**। **दर्वीपिठरप्रकाराणां** दर्वीपिठरजातीयानाम् **अन्नकरणत्वं हेतुर्यद्यपि भवेत्** तथापि स हेतुः **शूर्प एव व्यवतिष्ठेते**त्यन्वयः। **दर्वीपिठरप्रकाराणाम्** इत्यनेनात्यन्तसाधकतमत्वाभावेऽपि दर्व्यादिसाधारणं साधकतमत्वरूपं करणत्वं शूर्पस्य दर्शितम्।

ननु कथं शूर्पगतमेवान्नकरणत्वं हेतुः स्यादित्याशङ्क्य "निर्देशात्" इति सूत्रभागं व्याचष्टे—**शब्दादिति**। न त्वकरणत्वसत्तामात्रेणेत्यर्थः। हेतोः शब्दनिर्दिष्टत्वे सत्यपि कथं व्यवस्थेत्यत आह—**शब्दश्चेति**। शूर्पगतस्यान्नकरणत्वस्यैव हेतुत्व-

तद्धि निर्दिश्यते यस्माच्छूर्पेणान्नं क्रियते, तस्माच्छूर्पेण जुहोतीति। यथा यस्माद्बलवदुपध्मातोऽग्निस्तेन मे गृहं दग्धमिति नानग्निरपि बलवदुपध्मातो दहतीति गम्यते। अथ मतं येन येनान्नं क्रियते प्रणाड्या शूर्पादन्येनापि, तेन तेनापि होमः क्रियत इति। अव्यवस्था विधीनां स्यान्न केनचित्। प्रणाड्यान्नं क्रियते। तत्र यावदुक्तं स्याज्जुहोतीति, तावदेवान्नकरणेन जुहोतीति। अस्मत्पक्षे पुनः शूर्पं स्तूयते। तेन ह्यन्नं क्रियते इति वृत्तान्तान्वाख्यानं न च वृत्तान्तज्ञापनाय, किं तर्हि प्ररोचनायैव। तस्माद्धेतुवन्निगदस्यापि स्तुतिरेव कार्यमिति ॥ ३० ॥

---

माहेत्यर्थः। कथमिदमवगम्यते तत्राह—**तद्धीति**। शूर्पं हि होमसम्बन्धितया **निर्दिश्यते** प्रतिज्ञायत इत्यर्थः। अन्यस्मिंश्च प्रतिज्ञाते अन्यगतस्य हेतुत्वायोगात् शूर्पगतमेवान्नकरणत्वं हेतुरिति भावः।

तत्र सिद्धं वाक्यार्थमाह—**यस्मादिति**। "**शूर्पेण जुहोती**"ति इति। तेन वाक्यार्थः सिद्धो भवतीति शेषः।

ननु 'यस्माद् धूमवान् पर्वतस्तस्मादग्निमान्' इत्यादौ यथा न पर्वतगतत्वं विशेषणमादाय हेतुत्वं तद्वदिह किं न स्यादित्याशङ्क्य नेदं सामान्यतो दृष्टम्, किन्तु विशेषतो दृष्टम् अत उदाहरति—**यथेति**। न ह्यत्र बलवदुपध्मातत्वमात्रं गृहदाहकत्वे हेतुः, शङ्खादेरपि प्रसङ्गात्, तेनाग्निगतत्वेन विशेषितत्वं तद्वदत्रापीति भावः। "सामान्यादिति चेत्" इति सूत्रावयवं व्याचष्टे—**अथ मतमिति**। **अन्येन** दर्व्यादिनेत्यर्थः। **तेनेति** तृतीया। सर्वनामार्थस्य शूर्पस्य बाधादन्नकरणत्वमात्रं हेतुः स्यादिति शङ्कार्थः। सूत्रशेषेणोत्तरमाह—**अव्यवस्थेति**। 'तथा सती'ति शेषः। अतिप्रसङ्गं विवृणोति—**न केनचिदिति**। सर्वेणापि यथाकथञ्चित् क्रियत इत्यर्थः। तत्र च विधिवैयर्थ्यमित्याह—**तत्रेति**। जुहोतीत्युक्तेऽपि येन केनचिद्धोतव्यमिति तावत् प्रतीयते। अन्नकरणेनेत्युक्तेऽपि सर्वस्यान्नकरणत्वात् सर्वेण च होतुमशक्यत्वाद् येन केनचिदित्येव प्रतीयते, ततो विधिरनर्थकः स्यादिति प्रत्ययस्यैव बाधः। तस्माद्धेतुत्वाभ्युपगमेऽपि शूर्पगतमेवान्नकरणत्वं हेतुरिति भावः। एवमभ्युपगम्यापि हेतुत्वं व्यवस्थामुक्त्वाभ्युपगमं त्यजन् स्वपक्षे हेत्वनभिधानात् हि-शब्दानुपपत्तिमाशङ्क्य परिहरति—**अस्मत्पक्ष इति**। प्रसिद्धान्नकरणत्वाभिधानेन स्तुत्यर्थो **हि**शब्द इत्यर्थः।

ननु कथमस्य स्तुतिपरत्वं वृत्तान्तपरत्वप्रतीतेरित्यत आह—**वृत्तान्तेति**। वृत्तान्तस्य

## तदर्थशास्त्रात् ॥ ३१ क॥

अथेदानीं किं विवक्षितवचना मन्त्रा उताविवक्षितवचनाः? किमर्थप्रकाशनेन यागस्योपकुर्वन्ति, उतोच्चारणमात्रेणेति? यद्युच्चारणमात्रेण, तदा न नियोगतो "बर्हिर्देवसदनं दामि" इत्येष बर्हिर्लवने विनियुज्येत। अभिधानेन चेत्, प्रकरणेन विज्ञाताङ्गभावो नान्यस्योपकर्तुं शक्नोतीत्यन्तरेणापि वचनं बर्हिर्लवन एव विनियुज्येतेति। तदेवमवगच्छामः। उच्चारणमात्रेणैवोपकुर्वन्तीति। कुतः? "तदर्थशास्त्रात्"।

---

मानान्तरसिद्धतया तज्ज्ञानेऽनुप्रयोगात् स्तुतिपरत्वमेव वाक्यस्यावगम्यते इत्यर्थः। तस्माद् विधिवन्निगदानामिवैषामपि स्तुतिपरत्वमेवेत्यधिकरणार्थमुपसंहरति—**तस्मादिति**। शूर्पस्यापि मुख्यकरणत्वाभावाद् विधौ च लक्षणायोगात् हेतुत्वानुपपत्तेरिति। **इतिः** अधिकरणसमाप्तिं द्योतयति ॥ ३० ॥

सङ्गतिं वदन् विषयसंशयौ दर्शयति—**अथेत्यादिना**। **इति**-शब्दादूर्ध्वं 'विचार्यते' इत्यध्याहारः। अत्र धर्मप्रमाणभूतविध्येकवाक्यतयार्थवादप्रामाण्येऽभिहिते सति, अविवक्षितार्थत्वेन मन्त्राणां तदन्तर्भावादप्रामाण्यहेतुप्रत्युदाहरणेन पूर्वपक्षवादिना प्रत्यवस्थानादस्यार्थवादविचारसङ्गतिः **अथशब्देनोक्ता**। "कोऽर्थवादः? को वा न" इति कोष्ठशोधनिकात्मकस्याधिकरणद्वयस्यार्थवादाधिकरणशेषत्वादव्यवधायकत्वम्—**इदानीम्** इत्यनेन दर्शितम्। प्रकरणान्तरत्वाच्चास्य समनन्तरसङ्गत्यभावो न दोषाय। **विवक्षितम्** अनन्यपरं **वचनम्** अर्थाभिधानं येषां ते तथा। अत्र चार्थवतामपि वाक्यानामुभयथा प्रयोगदर्शनात् संशयः। विवक्षितवचनत्वमपि मन्त्राणां न विधित्वेन स्तुतित्वेन वा किन्तु विहितार्थप्रकाशकतया अनुष्ठानाङ्गत्वेनेति दर्शयन् संशयं विवृणोति—**किमर्थेति**। विनानुष्ठेयार्थस्मृत्येति नात्र चोऽर्थः। पूर्वोत्तरपक्षप्रयोजनमाह—**यद्युच्चारणेति**। पूर्वपक्षे सामान्यविनियोगस्य प्रकरणसिद्धत्वेऽपि यस्य "बर्हिर्देवसदनं दामि" इत्यादेर्विशेषविनियोगश्रुत्यभावस्तस्य नियोगतो बर्हिर्लवनादौ प्रयोगोऽप्रमाणमिति कर्मविशेषानादरेण यत्र क्वचन प्रयोगप्रसङ्गः।

सिद्धान्ते तु—सिद्धे सामान्यविनियोगे सामर्थ्यादेव विशेषविनियोगसिद्धेः, अन्तरेणापि वचनं कर्मविशेषादरः फलमित्यर्थः। **तत्र** एवं विचारे सतीत्यर्थः। ***एतदिति** मन्त्रोपकारकत्वम्। **एवमित्युक्तमुपकारकत्वप्रकारमाह—उच्चारणेति**। यद्यपि कर्मकालप्रयोज्यानामपि मन्त्राणामर्थाभिधानार्थता प्रतीयते तथापि ध्यानादिनापि अनुतिष्ठा-

**यदभिधानसमर्थो मन्त्रस्तत्रैवैनं शास्त्रं निबध्नाति "उरुप्रथा उरु प्रथस्व [वा-स० १।१२] इति पुरोडाशं प्रथयति" इति वचनमिदमनर्थकं यद्यर्थाभिधानेनोपकुर्वन्ति। अथोच्चारणमात्रेण, ततो वक्तव्यो विनियोगः, उक्तश्च। अतो नार्थाभिधानेन। यथा सासः पुरुषः परेण नेत्रीयते नूनमक्षिभ्यां न पश्यतीति गम्यते।**

**नन्वर्थवादार्थं भविष्यतीति चेत्, न हि। येन विधीयते तस्य वाक्य-शेषोऽर्थवाद इत्युक्तम्। न च निरपेक्षेण विहितेऽर्थवादेन किञ्चिदपि प्रयोजनं क्रियते। अतो नार्थवादार्थं वचनम्। तथाऽभ्र्यादानसमर्था मन्त्राः**

---

सितार्थस्मृतिसिद्धेरभिधानार्थत्वेऽपि अदृष्टकल्पनासाम्यादुच्चारणाभिधानार्थत्वसन्देहः उच्चारणं विनार्थप्रत्ययासिद्धेः प्राथम्यावश्यकत्वाभ्याम् उच्चारणार्थतैव न्याय्येति भावः।

एवं न्यायबलेन मन्त्रमात्रस्यादृष्टार्थतामुक्त्वा तद्विशेषेषु लिङ्गबलेनापि तदुक्तं पृच्छति—**कुत इति**। सूत्रेणोत्तरमाह—**तदर्थेति**। यस्मिन्नर्थे मन्त्रस्याभिधानसामर्थ्यं तस्मिन्नेव विनियोजकशास्त्रदर्शनान्न सामर्थ्यं विनियोजकमिति व्याचष्टे—**यदिति**। यद्यपि परिहारसूत्रक्रमानुरोधेनास्मिन् सूत्रे अभ्र्यादानशास्त्रमारभ्योदाहर्तव्यं तथापि कथञ्चिदुदाहृतैरपि प्रकृतमन्त्रानर्थक्यसिद्धेः व्यत्यासेनोपन्यास इत्यवगन्तव्यम्।

ननु सामर्थ्यस्यापि दर्शनात् कथं शास्त्रस्यैव विनियोजकत्वमत आह—**वचनमिति**। **इदमिति** वचनस्य प्रत्यक्षत्वाभिधानेनार्थाभिधानेनापकारस्य प्रतिपन्नत्वेनानादेयत्वं सूचयति। उच्चारणोपकारत्वपक्षे तु विनियोजकान्तराभावात् शास्त्रमर्थवदित्याह—**अथेति**। न च विनियोगे विगानम् इति वदन् **इदमि**त्युक्तं विवृणोति—**उक्तश्चेति**। नार्थाभिधानेनोप-कुर्वन्तीत्यनुषङ्गः। मन्त्ररूपालोचनायामपि परेण विनियोगं दृष्ट्वा तदभावं प्रत्येष्यत इत्यत्र दृष्टान्तमाह—**तद् यथेति**। साक्षत्वं च प्रतिभासतो न वस्तुतः। लिङ्गप्रकरणानुमित-मन्त्रविधिस्तुल्यार्थत्वेनाप्यर्थवत्त्वान्नानर्थकमिति चोदयति—**नन्विति**। परिहरति—**न हीति**। तत्र हेतु**र्यथेति येनेति**। विधिनैकवाक्यत्वमर्थवत्त्वे कारणमुक्तम् अर्थवादाधि-करणे इत्यर्थः। ततः किमत आह—**न चेति**। मन्त्रलिङ्गेन प्रकरणेन वा कल्पितस्य विनियोगविधेः स्वात्मसमीपे अर्थवादमपश्यतः स्वयमेव प्ररोचनाशक्त्याविर्भावेण निवृत्ता-पेक्षत्वान्न दूरस्थया स्तुत्या प्रयोजनमित्यर्थः। फलितमाह—**अत इति**। इह तु शास्त्रस्यार्थवादत्वाभावेऽपि गुणविधित्वमस्त्विति शङ्कां निराकर्तुमस्यैव सूत्रस्योदाहरणान्तर-माह—**तथेति**। **अभ्र्यादानसमर्था** अभ्र्यादानाभिधानसमर्था इत्यर्थः।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| April, 1933 | १८५४ शकीये चैत्रे<br>१५श-वर्षस्य १२श-संख्या | Vol. XV. No 12. |


## आत्मकारकः


[ निबन्धकः—ज्योतिर्वाचस्पतिः ]


प्रायेण हि ज्यौतिषिका अस्मद्देशीया लग्नस्य ग्रहाणां च तत्तद्राशिस्थिति-मेवावलम्ब्य प्रवर्तन्ते कुण्डलीविचारे। यत्र कुत्रापि लग्नं भवतु ततो द्वितीयं राशिं द्वितीयं भावं तृतीयं च राशिं तृतीयं भावं परिकल्प्य द्वितीयराशिस्थितं च ग्रहं द्वितीयभावस्थं तृतीयराशिस्थितं च ग्रहं तृतीयभावावस्थितमाकलय्य क्रमेण फलानि ब्रुवते। तथाहि कस्यचिच्चे-न्मेषोदये जन्म, तर्हि मेषस्थं ग्रहं लग्नस्थं वृषस्थं द्वितीयस्थं कन्यास्थं षष्ठस्थं मन्यन्ते, मङ्गलञ्च लग्नाष्टमाधिपतिं शुक्रं द्वितीयसप्तमाधिपं शनैश्चरञ्च दशमैकादशाधिपतिं समाकलयन्ति। यद्यपि प्रायेण सर्वेष्वपि ज्योति-र्ग्रन्थेषु भावसाधनप्रणाली विस्तरतः समुपनिबद्धा, तथापि ज्योतिर्वित्सु स्वल्पैरेव व्यवहारकाले तस्या उपयोगः क्रियते, भूयांस एव विचारावसरे विहाय भावान् राशीनेव समनुगृह्णन्ति, लग्नाद्द्वितीयादिस्थानस्थितानेव ग्रहान् द्वितीयादिभावस्थान् मन्यन्ते। यैस्तावत् परमार्थत एव ज्योतिषशास्त्रे व्युत्पत्तिरधिगता विजानन्त्येव ते भावस्पष्टानि ग्रहस्पष्टानि च विचारस्य

जीवितमेव इति, परं तैरपि बहुत्र सर्वं विपर्यास्यते, बहुष्वेव स्थलेषु विंशोत्तर्य्या दशाया अष्टोत्तर्याश्च दशाया विचारस्य नियमा भावविचारेऽपि प्रवर्त्त्य सर्वं विप्लाव्यते, तेन च प्रसरन्ति बहवो विप्रतिपत्तयः। केचन हि भावविचारेऽपि दशाविचारविषयकं ग्रहाणां पारिभाषिकं शुभाशुभत्व-मतिदिशन्ति, केचन पुनः परित्यज्य राशीन् सर्वथा भावानेव समवलम्ब्य विचारायोद्युञ्जते। एतत् सर्वं राशिग्रहभावतत्त्वानाकलनविजृम्भितमेव। यद्यप्येतदापाततोऽप्रकृतं प्रतिभाति तथापि विस्तरेणोच्यते, राश्यादिविषयकं यथार्थज्ञानमन्तरेणात्मकारकस्य—अन्ततो गत्वा मनुप्रतिपादितस्यात्म-कारकस्य तत्त्वावबोधो दुःसम्पाद इति।

न खलु राशिविषये ग्रहविषये वोपलभ्यते विशेषतो मतविभेदो दैवज्ञानां प्राच्यानाम्। ते हि नाक्षत्रं राशिं—निरयनं राशिमेव राशिं व्यपदिशन्ति। यद्यपि प्रतीच्यैर्गणकैरत्र प्रत्यवस्थीयते तथापि नात्र तदिदानीं विचारणीयमित्युपेक्ष्यते। मदीयेऽस्मिन् प्रबन्धे सर्वत्र राशिशब्देन निरयनराशिरेव ग्राह्यः ग्रहशब्देन च विज्ञाताविज्ञाताः सर्वे ग्रहा रविचन्द्र-राहुकेतवश्चावबोद्धव्याः।

न खलु भावविषये कस्मिन्नपि ज्योतिर्ग्रन्थे विस्पष्टमुपवर्णनं मयोपलक्षितम्। प्रायेण प्राच्येषु पाश्चात्त्येषु च प्रबन्धेषु भावमधिकृत्य यद् यदुपनिबद्धं तस्य सर्वस्यालोचनेन महान् बुद्धिविभ्रम एवोपजायते इति मे मतिः। केषाञ्चन स्थलानामध्ययनेन भावा राशय एव विस्तृताः, एकस्या राशेर्बिन्दुविशेषादारभ्य तदुत्तरवर्त्तिनो राशेस्तमेव बिन्दुमभिव्याप्यावस्थिता इति प्रतीतिरुपजायते, स्थलान्तरस्य पुनरालोचनेन बिन्दुपरिमिता एव भावा इति भवति प्रत्ययः। भावस्पष्टनिर्धारणाय यास्तावत् प्रणाल्यः समुद्भावितास्तासामनुशीलनेन भावानां बिन्दुरूपत्वमेवावधार्यते, भावस्य बिन्दुव्यतिरिक्तत्वे च भावस्पष्टशब्दस्यैवानर्थक्यमापतेत्। भावग्रहयो-र्दृष्टिसम्बन्धस्यापि मूले कुठारः समर्प्येत। एवञ्च वाचकस्य मानसे भावमधिकृत्य पारमार्थिकी कापि प्रतीतिर्नैव प्रभवति पदं निधातुम्।

प्रतीच्येषु निबन्धेषु भावविशेषस्पष्टादारभ्य तद्द्वितीयभावस्पष्टं यावत् स एव भाव इति निर्धारितम्। तथाहि सिंहस्य विंशतितमेंऽशें लग्नश्चेत्, द्वैतीयीकस्य च भावस्य कन्याया ऊनविंशेंऽशेऽवस्थितिवशात्, कुजस्य च कन्यायाः पञ्चमांशे समवस्थानं तर्हि पाश्चात्त्यमतेन मङ्गलस्य लग्न एवावस्थानं बोद्धव्यम्, प्राच्यमतेन तु कुजस्य द्वितीयभावेऽवस्थितिरायाति, भावस्पष्टानां भावमध्यबिन्दुत्वाभ्युपगमात् भावद्वितयमध्यबिन्दोश्च भावसन्धितया व्यपदेशात्। अत एव प्रकृते कन्यायाः ४° ३०″ कलायामेव लग्नभावस्यावसानम्, तत एवारभ्य द्वितीयभावस्य प्रवृत्तिः।

एवं च जाग्रति मतविरोधे ज्योतिःशास्त्रस्य समूलकत्वमेव संशयदोलामधिरोहति। न खलु एकस्यामेव कुण्डल्यामेकस्यैव ग्रहस्य युगपल्लग्ने द्वितीये चावस्थितिः कथमपि सम्भवति। अत एवात्र मूले कोऽपि प्रमादो वर्तत इत्यवश्यमभ्युपगन्तव्यम्। एतत्तु नितरामाश्चर्यास्पदं यद् यद्यपि पञ्चाशद् वर्षाणि ज्योतिःशास्त्रचर्चाऽऽङ्गलशिक्षासंस्कृतमतीनां मध्ये प्रचलिता तथापि कस्यापि दृष्टिर्विपर्ययेऽस्मिन्न निपतितेति।

वस्तुतस्तु भावा बिन्द्वात्मका एव। येषां हि गणितशास्त्रे स्वल्पोऽपि प्रवेशस्तैरवश्यमभ्युपगम्येत न खलु भावा बिन्दुव्यतिरिक्ता इति। इदानीं के तावदिमे बिन्दव इति विचार्यते। मम मतेन कालविशेषे स्थानविशेषे यैस्तावद् द्वादशभिर्बिन्दुभिः पृथिव्या राशिचक्रस्य प्रभावोऽनुभूयते त एव द्वादश बिन्दवस्तत्कालीना भावबिन्दवः। येषां च ग्रहनक्षत्राणां प्रभावो द्वादशस्वमीषु बिन्दुषु निपतति त एव तदानीं पृथिव्या उपरि स्वीयं प्रभावं विस्तारयितुं प्रभवन्ति, यस्य च ग्रहस्य नक्षत्रस्य वा यावान् प्रभावः (अल्पीयान् वा भूयान् वा) भावबिन्दुविशेषस्योपरि वर्तेत तावानेव प्रभावः काले तस्मिन् पृथिव्यास्तस्मिन् स्थानेऽभिव्यज्येत। तदानीन्तनस्य च जातकस्याप्युपरि ग्रहनक्षत्राणां प्रभावस्तेनैव क्रमेण निपतति। अत्र चोपपत्तौ विशेषतोऽवधातव्यं वाचकमहाभागैः, उपरिष्टादात्मकारकग्रहमधिकृत्य यद् यद् वक्ष्यते तस्य सर्वस्यैवैव मूलमिति।

स्मर्यतां तावज्जैमिनीयं सूत्रम्—"आत्माधिकः कलादिभिर्नभोगः सप्तानामष्टानां वा" इति। सूत्रस्यास्यायमेव सरलोऽर्थः—राहुवर्जं सप्तसु ग्रहेषु राह्वन्तर्भावेण वाष्टसु ग्रहेषु यस्य ग्रहस्य कलानां सर्वत आधिक्यं स एवात्मकारको बोद्धव्य इति। टीकाकृद्भिश्चैतदन्यथैव व्याख्यातम्। तन्मतेन ग्रहाणां स्पष्टेषु यस्य ग्रहस्यांशाधिक्यं स एवात्मकारक इति। तथाच नीलकण्ठेन स्वरचितसुबोधिन्याख्यायां व्याख्यायामुक्तम्—"कलाया आदयः अंशाः तैः अंशैः अंशादिभिरिति यावत्" इति। वाराणसीस्थहिन्दुविश्वविद्यालयाध्यापकेन विद्वद्वर्येण रामरतनझामहोदयेनापि स्वप्रणीतायां टीकायाम् "कलादिभिः कलाशब्दस्याप्यंशवाचकत्वाद् अंशादिभिः" इति विलिखितम्। एतदुपष्टम्भकतया च तेनोक्तम्—वृद्धवाक्ये भागशब्देनांशपदस्य प्रसिद्धत्वादृषिणा कलादिभिरित्युक्तम् इति। अत्र वृद्धः पराशरः ऋषिश्च जैमिनिः इति बोद्धव्यम्। एवञ्च यद्यपि जैमिनिना महर्षिणा महता कण्ठेन कलादिभिरित्युद्घोषितं सर्वै रेव टीकाकृद्भिरत्र तथापि कलाशब्दस्यांशपरत्वप्रतिपादने महानेवाग्रहः प्रकटितः। मम त्वेतद् विसदृशमिव प्रतिभाति। जैमिनिना हि विनैवायासमंशादिभिरिति व्यलेखिष्यत तथा चेत्तेनामंस्यत। तेन तु तदकृत्वा कलादिभिरिति विस्पष्टमेवोक्तम्। अत्रैतदपि विचारणीयं यत् "स ईष्टे बन्धमोक्षयोः" इत्येव तेनात्मकारकस्य लक्षणं व्यधायि। एतेनात्मकारकस्य जातकभाग्यनियन्तृत्वं कर्तुमकर्तुमन्यथाकर्तुञ्च सामर्थ्यं सर्वथा सिध्यति। यस्य ग्रहस्य स्पष्टाधिक्यं स एवात्मकारक इति स्वीकारे यदा यदा प्रातरारभ्याऽऽसायमेकस्यैव ग्रहस्य स्पष्टाधिक्यं तदा क्षितितले वर्तमानानामखिलानामेव प्राणिनामेकस्यैव ग्रहस्यात्मकारकत्वादर्थाद् बन्धमोक्षनियन्त्रकत्वात् सर्वेषामेव प्रायेण फलानामैक्यं स्यात्। एतत् प्रत्यक्षविरुद्धमेव। अत एव सर्वथाऽसमीचीनमेवेदं मतमिति मे प्रतिभाति। मम मतेन न खलु महर्षिणा जैमिनिनात्र कलाशब्दो भावस्पष्टांशार्थतया प्रयुक्तः, किन्तु चयबलक्षयबलापरपर्य्यायभावस्थितिबलार्थे एव प्रयुक्तः। यस्तावद् ग्रहः सर्वथा भावबिन्दोरुपर्येवावतिष्ठते तस्य षष्टिकलापरिमितं पूर्णं बलम्।

यथा यथा च ग्रहस्य भावबिन्दुतो दूरेऽवस्थितिस्तथा तथा बलस्याप्यल्पीयस्त्वम्। "आत्माधिकः कलादिभिर्नभोगः" इत्यस्य "यो नाम ग्रहो भावबिन्दोरासन्नतमः, चयबलेन क्षयबलेन वा यस्य कलाधिक्यं स एवात्मकारकः" इत्यर्थश्चेत् परिकल्प्यते तर्ह्येकनस्तावत् क्लिष्टकल्पनादोषनिर्मुक्तिरपरतश्च सूत्रस्य सङ्गतार्थत्वं सिध्यति। यां कामपि प्रमादपरिशून्यां कुण्डलीमादाय प्रचलितया प्रणाल्या मदुद्भावितया चानया प्रणाल्या विचारयन्तः सर्व एव प्रतिपद्येरन् सूत्रस्य मदुक्त एवार्थः समीचीनः टीकाकृत्कल्पितश्च प्रामादिक इति।

विषयमिमधिकृत्य वङ्गभाषया मया पुस्तकमेकं प्रणीयते, तच्चाचिरादेव ज्योतिषपरिषत्तः प्रकाशयिष्यते। तत्रात्मकारकस्य ग्रहस्य तत्तद्राशिसमवस्थानफलानि विस्तरेणोपवर्णयिष्यन्ते। मया सहस्रशः प्रणाल्या एतस्याः प्रयोगः परीक्षितः, जन्मकालस्य पञ्चपनिमेषतारतम्येन ग्रहसंस्थानस्य लग्नस्य चाविशिष्टत्वेऽप्यात्मकारकग्रहपरिवृत्तितः सुमहान् फलविभेदः केन वा न प्रत्यक्षीकृतः? अत एव सानुनयं सम्प्रार्थ्यते, भवन्तोऽपि परीक्षन्तां प्रणालीमिमां ततश्च प्रतिपन्ना एतस्या याथार्थ्यं सुदूरमुत्सार्यतां प्रचलिता प्रणालीति शिवम्।

---

## उद्भटश्लोकौ

तात वाभट मा रोदीः कर्मणां गतिरीदृशी।
दुषधातोरिवास्माकं दोषसम्पत्तये गुणाः॥
निजपतिराद्यः प्रणयी हरिर्द्वितीयः करोमि किं गोपि।
श्रृणु सखि पाणिनिसूत्रं विप्रतिषेधे परं कार्यम्॥

---

# यज्ञेश्वरस्य यज्ञः*

[ निबन्धिका—श्रीमती तुहिनिका देवी काव्यतीर्थः बि-ए ]

एकदा खलु यज्ञेश्वरस्यार्थिकी परिस्थितिः शोभनैवासीत्। अधुना तु जीर्णभग्नेष्टकालयं भेकभुजङ्गाजिनापत्रादिषु समर्प्य भगवद्गीतासाहचर्येण पर्णशालायामसौ कालं नयति। एकादशभ्यो वर्षेभ्यः पूर्वं तस्य कन्यकैकाऽजायत। तदानीं खलु वंशस्य सौभाग्यचन्द्रमाः कलामात्रशेषः संवृत्तः। अत एव साकूतं कन्यायाः कमलेति नाम व्यधायि। कदाचित् कौशलेनानेन चपलां श्रियं दुहितृरूपेण गृहे संस्थापयितुं प्रभवेदिति। न खलूपायेनानेन लक्ष्मीर्बन्धनमुपागमत्, परं कन्याया आनने स्वां सुषमां समर्पितवती। यत् सत्यं परमरमणीयासौ बाला।

न खलु कन्याविवाहमधिकृत्य यज्ञेश्वरस्य हृदये कदापि दुरधिरोहिण्याऽऽशाया पदमकारि। समीपवर्तिने यस्मै कस्मा अपि सत्पात्राय कन्यकां प्रतिपादयितुमसौ सज्ज आसीत्। परं तस्य ज्येष्ठतातपत्नी "न खलु परमप्रेमास्पदं कमलां धनिगृहमन्तरेणान्यत्र प्रयच्छेयमि"ति गृहीतव्रतासीत्। तस्याः स्वीयमल्पं वित्तमासीत्, सत्पात्रं चेल्लभ्येत तर्हि तत् प्रदीयेतेत्यस्याः सङ्कल्पः।

अन्ततश्च ज्येष्ठतातपत्न्या प्रणोदितो यज्ञेश्वरः शास्त्राध्ययनध्वनिमुखरं शान्तरसास्पदं पल्लीगृहं परित्यज्य पात्रान्वेषणाय निःसृतः राजसाहीपत्तने च सम्बन्धिनः कस्यचन व्यवहाराजीवस्य सद्मन्याश्रयं परिजग्राह।

अस्य च व्यवहाराजीवस्योपजीव्य आसीद् भूस्वामी गौरचन्द्रचतुर्धुरीणः। तस्य चैक एव तनूजो विभूतिभूषणोऽस्यैव व्यवहाराजीवस्याध्यक्ष्येण पाठशालायामधीयन्नासीत्। कदा तावत् तरुणेनानेन बालिकासौ सन्दृष्टा तद् भगवान् प्रजापतिरेव विजानाति।

---

* कविसम्राजो रवीन्द्रनाथठाकुरमहोदयस्याख्यानस्यानुवादः।

परं प्रजापतेः कौशलं कथं वा यज्ञेश्वरोऽवबुध्येत। अत एव विभूतिगता कापि दुराशा कदापि तस्य मानसे नोदयमविन्दत। शान्त-प्रकृतेर्यज्ञेश्वरस्याऽऽशाप्यल्पीयसी, साहसमप्यल्पम्। विभूतिसदृशस्तरुण-स्तस्य जामाता स्यादिति कथमपि सम्भाव्यतया न तस्य प्रत्यभासत।

व्यवहाराजीवस्य प्रयत्नेन नातिसुन्दरस्य कस्यचन पात्रस्य वार्तोपलब्धा। मा तावद् वर्ततां तस्य बुद्धिवैभवं वित्तवैभवं तस्यास्त्येव। यद्यपि तेनैकापि परीक्षा न दत्ता, तथापि राजकोषे ३२७५सम्मितः करः प्रदीयते।

अथैकदा पात्रपक्षीयाः समागत्य कन्याग्रहणे सम्मतिं ज्ञापयित्वा नानाविधानि मृष्टान्नान्यभुञ्जत। ततश्च नातिचिरमागत्य विभूतिभूषणेन समा-कर्णितोऽयं वृत्तान्तः। हर्षातिरेकेण यज्ञेश्वरस्तमपि मृष्टान्नानि भोजयितुमुद-युङ्क्त। परं क्षुधाया निरतिशयमसद्भावं विज्ञाप्य विभूतिः किमपि नोपायुङ्क्त, केनापि साकं सम्यक्तया संकथादिकमपि नाकरोत्, गृहमेव प्रत्यावर्तत।

तस्मिन्नेव दिने सायं व्यवहाराजीवमहोदयेन विभूतिसकाशात् पत्र-मेकमधिगतम्। तस्य च तात्पर्यमिदमेव यदतिमात्रं रुचिता मे यज्ञेश्वरस्य दुहिता, अहञ्च तां परिणेतुं भृशमुत्सुक इति। व्यवहाराजीवोऽचिन्तयत्, अहो विषममिदमापतितम्। गौरसुन्दरमहोदयेन मंस्यते मयैव स्ववान्धव-तनयया तस्य पुत्रस्य परिणयसम्पादनार्थं कौशलं क्रियते इति।

ततश्च ससम्भ्रममसौ यज्ञेश्वरं स्वं देशं प्रेषयामास, पूर्वोक्तेन च पात्रेण सह विवाहस्य दिवसं यावच्छक्यं सन्निकृष्टं व्यधात्। विभूति-श्चाहूय परिदर्शकमहोदयेन सनिर्बन्धमुक्तम्, न खलु विद्याभ्यासं वर्जयित्वा विषयान्तरे लेशतोऽप्यभिनिवेष्टव्यमिति। तदाकर्ण्य क्रोधाच्चतुर्गुणं ववृधे तस्य संरम्भः।

यावच्च विवाहस्य समुद्योगः प्रचलति तावदेकदा यज्ञेश्वरस्य पर्णकुटीरं विभूतिभूषणः स्वयमेव सम्प्राप्तः। यज्ञेश्वरेण ससम्भ्रममुक्तम्—एह्येहि

प्रथमतस्तेन कोप एव प्रकटीकृतः। विभूतिभूषण आनमिताननस्तूर्ष्णीं स्थितः। ततश्च गौरसुन्दरः कथञ्चित् प्रशमितकोपावेशः स्वात्मानं संशोध्य प्रोवाच, अपि मन्यसे तावदहं शुल्कलोभेन त्वामेवं ब्रवीमि ? मैवं सम्भावय। न खल्वहं तादृशो नीचो यथा स्वपुत्रमधिकृत्य वैवाहिकेन साकं मूल्यनिर्धारणं करोमि। परं धनिककुलसम्भूतैव कन्याऽपेक्ष्यते।

विभूतिभूषणेन प्रतिपादितम् यज्ञेश्वरः समुच्चकुलसम्भूत एव, केवलं साम्प्रतं क्षीणविभवः सञ्जातः

गौरसुन्दरोऽगतिकतया विवाहमन्वजानात्, मनसा पुनर्यज्ञेश्वराय भृशमकुप्यत्।

ततश्च पक्षयोरुभयोः प्रवृत्ता कथोपकथनिका. सर्वं च स्थिरीकृतम्, केवलं विवाहस्थानमधिकृत्य विप्रतिपत्तयः कथमपि न निराकृताः। गौरसुन्दरो ह्येककस्य पुत्रस्य विवाहं महताऽऽडम्बरेण सम्पादयितुमैहत परं जीर्ण-शिवालयसंलग्ने तस्मिन् पर्णकुटीरे सर्वं वाद्यादिकं काननकौमुदीकल्पं स्यात्। अत एव स्वगृहे एव विवाहसभाऽनुष्ठेयेति तस्य निर्बन्धः।

तच्छ्रुत्वा मातृहीनायाः कन्यकाया मातामह्या प्रारब्धं क्रन्दनम्। "अस्माकमपि तावदेकदा सुदिनमेवासीत्, अद्य तावल्लक्ष्मीर्विमुखेति किं नाक्षुण्णं तिष्ठेत् पितृपुरुषाणां गौरवम्। न खल्वेतत् कदाचिदपि स्यात्। अस्मदीयं भवनं तार्णं वा भवतु यादृक् तादृग् वा भवतु सर्वथाऽत्रैव निर्वर्तनीयो विवाहमहोत्सवः" इति।

एतावता च शान्तप्रकृतिर्यज्ञेश्वरः संशयदोलायां निपातितः। अन्ततश्च विभूतिभूषणस्य प्रयत्नेन कन्यागृह एव विवाहः स्थिरीकृतः।

एतेन च गौरसुन्दरस्तत्पक्षीयाश्च पूर्वतोऽप्यधिकमकुप्यन् कन्यापित्रे। सर्वैरेव स्थिरीकृतम् अवश्यमवमाननीयोऽसौ स्पर्धितो दरिद्र इति। ये तावद् वरानुयायिनः समाहृतास्ते विशालतया सेनाविशेष-मनुचक्रुः। विषयमिममधिकृत्य गौरसुन्दरो लेशतोऽपि पुत्रेण साकं न मन्त्रयामास।

वैशाख एव मासि निर्धारितो विवाहदिवसः। यज्ञेश्वरेण सर्वस्वं व्ययीकृत्य समाहृताः सम्भाराः। अभिनवं तृणादिमयं छदिर्बद्धं, पावनाप्रदेशतश्च घृतसमिताशर्करादीनामानयनप्रबन्धोऽपि कृतः। यत् खलु निगूढं सञ्चितधनं शरणीकृत्य ज्येष्ठतातपत्न्या स्वगृहे विवाहोत्सवनिर्वर्तनार्थं निर्बन्धः कृतः, तस्य प्रायेणान्तिमापि कपर्दिका तया निःसार्य प्रदत्ता।

अवसरे चास्मिन्नधन्यस्य तस्य भागधेयविपर्यासाद् विवाहदिनाह्निद्वितयात् प्रागेव प्रारब्धं प्रचण्डं झटिकासहकृतं वारिवर्षणम्। प्रभञ्जनवेगश्चेत् कदापि निवर्तते, वर्षणं तु नैव विरमति, कदाचिदुपशान्तमपि वर्षणं पुनरपि द्विगुणतरवेगेन प्रवर्तते। व्यतीतविंशपञ्चविंशानि वर्षाणि यावदीदृशं वर्षणं केनापि न प्रत्यक्षीकृतम्।

पूर्वत एव गौरसुन्दरेण कतिचिद् गजेन्द्राः प्रवहणानि च बाष्पीयशकटविरामप्रदेशे सज्जीकृतानि। इदानीं पुनः सन्निहितेभ्यो ग्रामेभ्यो यज्ञेश्वरेण छदिश्छादिता गोशकटिकाः समाहर्तुं प्रारब्धम्। दुर्दिने शाकटिकाः पदात् पदमपि चलितुं नेच्छन्ति, साञ्जलिबन्धमनुनीय द्विगुणं च शुल्कं प्रतिश्रुत्य यज्ञेश्वरः कथञ्चित् तान् सम्मतानकरोत्। वरानुयायिषु तु येऽगत्या शकट आरूढास्ते क्रोधेनाग्निकल्पाः संवृत्ताः।

ग्रामस्य पन्था बद्धसलिलपूर्णः, तत्र च हस्तिनः पादा दृढतरं पङ्के संसज्जन्ते स्म, शकटस्य च चक्राणि दुष्कराण्युद्धर्तुम्। तदापि नैव विरराम वर्षणम्। सलिलसिक्ताः कर्दमविलिप्ताश्च वरानुयायिनो विधिविडम्बनां कन्यापित्रे निर्यातयितुं मनो बबन्धुः। विपर्यस्तभागधेयेन यज्ञेश्वरेणैवैतस्याकालिकस्य वर्षणस्य कृते दुःखं सोढव्यम्।

सानुचरो वरः कन्यापितुः कुटीरं सम्प्राप्तः। अचिन्तनीयं जनसमागमं विलोकयतः समाक्रान्तं कन्यापितुर्हृदयमवसादेन। न खलु व्याकुलो यज्ञेश्वरः कः कुत्रोपवेशनीय इति विनिर्णेतुं प्राभवत्, केवलम् "अतिमहान् क्लेशो मदर्थे सोढः, अतिमहान् क्लेशो मदर्थे सोढ" इति पुनः पुनरुवाच। यत् खलु छदिर्निर्मितम् तस्य समन्तात् सलिलं स्रवति स्म। न खलु तेन स्वप्नेऽपि

सम्भावितं यद् वैशाखे मास्येवंविधाः श्रावणधारा निपतेयुरिति। क्षुद्रस्यास्य ग्रामस्य भद्राभद्राः सर्वे एव यज्ञेश्वरस्य साहायकं विधातुं तत्र समुपस्थिताः, तैश्च सङ्कीर्णं तत् स्थानं सङ्कीर्णतरं व्यधायि, वर्षणध्वनिसमुपबृंहितश्च तेषां कलकलः समुद्रमन्थनस्येव ध्वानं समुपाजनयत्। पल्लीवृद्धाश्चा-ढ्यानामतिथीनां सभाजनोचितमुपायमनुपलभमाना यं कमपि कृताञ्जल-योऽनुनयन्तः स्थिताः।

यदा च वरोऽन्तःपुरं नीतस्तदा क्रुद्धैर्वरानुयायिभिरुच्चै रारटितम्—क्षुधार्ता वयम्, आहार्य्यमपेक्ष्यत इति। विवर्णवदनेन यज्ञेश्वरेण गललग्नी-कृतवाससा सर्वे निवेदिताः, मया यथाशक्ति यत् किमपि सम्भृतं तत् सर्वं विप्लावितं सलिलराशिनेति।

द्रव्यसम्भाराणां च कियांश्चन भागः पावनात आनयनावसरे मध्येमार्गं परिभ्रष्टः कियांश्चन पुनर्भग्नप्राये महानसे विगलितश्चुल्लीं निर्वापयामास नवं च विपर्यासयामास। न खलु जीर्णशिवालये तादृशो वर्तते ग्रामो यत एकपदे पर्याप्तमाहार्यं संगृह्येत।

यज्ञेश्वरस्य दुर्दशासन्दर्शनेन भृशमतृप्यद् गौरसुन्दरः, उवाच च, न खल्वेतावन्तो जना विनैवाहारमवस्थापनीयाः। कोऽप्युपायोऽवश्यमेवास्थेय इति।

वरानुगामिनोऽप्युन्मत्तायमाना महान्तं कोलाहलं चक्रुरूचुश्च—बाष्पशकटस्थानं गत्वा शकटमधिरुह्येदानीमेव गृहं प्रत्यागम्यत इति।

यज्ञेश्वरेण प्रबद्धाञ्जलिनाभाणि, न खल्वत्यन्तत उपवास एव। शिवतलाया आमिक्षा सुप्रथितैव। पर्याप्ता आमिक्षाः कदमासमाख्याश्च शार्कर-मोदकाः संगृहीता वर्तन्ते। यत् किल ममान्तरे सङ्घटते तत् सर्वान्तर्याम्येव विजानाति। यज्ञेश्वरस्य दुर्दशां सन्दृश्य वाथानपल्ल्या आभीरैरुक्तम्, अलं भयेन, भूदेव, यो हि यावतीमामिक्षां भक्षयितुं प्रभवेत् तावत्येवास्माभिः समाह्रियेत। वैदेशिका वरानुयायिनश्चेदभुक्ताः प्रत्यावर्तेरन् शिवतला-ग्रामस्यैव तर्ह्यवमानः। तस्य चावमानस्य निरासाय गोपैः प्रभूताया आमिक्षायाः प्रबन्धः कृतः।

वरानुयायिभिः परस्परं संमन्त्र्य पृष्टम्—अपि प्रभवेद् भवान यावदपेक्षितम् आमिक्षां प्रदातुमिति। यज्ञेश्वरः कथञ्चिदाश्वस्तः प्रत्युवाच अथ किम्।

भवतु, तर्ह्यानीयताम् इत्युक्त्वा उपविष्टा वरानुयायिनः। गौरसुन्दरस्तु नोपाविशत्, स हि तूष्णीमेकस्मिन् प्रान्ते स्थित्वा कौतुकमनुभवन्नासीत्।

आहारस्थानं परितः पुष्करिण्या जलोच्छ्वासेन सर्वं सलिलं कर्दमञ्च एकीभावमापादितम्। यथा यथा यज्ञेश्वरेण वरयात्रिकाणां पात्रेषु परिवेषितामिक्षा तथा तथा तैः स्कन्धदेशमतिक्रम्य द्रुततरमेव कर्दमे निक्षिप्तमामिक्षापिण्डम्।

अगतिकस्य यज्ञेश्वरस्य लोचनाभ्यामावद्धधारं प्रावर्तताश्रु। स हि मुहुर्मुहुः सर्वेषां सविधे साञ्जलिबन्धमवोचत्, अतीव तुच्छ एवाहं न खलु योग्यो भवतां संरम्भस्येति।

तेषामेकेन शुष्कहास्यपुरःसरं प्रत्युक्तम्—भवांस्तावत कन्यायाः पिता। स एव तावन्महानपराधः। यज्ञेश्वरस्य स्वग्रामवृद्धैः पुनः पुनर्धिक्कृत्योक्तम्, त्वञ्चेदवस्थानुरूपे कुले कन्यां समार्पयिष्यः, न खल्वीदृशी दुर्गतिस्तेऽभविष्यत् इति।

इतश्च पुनरन्तःपुरे कन्याया मातामही मङ्गलभङ्गभीरुरपि न प्रबभूव निवर्तयितुमश्रूणि। तद्दर्शनेन कन्याया अपि लोचनाभ्यां विगलिता वारिधारा। यज्ञेश्वरस्य ज्येष्ठतातपत्नी तत्रागत्य विभूतिमवदत्, वत्स, अपराधस्तावत् संवृत्त एव, इदानीं मृष्यताम्। अद्य तावच्छुभकार्यं यथाऽविघ्नमनुष्ठीयेत तथा विधीयतामिति।

इतश्चामिक्षाया अपव्ययं दृष्ट्वाभीरगणा उद्दीपितामर्षा अनर्थं सङ्घटयितुं समुद्यताः। मा खलु वरानुयायिभिः साकं प्रवर्तिष्ट तेषां विवाद इति यज्ञेश्वरस्तानुपसान्त्वयितुं महान्तं प्रयासमातिष्ठत्।

अस्मिन्नेवान्तरेऽनवसर एव वरो भोजनशालां सम्प्राप्तः। वरानुयायिनोऽमन्यन्त, वरस्तावत् क्रुद्धोऽन्तःपुरान्निर्गत इति। तेन च वृद्धिमेवाभजत् तेषां संरम्भः।

विभूतिभूषणेन रुद्धकण्ठेनोक्तम्, तात, कीदृशमिदमस्माकमाचरितम् ? इत्युक्त्वैव आमिक्षास्थालीमेकां गृहीत्वा स्वयमेव प्रवृत्तः परिवेष्टुम्। उवाच च गोपान्, पश्चात्तिष्ठत यूयम्। कस्यचिदामिक्षा चेन् पङ्के निपतेन् पुनरपि तामुत्तोल्य तस्य पात्रे देयेति।

गौरसुन्दरस्य मुखे दृष्टिं निक्षिप्य तेषामेकद्वाः पात्रं परित्यज्योत्थातव्यं न वा इति दोलायमानमतय आसन्। विभूतिरुवाच, "पितः, रात्रिर्महती सञ्जाता। ननु त्वमपि तावदुपविश भोजनाय" इति।

उपाविशद् गौरसुन्दरो भोजनाय। स्वस्थानं च प्राप्तवत्यामिक्षा।

---

## सुभाषितानि

(भासस्य दूतवाक्यतः)

को नाम लोके स्वयमात्मदोषमुद्भावयेन्नष्टघृणः सभासु ॥१८॥
राज्यं नाम नृपात्मजैः सहृदयैर्जित्वा रिपून् भुज्यते।
तल्लोके न तु याच्यते न तु पुनर्दीनाय वा दीयते ॥२४॥
पुण्यसञ्चयसम्प्राप्तामधिगम्य नृपश्रियम्।
वञ्चयेद् यः सुहृद्बन्धून् स भवेद्विफलश्रमः ॥२५॥
देशकालव्यवस्थापेक्षि खलु शौर्य्यं नयानुगामिनाम्।
कर्त्तव्यो भ्रातृषु स्नेहो विस्मर्तव्या गुणेतराः।
सम्बन्धो बन्धुभिः श्रेयाल्लोँकयोरुभयोरपि ॥२६॥
देवात्मजैर्मनुष्याणां कथं वा बन्धुता भवेत्।
पिष्टपेषणमेतावत् पर्याप्तं छिद्यतां कथा ॥३०॥

वरानुयायिभिः परस्परं संमन्त्र्य पृष्टम्—अपि प्रभवेद् भवान् यावदपेक्षितम् आमिक्षां प्रदातुमिति। यज्ञेश्वरः कथञ्चिदाश्वस्तः प्रत्युवाच अथ किम्।

भवतु, तर्ह्यानीयताम् इत्युक्त्वा उपविष्टा वरानुयायिनः। गौरसुन्दरस्तु नोपाविशत्, स हि तूष्णीमेकस्मिन् प्रान्ते स्थित्वा कौतुकमनुभवन्नासीत्।

आहारस्थानं परितः पुष्करिण्या जलोच्छ्वासेन सर्वं सलिलं कर्दमश्च एकीभावमापादितम्। यथा यथा यज्ञेश्वरेण वरयात्रिकाणां पात्रेषु परिवेषितामिक्षा तथा तथा तैः स्कन्धदेशमतिक्रम्य द्रुततरमेव कर्दमे निक्षिप्तमामिक्षापिण्डम्।

अगतिकस्य यज्ञेश्वरस्य लोचनाभ्यामाबद्धधारं प्रावर्तताश्रु। स हि मुहुर्मुहुः सर्वेषां सविधे साञ्जलिबन्धमवोचत्, अतीव तुच्छ एवाहं न खलु योग्यो भवतां संरम्भस्येति।

तेषामेकेन शुष्कहास्यपुरःसरं प्रत्युक्तम्—भवांस्तावत् कन्यायाः पिता। स एव तावन्महानपराधः। यज्ञेश्वरस्य स्वग्रामवृद्धैः पुनः पुनर्धिक्कृत्योक्तम्, त्वञ्चेदवस्थानुरूपे कुले कन्यां समार्पयिष्यः, न खल्वीदृशी दुर्गतिस्तेऽभविष्यत् इति।

इतश्च पुनरन्तःपुरे कन्याया मातामही मङ्गलभङ्गभीरूरपि न प्रबभूव निवर्तयितुमश्रूणि। तद्दर्शनेन कन्याया अपि लोचनाभ्यां विगलिता वारिधारा। यज्ञेश्वरस्य ज्येष्ठतातपत्नी तत्रागत्य विभूतिमवदत्, वत्स, अपराधस्तावत् संवृत्त एव, इदानीं मृष्यताम्। अद्य तावच्छुभकार्यं यथाऽविघ्नमनुष्ठीयेत तथा विधीयतामिति।

इतश्चामिक्षाया अपव्ययं दृष्ट्वाभीरगणा उद्दीपितामर्षा अनर्थं सङ्घटयितुं समुद्यताः। मा खलु वरानुयायिभिः साकं प्रवर्तिष्ट तेषां विवाद इति यज्ञेश्वरस्तानुपसान्त्वयितुं महान्तं प्रयासमातिष्ठत्।

अस्मिन्नेवान्तरेऽनवसर एव वरो भोजनशालां सम्प्राप्तः। वरानुयायिनोऽमन्यन्त, वरस्तावत् क्रुद्धोऽन्तःपुरान्निर्गत इति। तेन च वृद्धिमेवाभजत् तेषां संरम्भः।

विभूतिभूषणेन रुद्धकण्ठेनोक्तम्, तात, कीदृशमिदमस्माकमाचरितम्? इत्युक्त्वैव आमिक्षास्थालीमेकां गृहीत्वा स्वयमेव प्रवृत्तः परिवेष्टुम्। उवाच च गोपान्, पश्चात्तिष्ठत यूयम्। कस्यचिदामिक्षा चेन् पङ्के निपतेत् पुनरपि तामुत्तोल्य तस्य पात्रे देयेति।

गौरसुन्दरस्य मुखे दृष्टिं निक्षिप्य तेषामेकद्वाः पात्रं परित्यज्योत्थातव्यं न वा इति दोलायमानमतय आसन्। विभूतिरुवाच, "पितः, रात्रिर्महती सञ्जाता। ननु त्वमपि तावदुपविश भोजनाय" इति।

उपाविशद् गौरसुन्दरो भोजनाय। स्वस्थानं च प्राप्नवत्यामिक्षा।

---

# सुभाषितानि

( भासस्य दूतवाक्यतः )

को नाम लोके स्वयमात्मदोषमुद्भावयेन्नष्टघृणः सभासु ॥१८॥

राज्यं नाम नृपात्मजैः सहृदयैर्जित्वा रिपून् भुज्यते।
तल्लोके न तु याच्यते न तु पुनर्दीनाय वा दीयते ॥२४॥

पुण्यसञ्चयसम्प्राप्तामधिगम्य नृपश्रियम्।
वञ्चयेद् यः सुहृद्बन्धून् स भवेद्विफलश्रमः ॥२५॥

देशकालव्यवस्थापेक्षि खलु शौर्यं नयानुगामिनाम्।

कर्त्तव्यो भ्रातृषु स्नेहो विस्मर्तव्या गुणेतराः।
सम्बन्धो बन्धुभिः श्रेयाल्लोँकयोरुभयोरपि ॥२६॥

देवात्मजैर्मनुष्याणां कथं वा बन्धुता भवेत्।
पिष्टपेषणमेतावत् पर्याप्तं छिद्यतां कथा ॥३०॥

( मध्यमव्यायोगतः )

जानामि सर्वत्र सदा च नाम द्विजोत्तमाः पूज्यतमाः पृथिव्याम् ॥६॥
निर्वेदप्रत्यर्थिनी खलु प्रार्थना ।
ज्येष्ठः श्रेष्ठः कुले लोके पितॄणां च सुसम्प्रियः ॥१७॥
ज्येष्ठो भ्राता पितृसमः कथितो ब्रह्मवादिभिः ॥१८॥
आपदं हि पिता प्राप्तो ज्येष्ठपुत्रेण तार्य्यते ॥१९॥
बन्धुस्नेहाद्धि महतः कालस्नेहस्तु दुर्लभः ॥२०॥
माता किल मनुष्याणां दैवतानां च दैवतम् ॥३७॥
पूज्यतमः खलु ब्राह्मणः ।
सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते ।
शपामि सत्येन भयं न जाने
ज्ञातुं तदिच्छामि भवत्समीपे ।
किंरूपमेतद् वद भद्र तस्य
गुणागुणज्ञः सदृशं प्रपत्स्ये ॥४१॥
रुष्टोऽपि कुञ्जरो वन्यो न व्याघ्रं धर्षयेद् वने ॥४४॥

# नारी-निकारः

[ निबन्धकः – श्रीवेणुधरतर्कतीर्थः ]

अथातीतान् पञ्चषानब्दान् यावद् वङ्गभूमिष्वनवरतं नरपिशाचैरनुष्ठीयमानं नारीहरणं प्रत्यक्षमनुभवतां नयनैस्तद्वृत्तान्तञ्च वृत्तपत्रेषु सततं प्रकाश्यतां नीतमाकर्णयतां श्रवणैः, केषां नाम सहृदयानां समाजहितं साधयितुकामानामुदारं हृदयं न विशीर्य्येत ? कीदृशो नाम ते वधिरा येषां कर्णपटहोऽद्यापि गगनपवनं भृशं मुखरीकुर्व्वताऽजगरैर्हरिणीनामिव पाषण्डैः करेषु कठोरमाकृष्यमाणानां कुलवधूनामार्त्तरवेण न सम्पृच्यते ?

साम्प्रतं हि नरकुलकलङ्करूपाः सङ्घबद्धाः पञ्चषाः शस्त्रपाणयो गभीरायां निशि पत्युरुरसि निर्भरप्रसुप्तां जायाम्, वर्षीयस्या जनन्या सहैकशयने शयानां कन्यकाम्, मात्रेकसुहृदमर्भकं स्तन्यं पाययन्तीं स्नेहप्रतिमां जननीं वा बलादहह ! वस्त्रखण्डैर्निरुद्धमुखविवरां पतितो मातृतः शिशुतश्च वियोज्य क्षेत्रे गोष्ठे नदीतटे नौकायां पत्तने गभीरवने बन्धुनिलये स्वालये वा स्त्रीपुत्रजनन्यादिसहिते दिनात् पक्षं पक्षान्मासं मासाच्च संवत्सरमपि तां हतभागधेयां संरुध्य पर्य्यायक्रमेणाश्राव्या अशेषयातना गमयन्ति ।

अधीतमस्माभी राजस्थानेतिवृत्तग्रन्थेषु पापाशयाद् आलाबद्दीननाम्नः किराज्ञो माननाशभिया पद्मिनीप्रमुखाणां परःशतानामार्य्यकुलललनानामेकदा महाचितायां चित्रतरदुर्गभूमिं समुद्भासयते हुताशनाय स्वदेहाहुतिविवरणम्, श्रुता वा न कैर्वर्षिष्ठायाः पितामह्याः सकाशाद् गतासुं हृदयेशमङ्के निधाय हसन्मुखीनां भारतीयसतीनां निखिलजगद्विस्मयोपधायिका सा भूरिशः संघटिता सहमरणवार्त्ता ? तथापि तासु तासु नारीनाशघटनासु वह्निसम्पर्कपूतरमणीशरीरोद्गतधूमपटलच्छलेनाशेषोऽपि तत्तद्देशीयः पापकालिमा भूतलाद्विताडितो नभसि निलीनभूयमभजतेव । साम्प्रतिकास्तु अजीवनिमर्हन्तो नारकिणो यद्येवं निकृन्तामबलां पश्चात् पशुमारं

मारयेयुः, सन्दंशेन तिलांस्तिलान् कृत्वा मांसखण्डान् शरीरादुत्पाटयन्तः शूल्यानुख्यांश्च कृत्वा स्वयं खादेयुः प्रकृत्या समैः सारमेयैर्वा खादयेयुः, शूलेन वक्षो विदार्य्य कटूष्णेन तासां शोणितेन स्वेषामतिप्रबलां कामतृषां वा तर्पयेयुस्तदा नैवं महती हानिः स्यात् समाजस्य।

अहो! कियतीं नाम शोचनीयतामेति जीवनयापनमपराधलव-रहितानामपि निगृहीतयोषिताम्। वरमक्षिभ्यामन्धता, प्रकृत्या निन्दकाना-मङ्गुलिनिर्द्देशसहितां विकृताननभङ्गीं न समीक्षयति, वरमपि श्रवणाभ्यां बधिरता, असूयाजीविनां परदोषमनाविष्कृत्य जलगण्डूषमगृह्णतामशनि-निर्घोषकर्कशां सोल्लुण्ठनवाचं न श्रावयति, परपुरुषस्पर्शस्तु बलात् कृतोऽपि हन्त दग्धभागधेयायाः पतिगेहे पितुर्गेहे च प्रवेशाधिकारं चिराय विलोपयति, स्नेहलालितानामपत्यानां मातृत्वाधिकारं खण्डयति, रूपलावण्यं देहाद्द्रवयति, कुलटासंज्ञामासञ्जयति, मर्म्मच्छिदं सामाजिकमुख्यानामपि कर्कशवाचमयुक्तां श्रावयति, यावद्देहपातमकथ्ययातनाजनकं जीवनं थापयति च।

अथैवं पाषण्डकवलाद् गृहाच्च विच्युता कामिनी उदरज्वालाशान्तये कदाचिद् वाराङ्गनावृत्तिमनिच्छयापि आजीवनमूरीकरोति, कदाचिद्वात्म-परिचयादिकं निगुह्य कलिकातादिमहानगरीषु धनिकगेहे दासीवृत्तिं प्रायेण पूर्व्ववदेव चारित्र्यदोषमुत्पादयन्तीमवलम्बते, क्वचिच्च वङ्गीयवैष्णवापसदानां कुलेषु सम्मिलिता द्वारि द्वारि भिक्षामटति। सौभाग्यातिरेकादेकद्वेषु स्थलेषु पतिगेहे कथमपि लब्धप्रवेशाधिकारायामपि तस्यां न यथापूर्व्वं स्वेषां जनानामनुरागेण पदं क्रियते। किं बहुना, महापातकजलक्ष्मणः सप्तजन्मस्वनुसरणवत्तस्या अपत्यपरम्परास्वपि सामाजिकापवादो वैवाहिक-सम्बन्धादीनामुत्कर्षप्रातिकूल्योपधायकतया चिराय शल्यायत इति न खल्वविदितमस्ति तत्त्वविदाम्। अतोऽस्मिन्नशेषदुःखोदर्के सामाजिक-विप्लवे यावच्छक्यं प्रतीकारचिन्तनं विशेषतः समपेक्ष्यते आर्य्यसमाज-धुरीणेषु ब्राह्मणपण्डितप्रकाण्डेष्विति चायुक्तं वचः।

यद्यप्येतद् वार्त्ताभिज्ञैर्नापलप्यं यच्छिक्षासम्पर्कलेशविरहितेष्वस्मद्देशीयनीचकुलपरिवारेषु प्रायेण हीनसंसर्गबाहुल्यात् पुंसामपि योषित्सु ससम्मानवृत्तिवैधुर्य्याद्रक्षणविधावौदासीन्याच्च कदाचित् प्रभिन्नकुलमर्य्यादाः स्वैरिण्योऽप्यादौ कतिचिद्दिनानि लम्पटमेकं भजमानाः पश्चात्तापमनुभूय स्वानां प्रेरणया तमेव भज्यमानपुरुषं राजद्वारे धर्षकत्वेन दण्डं ग्राहयितुमीहन्ते, ततश्च वृत्तपत्रेषु नारीहरणसंख्याभूयस्त्वं प्रकाश्यतां नीयते, तथापि कुलगौरवविनाशशङ्कया बहवो नारीनिग्रहवृत्तान्ता नावतरन्ति लोकलोचनसरणिमित्यपि न खलु विस्मर्त्तव्यं तत्रभवतां समाजस्थितिविदाम् ।

आसीत् कतिचिद्वत्सरान् यावन्नारीहारकतापापस्य माहम्मदसम्प्रदायेष्वेव प्रसारः, साम्प्रतन्तु स्ववाचकपदान्ते पाशप्रत्ययोत्पत्तिमर्हन्तो मातृवत्परदारेष्विति सूक्तिरत्नोद्धारकाणां कुलमलंकुर्व्वाणा हिन्दुजातीया अपि पापेनानेन नितरामात्मानं लिम्पन्ति । अथातोऽपि विस्मयस्थानं परमेतद् यच्छिक्षात्वेनाभासमानायाः प्रचलच्छिक्षाया गन्धमुपजिघ्रन्तो वक्तृतामञ्चे स्त्रीस्वाधीनताया भूरिशः प्रयोजनीयतां भारतीयरमणीनां दुर्द्दशाञ्च करुणमुपवर्णयन्तः श्रावकमहाभागैरनेकशः करतालीचटपटानादैरभिनन्द्यमानाः सुसभ्यमानिनोऽपि कदाचिदनेन महाकलुषेण लिप्तदेहा भवन्ति । तथाहि व्यतीता मासा अनधिकाः पश्यतामस्माकं सलज्जञ्च सखेदञ्च, वृत्तगर्भे क्वचित् पत्रे प्रकटितं यत् कश्चिद् व्यवहाराजीवो जात्या वङ्गीयकुलीनहिन्दुरपि कुत्सिततमेऽस्मिन् व्यवहारपदे प्रत्यर्थिभूयमगमदिति । धिक् शिक्षाम् ! धिक् चास्माकं नारीरक्षाविधावौदासीन्यम् । द्वित्रेभ्यो वर्षेभ्यः प्राग् बाखरगञ्जनगरे कस्यचित् प्राड्विवाकस्य कुमारीं मातापितृभ्यां सहैकत्र निवसन्तीमपि उपयियंसमानः कश्चित् प्रतिवेशी माहम्मदो युवा बहूनि दिनानि प्रलोभ्य एकदा गूढं गेहान्निःसारयन् मुम्बयीनगर्य्यां क्वचित् साधारणभोजनशालायां राजपुरुषैर्धृतो दण्डं प्रापित इति न खलु विस्मृतं तत्त्वविद्भिः । अथ यद्येवं सुशिक्षितपौरपरिवारेऽपि कन्यकायाश्चारित्र्य-

समवेक्षणे बन्धूनामुपेक्षणं तदा किं वा न सम्भवेदज्ञपरिवारेषु ग्राम्येषु ?

कठोरकठोरेण राजशासनेन निवार्य्योऽयं पापप्रसार इत्यत्र सर्वेषामैक-मत्येऽपि अस्त्यत्र महत् प्रतिकरणीयमार्य्यसमाजधुरीणानां ब्राह्मण-पण्डितानाम्। धनिकागारेषु श्राद्धादिकृत्यकाले निमन्त्रितानां पण्डित-वर्य्याणां मुखात् प्रायेणाद्यत्वेऽपि सश्रद्धं शास्त्रोपदेशमाकर्णयन्ति जनाः। तत्र यदि वक्तारो भक्तिमुक्त्यादिमार्गमनधिकृत्य नारीरक्षायामौदासीन्ये नारीनिग्रहे च दोषजातं सप्रपञ्चं पुराणवर्णितकीचकोपाख्यानादि-दृष्टान्तमुखेन प्राधान्येन ओजस्विन्या भाषया समुपवर्णयेयुस्तदा समाजस्य महत् कल्याणं जायेत। वक्तृगुणविशेषेण जनाः साम्प्रतं वैदेशिकवस्तुजातं जहति, राजपुरुषाणां यष्टिं शिरसा दधति, क्लेशबहुलं कारागृहमपि वृणत इति प्रत्यक्षमेवावलोक्यतेऽस्माभिः। नारीनिग्रहव्यापारोऽपि उपायेनाने-नाचिरेण समाजवक्षसो ह्रासमेष्यतीति चिन्त्यमेतत् सुधियाम्।

---

## भविष्यपुराणम् *

शौनक उवाच।

कथं यज्ञः कृतस्तेन प्रद्योतेन विचक्षण।
सर्वं कथय मे तात त्रिकालज्ञ महामुने ॥ १ ॥

* भविष्यपुराणस्यैतदध्यायद्वितयमतिमात्रं कौतुकावहमिति समुपह्रियते वाचक-महोदयेभ्यः। एतद्विषये यद्विशेषतो वक्तव्यं तद्वारान्तरे वक्ष्यते। येषां च सविधे भविष्य-पुराणस्य हस्तलिखिताः प्रतिलिपयो वर्तन्ते ते चेत् कृपया पाठान्तराणि विज्ञापयेयुरस्मभ्यं चिराय तेषां कृतज्ञतामावक्ष्यामः।

सूत उवाच ।

एकदा हस्तिनगरे प्रद्योतः क्षेमकात्मजः ।
आस्थितः स कथामध्ये नारदोऽभ्यागमत्तदा ॥ २ ॥
तं दृष्ट्वा हर्षितो राजा पूजयामास धर्मवित् ।
सुखोपविष्टः स मुनिः प्रद्योतं नृपमब्रवीत् ॥ ३ ॥
म्लेच्छैर्हतस्तव पिता यमलोकमतो गतः ।
म्लेच्छयज्ञप्रभावेण स्वर्गतिर्भविता हि सः ॥ ४ ॥
तच्छ्रुत्वा क्रोधताम्राक्षो ब्राह्मणान् वेदवित्तमान् ।
आहूय स कुरुक्षेत्रे म्लेच्छयज्ञं समारभन् (१) ॥ ५ ॥
यज्ञकुण्डं चतुष्कोणं योजनान्येव षोडश ।
रचित्वा(२) देवता ध्यात्वा म्लेच्छांश्च जुहुयान्नृपः ॥ ६ ॥
(३)हारहूणान् बर्बरांश्च गुरुण्डांश्च शकान् खशान् ।
यवनान् पल्लवांश्चैव रोमजान् खरसम्भवान् ॥ ७ ॥
द्वीपस्थितान् कामरूश्च चोनान् सागरमध्यगान् ।
प्राहूय भस्मसात्कुर्वन् वेदमन्त्रप्रभावतः ॥ ८ ॥
(४)ब्राह्मणान् दक्षिणां दत्त्वा अभिषेकमकारयत् ।
क्षेमको नाम नृपतिः स्वर्गलोकं ततो गतः ॥ ९ ॥
म्लेच्छहन्ता नाम तस्य विख्यातं भुवि सर्वतः ।
राज्यं दशसहस्राब्दं कृतं तेन महात्मना ॥ १० ॥
स्वर्गलोकं गतो राजा तत्पुत्रो वेदवान् स्मृतः ।
द्विसहस्रं कृतं राज्यं तदा म्लेच्छः कलिः स्वयम् ॥ ११ ॥

---

१ परस्मैपदमार्षम् ।

२ आर्षोऽयं प्रयोगः । रचयित्वेति साधुः ।

३ नामानीमान्यधिकृत्य सयुक्तिको विचारो वैशाखसंख्यायां प्रकाशयिष्यते ।

४ आर्षोऽयं प्रयोगः ब्राह्मणेभ्य इति साधुः ।

नारायणं पूजयित्वा दिव्यां स्तुतिमथाकरोत् ।

कलिरुवाच ।

नमोऽनन्ताय महते सर्वकालप्रवर्तिने ॥ १२ ॥
चतुर्युगकृते तुभ्यं वासुदेवाय साक्षिणे ।
दशावताराय हरे नमस्तुभ्यं नमो नमः ॥ १३ ॥
नमः शत्यवताराय रामकृष्णाय ते नमः ।
नमो मत्स्यावताराय महते गौरवासिने ॥ १४ ॥
नमो भक्तावताराय कल्पक्षेत्रनिवासिने ।
राज्ञा वेदवता नाथ मम स्थानं विनाशितम् ॥
मम प्रियस्य म्लेच्छस्य तत्पित्रा वंशनाशनम् ॥ १५ ॥

सूत उवाच ।

इति स्तुतस्तु कलिना म्लेच्छस्य सह भार्यया ।
प्राप्तवान् स हरिः साक्षाद् भगवान् भक्तवत्सलः ॥ १६ ॥
कलिं प्रोवाच स हरिर्युष्मदर्थं युगोत्तमम् ।
बहुरूपमहं कृत्वा तवेच्छां पूरयाम्यहम् ॥ १७ ॥
(५)आदमो नाम पुरुषः पत्नी हव्यवती(६) तथा ।
(७)विष्णुकर्दमतो जातौ म्लेच्छवंशप्रवर्धनौ ॥ १८ ॥
हरिस्त्वन्तर्दधे तत्र कलिरानन्दसङ्कुलः ॥ १९ ॥

---

५ Adam ६ Eve

७ And the Lord God formed man of the dust of the ground and breathed into his nostrils the breath of life, and man became a living soul. (*Gen.* 2. 7). And the Lord God caused a deep sleep to fall upon the man, and he slept; and he took one of his ribs and closed up the flesh instead thereof; and the rib, which the Lord God had taken from the man, made he a woman and brought her unto the man. (*Ibid.* 2. 21-22).

गिरिं नीलाचलं प्राप्य किञ्चित् कालमवासयन् ।
पुत्रो वेदवतो जातः सुनन्दो नाम भूपतिः ॥
पितुस्तुल्यं कृतं राज्यमनपत्यो मृतिं गतः ॥
आर्यदेशाः क्षीणवन्तो म्लेच्छवंशा बलान्विताः ।
भविष्यन्ति भृगुश्रेष्ठ तस्माच्च तुहिनाचलम् ॥
गत्वा विष्णुं समाराध्य गमिष्यामो हरेः पदम् ॥ २२ ॥
इति श्रुत्वा द्विजाः सर्वे नैमिषारण्यवासिनः ।
अष्टाशीतिसहस्राणि गतास्ते तुहिनाचलम् ॥ २३ ॥
विशालायां समासाद्य विष्णुगाथां प्रचक्षिरे(८) ।
इति व्यासेन कथितं वाक्यं कलिविशारदम् ॥
श्रोतारं स मनः कृत्वा भविष्यं समुदीरयत(९) ॥ २४ ॥

व्यास उवाच ।

मनः श्रृणु ततो गाथां भावीं (१०)सूतेन वर्णिताम् ।
कले र्युगस्य पूर्णां तां तच्छ्रुत्वा तृप्तिमावह ॥ २५ ॥

सूत उवाच ।

षोडशाब्दसहस्रे च शेषे तद्द्वापरे युगे ।
बहुकीर्तिमती भूमिरार्यदेशस्य कीर्तिता ॥ २६ ॥
क्वचिद्विप्राः स्मृता भूपाः क्वचिद्राजन्यवंशजाः ।
क्वचिद्वैश्याः क्वचिच्छूद्राः कुत्रचिद्वर्णसङ्कराः ॥ २७ ॥
द्विशताष्टसहस्रे द्वे शेषे तु द्वापरे युगे ।
म्लेच्छदेशस्य या भूमिर्भविता कीर्तिमालिनी ॥ २८ ॥
इन्द्रियाणि दमित्वा यो ह्यात्मध्यानपरायणः ।
तस्मादादमनामासौ पत्नी हव्यवती स्मृता ॥ २९ ॥

---

८ प्रचचक्षिरे इति साधुः ।　　९ समुदैरयत् इति साधुः ।
१० भाविनीम् इति साधुः ।

प्रदाननगरस्यैव पूर्वभागे महावनम् ।
ईश्वरेण कृतं रम्यं चतुःक्रोशायतं स्मृतम्(११) ॥ ३० ॥
पापवृक्षतले गत्वा पत्नीदर्शनतत्परः ।
कलिस्तत्रागतस्तूर्णं सर्परूपं हि तत्कृतम्(१२) ॥ ३१ ॥
वञ्चिता तेन धूर्तेन विष्णवाज्ञा भङ्गतां गता ।
(१३)खादित्वा तत्फलं रम्यं लोकमार्गप्रदं पतिः ॥ ३२ ॥

---

११ And the Lord God planted a garden eastward in Eden, and there he put the man he had formed.

१२ Now the serpent was more subtil than any beast of the field which the Lord God had made. And he said unto the woman, Yea, hath God said, Ye shall not eat of any tree of the garden? And the woman said unto the serpent, Of the fruit of the trees of the garden we may eat: but of the fruit of the tree which is in the midst of the garden, God hath said, Ye shall not eat of it, neither shall ye touch it, lest ye die. And the serpent said unto the woman, Ye shall not surely die: for God doth know that in the day ye eat thereof, then your eyes shall be opened, and ye shall be as God, knowing good and evil. And when the woman saw that the tree was good for food, and that it was a delight to the eyes, and that the tree was to be desired to make one wise, she took of the fruit thereof, and did eat; and she gave also unto her husband with her and he did eat. (3. 1-6).

ये तावत् चेत्रचरा जन्तवः परमेश्वरेण विनिर्मिताः तेषु सर्वेषु सर्प एवासीत् कुटिलतमः। स च नारीमवदत्, अपि परमेश्वरेणोक्तं न खलु युवाभ्यां कस्यापि पादपविशेषस्य फलमुपयोक्तव्यमिति। सा च सर्पमवदत्, आवां तावदाराममहीरुहाणां फलानि भक्षयेव, परमुपवनस्य मध्यभागे योऽवतिष्ठते वृक्षस्तमन्तरेणोक्तं खलु भगवता, न खलु तदीयमुपयोक्तव्यम्, न वेदं स्पृष्टव्यम्, अन्यथा मरणं वो ध्रुवम्। स च सर्पस्तां स्त्रियं प्राह, न नूनं युवां मरिष्यथः। जानाति हि परमेश्वरो यदहर्युवां तदीयं फलं भक्षयिष्यथस्तदहरेव चक्षुषी उन्मीलिष्येते, युवां च गुणदोषज्ञौ परमेश्वरसमकक्षतामेवावाप्स्यथः। यदा च सा नारी वृक्षोऽसावाहार्योपयोगी च नयनसुभगश्च ज्ञानलाभार्थं वाञ्छनीयश्चेत्यपश्यत् तदा सा भक्षयामास तदीयं फलं स्वपार्श्ववर्तिने च पत्ये प्रददौ। सोऽपि तदभक्षयत्।

१२ Double cocoanut.

उदुम्बरस्य पत्रैश्च ताभ्यां (१४)वा॑ शनं कृतम्।
सुताः पुत्रास्ततो जाताः सर्वे म्लेच्छा बभूविरे(१५) ॥ ३३ ॥
त्रिंशोत्तरं नवशतं तस्यायुः परिकीर्तितम्।
फलानां हवनं कुर्वन् पत्न्या सह दिवं गतः ॥ ३४ ॥
तस्माज्जातः सुतः श्रेष्ठः श्वेतनामेति विश्रुतः ।(१६)
द्वादशोत्तरवर्षं च तस्यायुः परिकीर्तितम् ॥ ३५ ॥
(१७)अनुहस्तस्य तनयः शतहीनं कृतं पदम्।
(१८)कीनाशस्तस्य तनयः पितामहसमं पदम् ॥ ३६ ॥
(१९)महल्लस्तस्य सुतः पञ्चहीनं शतं नव
तेन राज्यं कृतं तत्र तस्मान्मानगरं स्मृतम् ॥ ३७ ॥
तस्माच्च (२०)विरदो जातो राज्यं षष्ट्युत्तरं समाः।
ज्ञेयं नवशतं तस्य स्वनाम्ना नगरं कृतम् ॥ ३८ ॥
(२१)हनूकस्तस्य तनयो विष्णुभक्तिपरायणः ।
फलानां हवनं कुर्वंस्तत्त्वं ह्यसि जपन् सदा ॥ ३९ ॥
त्रिशतं पञ्चषष्टिश्च राज्यं वर्षाणि तत् स्मृतम् ।
सदेहः स्वर्गमायातो म्लेच्छधर्मपरायणः ॥ ४० ॥
आचारश्च विवेकश्च द्विजता देवपूजनम्।
कृतान्येतानि तेनैव तस्मान्म्लेच्छः स्मृतो बुधैः ॥ ४१ ॥
विष्णुभक्त्यग्निपूजा च ह्यहिंसा च तपो दमः ।
धर्माण्येतानि मुनिभिर्म्लेच्छानां हि स्मृतानि वै ॥ ४२ ॥
(२२)मतोच्छिलस्तस्य सुतो हनुकस्यैव भार्गव ।
राज्यं नवशतं तस्य सप्ततिश्च स्मृताः समाः ॥ ४३ ॥

---

१४ वायुशनम् इति मुद्रितपुस्तकपाठः।
१५ बभूवुः इति साधुः
१६ Seth (*Gen.* 4. 25)
१७ Enosh (4. 25)
१८ Kenan (5. 9)
१९ Mahalel (5. 12).
२० Jared (5. 16)
२१ Enoch (5. 19)
२२ Methuselah (5. 21)

सूत उवाच ।

न्यूहो नाम स्मृतो म्लेच्छो विष्णुमोदं तदाकरोत् ।
तदा प्रसन्नो भगवांस्तस्य वंशः प्रवर्धितः ॥ २ ॥
म्लेच्छभाषा कृता तेन वेदवाक्यपराङ्मुखा ।
कलेश्च वृद्धये ब्राह्मीं भाषां कृत्वाऽपशब्दगाम् ॥ ३ ॥
न्यूहाय दत्तवान् देवो बुद्धीशो बुद्धिगः स्वयम् ।
विलोमं च कृतं नाम न्यूहेन त्रिसुतस्य वै ॥ ४ ॥
सिमश्च हामश्च तथा याकूतो नाम विश्रुतः ।
याकूतः सप्तपुत्रश्च जुम्रो माजूज एव सः ॥ ५ ॥
मादी तथा च यूनानस्तूवलो मसकस्तथा ।
तीरासश्च तथा तेषां नामभिर्देश उच्यते ॥ ६ ॥ (३१)
जुम्रा दश कनाब्जश्च रिफतश्च तजरुर्मः ।
तन्नाम्ना च स्मृता देशा यूनाद्या ये सुताः स्मृताः ॥ ७ ॥
इलीशस्तरलीशश्च कित्तीहूदानिरुच्यते ।
चतुर्भिर्नामभिर्देशास्तेषां तेषां प्रचक्रिरे ॥ ८ ॥
(३२)द्वितीयतनयाद्धामान् सुताश्चत्वार एव ते ।
कुशो मिश्रश्च कूजश्च कनआंस्तत्र नामभिः ॥ ९ ॥

---

३० Now these are the generations of the sons of Noah, Shem, Ham and Japheth : and unto them were sons born after the flood. The sons of Japheth ; Gomer and Magog, and Madai and Javan, and Tubal, and Meshech, and Tiras. And the sons of Gomer ; Ashkenaz and Riphath and Togormah. And the sons of Javan ; Elishah and Tarshish, Kittim, and Dodanim (10. 1-5).

३१ And the sons of Ham ; Cush and Mizraim, and Put and Canaan. And the sons of Cush ; Seba and Havilah, and Sabtah and Raamah and Sabteca ; and the sons of Raamah ; Sheba and Dedan. And Cush begat Nimrod. ......And the beginning of his kingdom was Babel, and Erech and Accad and Calneh, in the land of Shinar. (10. 6-10)

देशाः प्रसिद्धा म्लेच्छानां कुशात् षट् तनयाः स्मृताः ।
सवा चैव हबीलश्च सर्वतोरगमस्तथा ॥ १० ॥
तथा सवतिका नाम निमरूहो महाबलः ।
तेषां पुत्राश्च कलनः सिनारोरक उच्यते ॥ ११ ॥
अक्कदो बाबुनश्चैव रसनादेशकाश्च ते ।
श्रावयित्वा मुनीन् सूतो योगनिद्रावशं गतः ॥ १२ ॥
द्विसहस्रे शताब्दान्ते बुद्ध्वा पुनरथाब्रवीत् ।
(३२)सिमवंशं प्रवक्ष्यामि सिमो ज्येष्ठः स भूपतिः ॥ १३ ॥
राज्यं पञ्चशतं वर्षं तेन म्लेच्छेन सत्कृतम् ।
अर्कन्सदस्तस्य सुतश्चतुस्त्रिंशच्च राज्यकम् ॥ १४ ॥
चतुःशतं पुनर्ज्ञेयं सिंह्लस्तत्तनयोऽभवन् ।
राज्यं तस्य स्मृतं तत्र षष्ठ्युत्तरं चतुःशतम् ॥ १५ ॥
इब्रतस्य सुतो ज्ञेयः पितुस्तुल्यं कृतं पदम् ।
फलजस्तस्य तनयश्चत्वारिंशद्द्वयं शतम् ॥ १६ ॥
राज्यं कृतं तु तस्माच्च रऊ नाम सुतः स्मृतः।
सप्तत्रिंशच्च द्विशतं तस्य राज्यं प्रकीर्तितम् ॥ १७ ॥
तस्माच्च जूज उत्पन्नः पितुस्तुल्यं कृतं पदम् ।
नहूरस्तस्य तनयो वयः षष्ठ्युत्तरं शतम् ॥ १८ ॥
राज्यं चकार नृपतिर्बहुशत्रून् विहिंसयन् ।
ताहरस्तस्य तनयः पितुस्तुल्यं कृतं पदम् ॥ १९ ॥

---

३२ The sons of Shem ; Elam, and Asshur, and Arpachshad, and Lud, and Aram. And the sons of Aram ; Uz and Hul and Gether and Mash. And Arpachshad begat Shelah and Shelah begat Eber and unto Eber were born two sons...Peleg and Joktan. And Joktan begat Almodad, and Sheleph and Hazarmaveth and Jerah ; and Hadoram and Uzal, and Diklah ; and Obal and Abimael, and Sheba ; and Ophir, and Havilah and Jobab (10,22-29).

तस्मात् पुत्रोऽविरामश्च नहूरो हारनस्त्रयः ।
एवं तेषां स्मृता वंशा नाममात्रेण कीर्तिताः ॥
सरस्वत्याश्च शापेन म्लेच्छभाषा महाधमाः ॥ २० ॥
तेषां वृद्धिः कलौ चासीत् संक्षेपेण प्रकीर्तिता ।
संस्कृतस्यैव वाणी तु भारतं वर्षमूह्यताम् ॥ २१ ॥
अन्यखण्डे गता सैव म्लेच्छा ह्यानन्दिनोऽभवन् ।
एवं ते विप्र कथितं विष्णुभक्तद्विजैः सह ॥ २२ ॥

व्यास उवाच ।

तच्छ्रुत्वा मुनयः सर्वे विशालायां निवासिनः ।
नरं नारायणं देवं संपूज्य विनयान्विताः ॥ २३ ॥
ध्यानं चक्रुर्मुदा युक्ता द्विशतं परिवत्सरान्
तत्पश्चाद्बोधिताः सर्वे शौनकाद्या मुनीश्वराः ॥ २४ ॥
सन्ध्यातर्पणदेवार्चाः कृत्वा ध्यात्वा जनार्दनम् ।
लोमहर्षणमासीनं पप्रच्छुर्विनयान्विताः ॥ २५ ॥
व्यासशिष्य महाभाग चिरं जीव महामते ।
साम्प्रतं वर्ततें यो वै राजा तन्मे वद प्रभो ॥ २६ ॥

सूत उवाच

त्रिसहस्राब्दसम्प्राप्ते कलौ भार्गवनन्दन ।
आवन्ते शङ्खनामासौ साम्प्रतं वर्तते नृपः ॥ २७ ॥
म्लेच्छदेशे शकपतिरथ राज्यं करोति वै ।
शृणु तत्कारणं सर्वं यथा यस्य विवर्धनम् ॥ २८ ॥
द्विसहस्रे कलौ प्राप्ते म्लेच्छवंशविवर्धिता ।
भूमिर्म्लेच्छमयी सर्वा नानापथविवर्धिता ॥ २९ ॥
ब्रह्मावर्तमृते तत्र सरस्वत्यास्तटं शुभम् ।
म्लेच्छाचार्यश्च मूशाख्यस्तन्मतैः पूरितं जगत् ॥ ३० ॥

देवार्चनं वेदभाषा नष्टा प्राप्ते कलौ युगे।
तल्लक्षणं शृणु मुने म्लेच्छभाषाश्चतुर्विधाः ॥ ३१ ॥
व्रजभाषा महाराष्ट्री यावनी च गुरुण्डिका।
तासां चतुर्लक्षविधा भाषाश्चान्यास्तथैव च ॥ ३२ ॥
पानीयं च स्मृतं पानी बुभुक्षा भूख उच्यते।
पानीयं पापडीभाषा भोजनं कक्कनं स्मृतम् ॥ ३३ ॥
इष्टिशुद्धरवः प्रोक्तः इस्तिनी मसपावनी।
आहुतिर्वै आजु इति ददाति च दधाति च ॥ ३४ ॥
पितृ पैतर भ्राता च बादरः पतिरेव च।
सेति सा यावनी भाषा ह्यश्वश्चास्पस्तथा पुनः ॥ ३५ ॥
जानुस्थाने जैनुशब्दः सप्तसिन्धुस्तथैव च।
सप्तहिन्दुर्यावनी च पुनर्ज्ञेया गुरुण्डिका ॥ ३६ ॥
रविवारे च सण्डे च फाल्गुने चैव फर्वरी।
षष्टिश्च सिक्सटी ज्ञेया तदुदाहारमीदृशम् ॥ ३७ ॥
या पवित्रा सप्तपुरी तासु हिंसा प्रवर्तते।
दस्यवः शबरा भिल्ला मूर्खा आर्ये स्थिता नराः ॥ ३८ ॥
म्लेच्छदेशे बुद्धिमन्तो नरा वै म्लेच्छधर्मिणः।
म्लेच्छाधीना गुणाः सर्वेऽवगुणा आर्यदेशके ॥ ३९ ॥
म्लेच्छराज्यं भारते च तद्द्वीपेषु स्मृतं तथा।
एवं ज्ञात्वा मुनिश्रेष्ठ हरिं भज महामते ॥ ४० ॥
तच्छ्रुत्वा मुनयः सर्वे रोदनं चक्रिरे बहु ॥ ४१ ॥

इति—श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुयुगखण्डापरपर्याये कलियुगभूपवर्णनं नाम पञ्चमोऽध्यायः।

# रसमञ्जरी

## भारतवर्षस्य प्राचीनमितिवृत्तम् ।

### मनुष्यवर्गः ।

पुरा पृथिव्याः सर्वेभ्य एव प्रदेशेभ्य एकैकः प्रतिनिधिः समागम्य ब्रह्मावर्त्ते वासं कल्पितवान् । अत एव भारतवर्षस्यादिमपार्लामेण्टकल्पत्वं सिध्यति । कस्तावदृषिः कस्माद्देशात् समागतस्तत्र च किं किं प्रमाणं प्रोल्लसति तत् सर्वमग्रे विव्रियते ।

(१) वाल्मीकिः—वाह्लीकदेशप्रतिनिधिः । अयमेव मोगलवंशस्यादिपुरुषः । अस्यैवान्ववाये समुद्भूतः श्रीरामचन्द्रः । उदयपुरस्य वर्त्तमानो राणकोऽपि मोगलवंशादस्मात् समुत्पन्नः । प्रमाणं टड्महोदयप्रणीतं राजस्थानम् ।

(२) काश्यपः—कास्पीयजातेः प्रतिनिधिः । अस्यैव नाम्ना व्यपदिष्टः कास्पीयहृदः । अत्र च भूयांसि प्रमाणानि डाक्तार-वन्द्योपाध्यायमहोदयस्य पुस्तके प्रदर्शितानि

(३) गर्गः—जर्जियाना (Georgiana)देशात् समागतः । अयमेवेदंप्रथमतया भारते वर्षे स्त्रीशिक्षां प्रचारितवान् । प्रमाणं माण्डूक्योपनिषदि गार्ग्युपाख्यानम्, हिरोदोटासस्य च त्रयोविंशेऽध्यायेऽलिकसुन्दरस्याक्रमणवार्ता । जर्जशब्दो गर्गो भवति—विकल्पेन ।

(४) भरद्वाजः—हिस्पानियोलाया वारदोयाजातः (Vardwazza) समागतः । भरद्वाजगोत्रे विष्णुठाकुरस्य सन्ताना अतीव सम्मानार्हाः । विष्णुठाकुरः पुनर्नैवाधुनिकः कोऽपि पुरुषः । अर्थगृध्नवः शठाः कुलपञ्जिकाकृतः प्रगाढस्य प्रत्नतत्त्वस्य मर्मभेदनेऽप्रभविष्णवः केवलं कतिचन काल्पनिकान्येव वाक्यानि विरचितवन्तः । साम्प्रतं पुनर्विज्ञानस्य

विवृद्धया घोरतमेयं कुज्झटिका क्रमशोऽपसार्यते। विष्णुठाकुरः सर्वथा शशविषाणकल्प एवेति प्रतिभाति जनानाम्। महर्षिर्भरद्वाजो हिस्पानियोलाराष्ट्रस्य विष्टुकुटारीनगरात् (Vistukutari or Biscutukari) आजगाम, अत एव तस्य भरद्वाज इति विष्टुठाकुर इति चोभयथा व्यपदेशः। इदानीमप्यत्र प्रकृष्टं प्रमाणं नोपलब्धम्। अस्माभिः पुनर्बहूनि प्राचीनानि मानचित्राणि समाहृत्य कतिचिद्वर्षाणि सूक्ष्मेक्षिकया परीक्षितं परं कुत्रापि वारदोयाजाया वा विष्टुकुटार्यां वा चिह्नमपि नोपलक्षितम्। परं भरद्वाजगोत्रजस्य "मुखुटि"वंशस्य स्पेनसम्भूतत्वे यद्यपि किमपि प्रमाणं नोपलभ्यते, तथापि नात्र लेशतोऽपि संशयोऽस्ति विमर्शकानाम्। यतः "फुलेर मुखुटी" chef-del-floro इत्युपनाम स्पेनवर्जं कुत्र वाऽपरत्र सम्भवेत्। बहवश्च मुखुटि न विस्कुटं विक्रीणते इत्यपि प्रत्यक्षसिद्धम्।

(५) गालवः—प्राचीनाद् गालराज्यात् (Gaul) समागच्छत्। गालजातीया एवाधुना फरासीजातीया इति व्यपदिश्यन्ते। प्राचीनतमादेव कालादेतेषां चिकित्सातन्त्रे नैपुण्यं विश्वविदितम्। ग्यालेन् (Galen) गालवस्य महर्षेः क्षेत्रजमपत्यम्, वैद्यवंशस्य च कूटस्थः पुरुषः।

[ धन्वन्तरिरपि तस्मिन्नेव गालदेशे समुत्पन्नः। परं धन्वन्तरिस्तु न खलु पुरुषस्यैकस्य संज्ञा। M. Dumas, M. Danteris च—कारणविशेषवशेन नाम्नोरनयोः संयोगेन धन्वन्तरिसंज्ञा निष्पन्ना। ]

(६) ऋष्यशृङ्गः—सालोनिकादेशस्य प्रतिनिधिः। एतस्यावबोधार्थं भाषाविज्ञानशास्त्रस्य कतिचित् सूत्राणि विज्ञेयानि। सालोनिशब्दात् स्वार्थिककप्रत्ययेन सालोनिकशब्दो निष्पद्यते। सालोनिश्च रूपान्तरं भजमानो यथाक्रमं सारणि हारणि ततश्च हारिणः संवृत्तः। हारिणस्तावद् हरिणस्यापत्यम् ऋष्यशृङ्गः। नस्य रत्वं सस्य च हत्वं भाषाविज्ञानस्य प्राथमिकसूत्रसिद्धम्, अतो नात्र प्रमाणोपन्यासेन प्रयोजनम्।

विपश्चितां यत् पुरा सनकादयोऽपि महर्षयः संसारभयात् समुद्विजमानाः परमकारुणिकं परमेश्वरं शिवं शरणमुपगतास्तत्प्रसादाय चिरं तपस्यामाचरन्तो नृत्यावसाने डिण्डिमशब्दरूपं वरं प्राप्यापि किमिदं वचनमिति विमृशन्तो वर्णपरिभाषासमाम्नाययुगलं वरस्वरूपं समवगत्य तदवलम्बेन स्वस्वाभिमतानि तन्त्राणि सदुपदेशरूपाणि प्रणीय सकलसदुपकारं सम्पाद्य शान्तिमुपजग्मुः। यत्रेदमुक्तम्—

नृत्यावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारान्।
उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम्॥

इति तत्र परिभाषासमाम्नायः सर्वशास्त्रतत्त्वप्रतिपादकोऽपि पाणिनितन्त्रानुसारिभिर्भाष्यकारादिभिः शब्दमात्रपरतया व्याख्यात इति न तद्व्याख्यानं सर्वशास्त्रतत्त्वजिज्ञासूनां सर्वतन्त्रानुसारिणां हृदयानन्दाय इति समालोच्य" ग्रन्थकृता ग्रन्थोऽयं विनिर्मित इति। प्रथमतस्तावन्महाभाष्ये समुपलभ्यमानानां परिभाषाणां सर्वतन्त्रसाधारणत्वे गरीयान् वर्त्तते संशयः सचेतसाम्। यद्यपि "प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः" "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसम्प्रत्ययः" इत्येवमादीनां कासाञ्चन परिभाषाणां लौकिकन्यायसिद्धानामविशेषेणैव सर्वेषु शास्त्रेषु प्रसरः सन्दृश्यते तथापि "अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति" इत्यादीनामपि "अन् इन् अस् मन् ग्रहणानि इति च्छेदः, अर्थवता धनिना अनर्थकेन दरिद्रेणापि अनं जीवनाध्यापकम् इनं श्रेष्ठं वृद्धवचनमित्यर्थः। स्म अहङ्कारान्न गृह्यते च पुनः वारं वारं तानि अग्रहणानि तयोर्नाशं प्रयोजयन्ति, अन्तशब्दो नाशवचनस्तदयामर्थः अवलेपाद् (?) जीवनप्रदवृद्धवचनाग्रहणानि सधनाधनसाधारण्येन विनाशं प्रयोजयन्ति" इत्यादिक्लिष्टव्याख्यानपुरःसरं सर्वशास्त्रसाधारणत्वकल्पनं व्याख्यातुर्बुद्धिवैचित्र्यस्य परिचायकमपि न खलु लेशतोऽपि मनसस्तोषाय सहृदयानाम् इति नो बुद्धिरिति शिवम्।